।। श्रीकृष्णाय नमः ।।

।।श्रीमदाचार्यचरणकमलेभ्यो नमः।।

# ग्रन्थ-परिचय

कहा जाता है कि श्रीपुरुषोत्तमनामसहस्रम् ग्रन्थकी रचना श्रीमहाप्रभुने अपने ज्येष्ठात्मज गोस्वामी श्रीगोपीनाथ प्रभुचरणके लिए की थी। श्रीगोपीनाथ प्रभुचरणका यह नियम था कि वे समग्र श्रीमद्‌भागवतका परायण पूर्ण होनेपर ही प्रसाद ग्रहण करते थे। इस कठोर नियमके कारण न केवल दैनंदिन व्यवहारमें ही अपितु भगवत्सेवामें भी कुछ न कुछ असुविधा बनी ही रहती थी। फलतः श्रीमहाप्रभुने भगवान्‌के नामात्मक स्वरूप श्रीमद्भागवतके गहन समुद्रमें से चिन्तामणि रत्न जैसे एक सहस्र नामोका समुद्धरण किया और अपने ज्येष्ठात्मजको प्रदान किया।

इन भगवन्नामोंके चिन्तन-पठनसे श्रीमद्भागवतमें वर्णित सभी लीलाओंका चिन्तन-पठन सम्पन्न हो जाता है। श्रीमहाप्रभु आज्ञा करते हैं कि जो भी व्यक्ति श्रद्धापूर्वक चित्तको एकाग्र बना कर-इन नामोंके अर्थोका अनुसन्धान करते हुए इन भगवन्नामोंका पाठ करेगा उसे भगवान् श्रीगोविन्दके चरणोंकी प्राप्ति होगी ही। श्रीकृष्णमें भक्तिको बढानेके लिए भी इन नामोका चिन्तन-पठन उपयोगी सिद्ध होता है। इस श्रीपुरुषोत्तमनामसहस्रम् ग्रन्थका पाठ श्रीमद् भागवतके पाठके समान ही समझना चाहिये। "सहस्र यैस्तु पठितैः पठितं स्यात् शुकामृतम्।"

प्रस्तुत सस्करण वि. स. १९७४ में प्रकाशित संस्करणका ऑफसेट प्रोसेस द्वारा पुनर्मुद्रित रूप है। उक्त प्रथम सस्करणका सम्पादन श्रीमूलचन्द तुलसीदास तेलीवाला तथा श्रीभद्रशकर जयशकर शास्त्री ने किया था तथा प्रकाशक थे पेटलादी श्रीरणछोडदास बरजीवनदास श्रोफ। इन सभी महानुभावोका हम कृतज्ञतापूर्वक स्मरण करते हैं।

## ग्रन्थसङ्ग्रहपरिचयः ।

अस्य ग्रन्थस्य पुस्तकत्रयमुपलब्धम् । एकं शास्त्रिअवलरामभूधरजीतः प्राप्तम् । द्वितीयं श्रीवल्लभलालानाम्, शास्त्रिवसन्तरामतः प्राप्तम् । तृतीयं भट्टशंकरस्य । त्रयमपि टीकामूलयुतम्, प्रायः शुद्धम् । त्रयमपि क्वचिदत्यन्तं सन्दिग्धम्, यथाशक्ति संशोध्य मुद्रितमस्माभिः । भगवद्धर्मपरायण रणछोडदास वरजीवनदास श्रोफेत्यस्य द्रव्यसाहाय्येनायं ग्रन्थो मुद्रितः । प्रार्थयामहे चान्येपि श्रीमन्तो वैष्णवा एनमनुकुर्युरिति ।

---

## ग्रन्थकृत्परिचयः ।

१ श्रीमद्भागवतपाठे श्रीमद्गोपीनाथेन श्रीमद्विठ्ठलनाथेन वानुभूयमानं क्लेशमसहमानैराचार्यैः श्रीमन्महाप्रभुभिः पुत्रवात्सल्येनेदं नामसहस्रं श्रीमद्भागवतसागरात् हर्यावेशितचित्तेन समुद्धृतम् । अस्य पाठेन शुकामृतं श्रीमद्भागवतं पठितं भवति । श्रीमद्वल्लभाचार्याणां प्रादुर्भावस्तु संवत् १५३५ चैत्रकृष्णे हरिदिने शुभे ।

२ नामसहस्रस्य व्याख्यातारः श्रीमद्रघुनाथचरणास्तु श्रीमद्वल्लभाचार्याणां द्वितीयकुमारश्रीमद्विठ्ठलनाथानां पञ्चमसूनवः कार्तिकशुक्लद्वादश्यां संवत् १६११ वर्षे प्रादुर्भूताः । तेभ्यो विद्यादानं श्रीमद्गोकुलनाथैः कृतमिति परम्परातो ज्ञायते । तद्वंशे रसाब्धिकाव्यकर्तारः श्रीदेवकीनन्दनाः, श्रीसुबोधिनीलेखकृतश्च श्रीविठ्ठलेशात्मजश्रीवल्लभाः प्रादुर्भूताः । अन्यग्रन्थाः स्तोत्राणि च तेषां नयनगोचरीभवन्तीति । ग्रन्थमुद्रणप्रयोजनमन्ते भाषायां द्रष्टव्यम् ।

मुम्बई,<br>श्रावणशुक्लएकादशी<br>संवत् १९७४

मूलचन्द्र तेलीवाला.

## श्रीगोवर्धनेशो जयति ।



શ્રીપુરુષોત્તમસહસ્રનામની પ્રસ્તાવના બાબત સૌ વૈષ્ણવોને વિનંતિ છે કે શ્રીપુરુષોત્તમસહસ્રનામની પ્રસ્તાવના લખવાની હોય જ નહી. એ ગ્રંથજ એવો છે કે પ્રસ્તાવના લખી શકાય નહી. પણ આ ગ્રંથ છાપવાનું કારણ જાણવું આવશ્યક છે.

જ્યારે હું સંવત્ ૧૯૭૩ માં વૈશાખ માસમાં **શ્રીનાથદ્વાર** અમારા **શ્રીવહુજી-મહારાજ** સાથે ગયો હતો તે વખતે **મોટા અક્ષરનો ષોડશ ગ્રન્થનો** ગૂટકો **શ્રીગોસ્વામી શ્રીગોવર્ધનલાલજી** ટીકાયતને આપેલો, તે પરથી પોતેશ્રીએ સૂચવેલુ કે આવા મોટા અક્ષરનો **શ્રીપુરુષોત્તમસહસ્રનામ**નો ગૂટકો બહાર પડે તો ઘણાને ફાયદો થાય, પાઠ કરવાને સુગમ પડે, અને ઘણા કરશે, તેથી જોકે તેવા મોટા ટાઈપમાં આ છાપવામાં આવ્યો નથી, પણ આમાં **શ્રીરઘુનાથજીની નામ-ચન્દ્રિકા** ટીકા સાથે લેવાનું ભાઈ મૂલચંદ્ર તેલીવાલાએ જણાવવાથી તે કામ હાથમાં લીધું, અને તેમની મદદથી આ છાપ્યું છે. ઉમેદ છે કે વખત અને સંજોગો અનુકૂલ હશે તો આવતી સાલ હજી પણ **શ્રીટીકાયતની આજ્ઞાનુસાર** મોટા ટાઈપમાં પાઠ કરવાનું આજ પુસ્તક મૂલમાં છાપી બહાર પાડી શકું તો તે **શ્રીટીકાયત શ્રીગોવર્ધનલાલજીની** કૃપાજ સમજવી, અને જે કાંઈ મારાથી બને છે તે હું નથી કરતો પણ મારા ગુરૂ શ્રીગિરિધરલાલબાવા દયા કરી જે કંઈ બુદ્ધિને પ્રેરે છે તેટલુંજ તેમની ઇચ્છાથી થાએ છે એમ માનું છું એજ. આશા છે કે સૌ આવી રીતે સસ્તા પુસ્તકો બહાર પાડશે, તો તે સૌને ઉપયોગના થશેજી.

| | |
|---|---|
| સંવત ૧૯૭૪ શ્રાવણ શુદ ૧૧<br>માધવ ભવન<br>ઠે. મુંબઈ કાંદાવાડી. | લી. સેવક,<br>દાસાનુદાસ<br>રણછોડદાસ વરજીવનદાસ પેટલાદી. |

श्रीकृष्णाय नमः

श्रीगोपीजनवल्लभाय नमः ।

श्रीमदाचार्यचरणकमलेभ्यो नमः ।

# श्रीपुरुषोत्तमनामसहस्रम् ।

## श्रीरघुनाथकृतनामचन्द्रिकाटीकासंवलितम् ।

---

व्रजस्त्रीविप्रयोगाग्निशमनाय य उत्थितः ।
दिनान्तेऽद्भुतजीमूतस्तच्छायाऽस्तु सदा मयि ॥ १ ॥

आचार्यचरणद्वन्द्वं भक्तिज्ञानाब्जभास्करम् ।
नमस्यामि मनःकर्मवाग्भिरन्तस्तमोपहम् ॥ २ ॥

यत्कृपादृष्टिवृष्टेन दैवदग्धोपि तत्क्षणात् ।
प्ररोहति निजेच्छाभिस्तं वन्दे कमपीश्वरम् ॥ ३ ॥

इह तावत्प्रथमं सकलनिगमकल्पपादपफलरूपश्रीभागवतशास्त्रस्य स्वल्पाक्षरैः सर्वपरिज्ञानार्थं तत्प्रतिपाद्यलीलाविशिष्टश्रीकृष्णसहस्रनामानि विवक्षवो वस्तुनिर्देशरूपं मङ्गलमाचरन्त्याचार्याः पुराणपुरुष इति ।

**पुराणपुरुषो विष्णुः पुरुषोत्तम उच्यते ।**
**नाम्नां सहस्रं वक्ष्यामि तस्य भागवतोद्धृतम् ॥ १ ॥**

गीतायामन्यत्रापि पुराणो यः पुरुषः स एव पुरुषोत्तमपदवाच्यः, सोऽत्र श्रीकृष्ण एव, तस्य नाम्नां सहस्रं श्रीभागवतशास्त्रादुद्धृत्य वक्ष्यामीत्यर्थः ॥ १ ॥

प्रतिबन्धबाहुल्यात् तन्निवृत्त्यर्थं पुनर्नतिरूपं मङ्गलमाचरन्ति यस्येति ।

**यस्य प्रसादाद्वागीशाः प्रजेशा विभवोन्नताः ।**
**क्षुद्रा अपि भवन्त्याशु श्रीकृष्णं तं नतोस्म्यहम् ॥ २ ॥**

क्षुद्रा अपि यस्य प्रसादाद्वागीशाः प्रजेशाः विभवेन ऐश्वर्येण उन्नताः प्रवृद्धाश्च, आशु शीघ्रमेव भवन्ति, तं श्रीकृष्णं नतोऽस्मीति सम्बन्धः ॥ २ ॥

लीलातन्निबन्धननाम्नामानन्त्यमाहुः अनन्ता इति ।

**अनन्ता एव कृष्णस्य लीला नामप्रवर्तिकाः ।**
**उक्ता भागवते गूढाः प्रकटा अपि कुत्रचित् ॥ ३ ॥**

भागवतशास्त्रे श्रीकृष्णस्य नामप्रवर्तिका लीला यद्यप्यनन्ता नास्त्यन्तो यासां ता उक्ताः, तादृश्योऽपि गूढाः क्वचिदभिप्रायवशात् कुत्रचित् प्रकटा अप्युक्ताः प्रकरणादिवशात् ॥ ३ ॥

लीलानामनन्तत्वात् कासाञ्चिद्गूढत्वात् तत्प्रतिपादनामभिः शुकामृतपरिज्ञानाप्रसक्तौ यावल्लीलानामपठेन सकलचारितार्थ्यं तावन्त्येव प्रतिजानते अत इति ।

**अतस्तानि प्रवक्ष्यामि नामानि मुरवैरिणः ।**
**सहस्रं यैस्तु पठितैः पठितं स्याच्छुकामृतम् ॥ ४ ॥**

उक्तहेतोर्नामभिः सहस्रसंख्याकैः पठितैः शुकामृतं पठितं भवति, तान्येव वक्ष्यामीत्यर्थः ॥ ४ ॥

'संसारसर्पदष्टस्य नष्टचेष्टैकभेषजम् । कृष्णेति वैष्णवं मन्त्रं श्रुत्वा मुक्तो भवेन्नरः' । 'मन्त्रोऽप्येकस्तस्य नामानि यानि' इत्यादिवाक्यैर्नाम्नां मन्त्ररूपत्वात्तस्य च ऋष्यादिकमाहुः कृष्णेत्यारभ्य सिद्धिः शरणसंस्मृति'रित्यन्तेन ।

**कृष्णनामसहस्रस्य ऋषिरग्निर्निरूपितः ।**
**गायत्री च तथा छन्दो देवता पुरुषोत्तमः ॥ ५ ॥**
**विनियोगः समस्तेषु पुरुषार्थेषु वै मतः ।**
**बीजं भक्तप्रियः शक्तिः सत्यवागुच्यते हरिः ॥ ६ ॥**
**भक्तोद्धरणयत्नस्तु मन्त्रोऽत्र परमो मतः ।**
**अवतारितभक्तांशः कीलकं परिकीर्तितम् ॥ ७ ॥**
**अस्त्रं सर्वसमर्थश्च गोविन्दः कवचं मतम् ।**
**पुरुषो ध्यानमत्रोक्तः सिद्धिः शरणसंस्मृतिः ॥ ८ ॥**

ऋष्यादिज्ञानस्य जपादिष्वावश्यकत्वादज्ञाने दोषश्रवणात्, तथाचोक्तं छन्दोगैः 'यो ह वा अविदितार्षेयच्छन्दोदैवतब्राह्मणेन मन्त्रेण यजति याजयति वे'त्यादिना । अत्राग्निः स्वयमेव, छन्दस्सु गायत्र्याः प्राधान्याच्छ्रीभागवतस्य तद्रूपत्वात् तच्छन्दस्कत्वं 'गायत्री छन्दसामह'मिति । भक्तप्रियो भगवानेव 'यो मद्भक्तः स मे प्रियः' इत्यादिवाक्यात्, सत्यवाग्रूपः प्रणवरूपः, भक्तोद्धरणं भक्तक्लेशनिवृत्तिस्तत्र यत्नो यस्य, अवतारितः प्रकटीकृतः भक्तानामंशो येन ध्यानं ध्येयश्च वस्त्वित्यर्थः, कर्मणि ल्युट् । पुरुषः पुरुषोत्तमः 'श्रीकृष्णः शरणं ममे'ति नैरन्तर्येण स्मृतिः संस्मृतिः ॥ ५–८ ॥

अथ जप्यमाह । आदौ सर्वशास्त्रार्थरूपं वक्ष्यमाणसर्वनामप्रतिपाद्यवाचकं फलरूपं नामाह श्रीकृष्ण इति ।

**श्रीकृष्णः सच्चिदानन्दो नित्यलीलाविनोदकृत् ।**
**सर्वागमविनोदी च लक्ष्मीशः पुरुषोत्तमः ॥ ९ ॥**

सर्वनामप्रतिपाद्यवाचकं त्विदमेव, परमब्रह्मवाचकत्वात् । तदुक्तमुद्योगे 'कृषिर्भूवाचकः शब्दो णश्च निर्वृतिवाचकः । तयोरैक्यं परं ब्रह्म कृष्ण इत्यभिधीयते' । श्रीकृष्णावतारकथोपक्रमे श्रीविष्णुपुराणेप्युक्तं 'यदोर्वंशं नरः श्रुत्वा सर्वपापैः प्रमुच्यते । यत्रावतीर्णं विष्ण्वाख्यं परं ब्रह्म नराकृती'ति । श्रीभागवतेपि *'कृष्णस्तु भगवान् स्वयं'मिति* । **श्रीकृष्ण** *इत्यारभ्य* **श्रीमद्भागवतागम** इत्यन्तेन यानि नामानि उक्तानि तानि गूढलीलोरत्वैवेति ज्ञायते । अत एव प्रथमस्कन्धे स्फुटं मूलार्थैक्यं नोपलभ्यते । तानि च प्रथमस्कन्धविषयकाण्येव । यद्वा । श्रीकृष्णस्य स्वरूपप्रतिपादकान्येवैतानि नामानि । यद्वा । 'जन्माद्यस्य यतोऽन्वयादितरतश्चे'-त्येतदर्थकं **श्रीकृष्ण** इति नाम ज्ञेयम् । तथैवोपपत्तेः । **संचिदानन्द** इति । 'सद्भावे साधुभावे च सदित्येतत्प्रयुज्यते । प्रशस्ते कर्मणि तथा सच्छब्दः पार्थ युज्यते । यज्ञे तपसि दाने च स्थितिः सदिति चोच्यते । कर्म चैव तदर्थीयं सदित्येवाभिधीयते' इत्यनेन सच्छब्दार्थः सर्वोप्यत्र ज्ञेयः । चेतनं चित्स्वप्रकाशं ज्ञानं, आनन्दः स्वरूपं, सच्चिद्भ्यां विशिष्ट आनन्दः सच्चिदानन्दः सच्चिदानन्दविग्रह इत्यर्थः । अत्र चिच्छब्देन ज्ञानाभिधानात् तेना'र्थेष्वभिज्ञ' इत्येतदर्थकमिदं नाम ज्ञेयम् । भगवज्ज्ञानं तु सदानन्दसहितमेवेति तयोरप्युक्तिः । **नित्यलीलाविनोदकृदिति** । नित्यो यो लीलाविनोदस्तं करोति प्रकटयतीति तथा, नित्यलीलाया वा विनोदकृत्, नित्ये लीलादौ लीलावसरे वेणुना भक्तप्रेरणकृदिति वा, 'स्वरा'डित्येतदर्थकमिदं नाम ज्ञेयम् । **सर्वागमविनोदी** चेति । सर्वे ये आगमास्त एव विनोदो यस्य, 'निःश्वसितमस्य वेदा' इति वाक्यात् । सर्वेष्वागमेषु यो विनोदस्तत्तद्देवतोपासनार्थं विविधधर्मोपदेशस्तद्वानिति वा, 'वेदैश्च सर्वैरहमेव वेद्य' इति वाक्यात् । 'येप्यन्यदेवताभक्ता यजन्ते श्रद्धयान्विताः, तेऽपि मामेव कौन्तेय यजन्त्यविधिपूर्वकं'मित्यादिवाक्याच्च तद्वत्त्वं स्वस्यैवेति । यद्वा । सर्वैरागमैर्यो वेः कालस्य नोदः प्रेरणं 'यावज्जीवमग्निहोत्रं जुहोती'त्यादिभिः कालव्याप्तं तद्वानित्यर्थः । 'तेने ब्रह्म हृदा य आदिकवये' इत्येतदर्थकमिदं नाम ज्ञेयम् । **लक्ष्मीश** इति । लक्ष्म्याः कान्तिरूपाया विभूतिरूपायाश्चेश इत्यर्थः । लक्ष्म्याः सर्वमोहकत्वात्तत्सम्बन्धित्वेन 'मुह्यन्ति यत्सूरयः' इत्येतदर्थकमिदं नाम ज्ञेयम् । **पुरुषोत्तम** इति । पुरुषेषु ब्रह्मादिषूत्तमः सर्वोपास्यत्वात् । कर्मधारये तूत्तमशब्दस्य पूर्वनिपातः स्यात्, षष्ठीतत्पुरुषस्य 'न निर्धारण' इति निषेधात् । वस्तुतस्तु भगवति जात्यादिभिर्निर्धारणासम्भवात् सा सम्बन्धषष्ठ्येवेति षष्ठीतत्पुरुष एव । यद्वा । पुरुषादक्षराद्युत्तमः, 'यस्मात् क्षरमतीतोऽहमक्षरादपि चोत्तमः । अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः' इति वाक्यात्, पञ्चमी योगविभागात् समासो ज्ञेयः । 'तेजोवारिमृदां यथा विनिमयो यत्र त्रिसर्गो मृषा धाम्ना स्वेने'त्येतदर्थकमिदं नाम ज्ञेयम् ॥ ९ ॥

**आदिकालः सर्वकालः कालात्मा माययावृतः ।**
**भक्तोद्धारमयत्नात्मा जगत्कर्ता जगन्मयः ॥ १० ॥**

आदिकाल इति । आदिश्वासौ कालश्चेति । यद्वा । पूज्यमानपदार्थेष्वादिः कालो यस्य । तथा च श्रुतिः 'सर्वे निमेषा जज्ञिरे विद्युतः पुरुषादधि । कला मुहूर्ताः काष्ठाश्चाहोरात्राश्च सर्वश' इति, स्मृतिरपि 'यतः सर्वाणि भूतानि भवन्त्यादियुगागमे । यस्मिंश्च प्रलयं यान्ति पुनरेव युगक्षय'इति । अन्यकालस्य जन्यत्वेन कुहकसम्बन्धेप्यादिकालस्य परमेश्वररूपत्वात् तत्सम्बन्धाभावेन 'सदा निरस्तकुहक'मित्येतदर्थकमिदं नाम ज्ञेयम् । सर्वकाल इति । ..र्वः आदिमध्यान्तरूपः स चासौ कालश्चेति, अत एव भगवताप्युक्तं 'अहमादिश्च मध्यं च भूतानामन्त एव चे'ति । सर्वं कलयतीति, 'कलयति जगदेष कालोऽनन्त' इतिवाक्यात् । यद्वा । सर्वं च तत् कं सुखं च आसमन्तालाति आदत्त इति, 'सच्च त्यच्चाभव'दिति श्रुतेः । सर्वपदेन सत्यरूपस्य विवक्षितत्वात् तादृशकालरूपप्रतिपादकं 'सत्यं परं धीमही' त्येतदर्थकमिदं नाम ज्ञेयम् । कालात्मेति । काल आत्मा स्वरूपं यस्य, 'कालः कलयतामहम्' 'कालोऽस्मि लोकक्षयकृत्प्रवृद्धः' 'अहमेवाक्षयः कालः' इत्यादिवचनात् । यद्वा । कालो रुद्रः स आत्मा अहङ्काररूपो यस्य। यद्वा। 'यदा यदा हि धर्मस्य ग्लानि'रित्यादिवाक्यात् काले धर्मसत्पीडाकाले आत्मा अवतारो यस्य । 'धर्मः प्रोज्झितकैतवोत्र परम' इत्येतदर्थकं नाम ज्ञेयम् । माययावृत इति । मायया अविद्यया श्रिया वा वृतः सेव्यत्वेन स्वीकृत आवृत इति वा, अक्षरपरब्रह्मणोर्मध्येऽन्तरायभूतत्वात् । यद्वा । मायया आवृतः अस्पष्ट इति । 'निर्मत्सराणां सता'मित्येतदर्थकमिदं नाम ज्ञेयम् । भक्तोद्धारप्रयत्नात्मेति । भक्तानामुद्धरणमुद्धारस्त्रिविधदुःखदूरीकरणम्, तदर्थो यः प्रयत्न उद्यमस्तत्र आत्मा अन्तःकरणं यस्य । अथवा । भक्तोद्धाराय प्रयत्नरूपः, अतः साधनं भगवानेवेति भावः । 'वेद्य वास्तवमत्र वस्त्वि'त्येतदर्थकमिदं ज्ञेयम् । जगत्कर्तेति । जगतः स्थावरजङ्गमरूपस्य कर्ता, तदुपादानगोचरापरोक्षज्ञानचिकीर्षाप्रयत्नवानित्यर्थः । यद्वा । घटपटादिष्वपि साक्षात्कर्ता कुलालादिवत्, न तु नैयायिकादिवत् क्षित्यादिमात्रकर्तृत्वेनेति । तथाच श्रुतिस्मृतिनिचयोपि 'यतो वा इमानि भूतानि जायन्ते' 'ऋषयः पितरो देवा महाभूतानि धातवः । जङ्गमाजङ्गमं चेदं जगन्नारायणोद्भवम्' । 'अहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्तते' इत्यादि । अत्र सर्वजगत्कर्तृत्वोक्त्या भक्तानां सकलवाञ्छितार्थकरणात् 'शिवद'मित्येतदर्थकमिदं नाम ज्ञेयम् । जगन्मय इति । पूर्वं कारणरूपत्वमुक्तमिदानीं कार्यरूपत्वमपि तस्यैवेति जगन्मयत्वं, अभेदे मयट् । तथा च श्रुतिः 'पुरुष एवेद९ सर्वम्' 'ब्रह्म विश्वमिदं जगत्' 'मत्तः परतरं नान्य'दिति गीतायाम्, ज्योतींषि विष्णुर्भुवनानि विष्णुर्वनानि विष्णुर्गिरयो दिशश्च । नद्यः समुद्राश्च स एव सर्वो यदस्ति यन्नास्ति च विप्रवर्ये'त्यादिविष्णुपुराणवचनाच्च । अत्र भगवत एव जगद्रूपत्वोक्त्या भक्तानामपेक्षितभगवद्रूपस्फूर्तेः सर्वत्र सुलभत्वात् 'तापत्रयोन्मूलन'मित्येतदर्थकमिदं नाम युक्तं ज्ञेयम् ॥ १० ॥

**नामलीलापरो विष्णुर्व्यासात्मा शुकमोक्षदः ।**
**व्यापिवैकुण्ठदाता च श्रीमद्भागवतागमः ॥ ११ ॥**

नामलीलापर इति । नामप्रवर्तिका लीला नामलीला तत्परस्तन्निष्ठ इत्यर्थः । नामलीले परे उत्कृष्टे यस्येति वा, नामलीले पिपर्ति पूरयति वा, ताभ्यां पूर्ण इति वा नामलीलापरः । नाम्नां तूत्कृष्टत्वं सर्वत्र श्रूयते । तदुक्तं बृहन्नारदीये 'हरेर्नामैव नामैव नामैव मम जीवनम् । कलौ नास्त्येव नास्त्येव नास्त्येव गतिरन्यथा' । पद्मपुराणेपि 'अनन्यगतयो मर्त्या भोगिनोपि परन्तप । ज्ञानवैराग्यरहिता ब्रह्मचर्यादिवर्जिता । सर्वधर्मोज्झिता विष्णोर्नाममात्रैकजल्पकाः । सुखेन यां गतिं यान्ति न तां सर्वेपि धार्मिकाः' । पुराणान्तरपि 'नाम्नोस्ति यावती शक्तिः पापनिर्दहने हरेः । तावत्कर्तुं न शक्नोऽति पातकं पातकी नरः' इत्यादिबहून्येव वचनानि सन्ति, तानि सर्वाणि ग्रन्थविस्तरभयान्नेह लिख्यन्ते । लीलानामप्युत्कृष्टत्वं श्रूयते । तदुक्तं भगवता 'जन्म कर्म च मे दिव्यमेवं यो वेत्ति तत्त्वतः । त्यक्त्वा देहं पुनर्जन्म नैति मामेति सोऽर्जुन' इति । 'चरितं रघुनाथस्य शतकोटिप्रविस्तरम् । एकैकमक्षरं प्रोक्तं महापातकनाशन'मिति वाल्मीकिरपि, अस्मिन्नर्थे श्रुतयोपि 'विष्णोर्नु कं वीर्याणि प्रवोचम्' 'विष्णोः कर्माणि पश्यत यतो व्रतानि पस्पशे'इत्यादि । एवं सर्वोत्तमनामलीलाप्रवर्तक इत्यर्थः । 'श्रीमद्भागवते महामुनिकृते किं वा परै'रित्येतदर्थकमिदं नाम ज्ञेयम्, नामलीलाप्रतिपादकश्रीभागवताभिधानात् । विष्णुरिति । विषेर्व्यापकत्ववाचिनो नुप्रत्ययान्तस्य रूपम् । वेवेष्टि व्याप्नोति विश्वं विष्णुरिति, देशतो वस्तुतश्चापरिच्छेद्य इत्यर्थः । व्यापकत्वे श्रुतिरपि, 'अन्तर्बहिश्च यत्सर्वं व्याप्य नारायणः स्थित' इति । यद्वा । विश प्रवेशन इत्यस्य नुप्रत्ययान्तस्य रूपम् । यथोक्तं विष्णुपुराणे 'यस्मात्सर्वमिदं विश्वं तस्य शक्त्या महात्मनः । तस्मादेवोच्यते विष्णुर्विशेर्धातोः प्रवेशना'दिति । तथैव वाराहेऽपि, 'विशप्रवेशने धातोस्तत्र नुप्रत्ययादनु विष्णुर्यः सर्ववेदेषु परमात्मा सनातन' इति । 'ईश्वरः सद्यो हृद्यवरुध्यतेऽत्र कृतिभिः शुश्रूषुभिस्तत्क्षणा'दित्येतदर्थकमिदं ज्ञेयम् । ज्ञापनशीलस्य सर्वत्रोपलब्धिः कृतिनां सुलभत्वात्सद्यो हृद्यवरोधो युक्त इति । व्यासात्मेति । व्यासः पराशरपुत्रः कृष्णद्वैपायनः, स आत्मा अवतारो यस्य, तस्यात्मेति वा । अष्टाविंशतिव्यासमध्ये अस्यैव मुख्यत्वात् । तथा चोक्तम् 'कृष्णद्वैपायनं व्यासं विद्धि नारायणं प्रभुम् । कोह्यन्यः पुण्डरीकाक्षान्महाभारतकृद्भवेत्' व्यासस्य वेदरूपवृक्षविस्तारस्यात्मा । तत्सारभूतफलमिति यावत् । तेन 'निगमकल्पतरोर्गलितं फल'मित्येतदर्थकमिदं पर्यवसितं नाम ज्ञेयम् । शुकमोक्षद इति । शुकाय मोक्षं मायाबन्धाभावं ददातीति । तच्च ब्रह्मवैवर्तादिषु स्फुटं श्रूयते । शुकस्तु मातृकुक्षेर्निर्गमं मन्यमानः पश्चाद्व्यासाग्रहात् साक्षाद्भगवन्तं मायाबन्धाभावं प्रार्थ्य निर्गत' इति । अत्र शुकस्य मोक्षो मायास्पर्शाभाव एव । 'शुकमुखादमृतद्रवसंयुत'मित्येतदर्थकमिदं नाम ज्ञेयम् । व्यापिवैकुण्ठदाता चेति । व्यापी व्यापको ब्रह्मात्मको ज्ञानघनः । स चासौ वैकुण्ठश्चेति, तस्य

दाता भक्तेभ्य इति । पुरुषोत्तमाधिष्ठितलोकस्य ज्ञानात्मकत्वमथर्वशिरउपनिषदि श्रूयते, 'वैकुण्ठभवनयोगं गमिष्यति तदिदं परं पुण्डरीकं विज्ञानघन'मिति, भगवानपि 'न तद्भासयते सूर्यो न शशाङ्को न पावकः । यद्गत्वा न निवर्तन्ते तद्धाम परमं ममे'ति । तादृशस्यैकान्तभक्तेभ्य एव दातेति भावः । चकारः सर्वनान्ते श्रूयमाणः **श्रीकृष्ण** इति इदं नाम समुच्चिनोति, यतस्तन्नामप्रपञ्चरूपत्वमेवान्यन्नाम्नामिति । 'पिबत भागवतं रस'मित्येतदर्थकमिदं नाम ज्ञेयम् । अत्र वैकुण्ठस्थितानन्दरसतुल्यत्वेन युक्तमेतदर्थकत्वमिति भावः । **श्रीमद्भागवतागम** इति । भगवल्लीलाप्रतिपादकत्वेन 'धर्मः प्रोज्झितकैतव' इत्यादिना सर्वशास्त्रापेक्षयोत्कृष्टत्वेन च, श्रीमत् शोभायुक्तं यद्भागवतं तदागमः शास्त्रं यस्य । यद्वा । श्रीमद्भागवतमासमन्ताद्गमयति नारदोपदेशद्वारा व्यासान्तःकरणे प्रकटितत्वात् । यद्वा । श्रीमद्भागवतस्य आगमः प्रादुर्भावो यस्मात्, तद्रूप इति वा । यद्वा । मदनं मदश्रिया मत् श्रीमत्, स एवोपादेयत्वेन भागो विद्यते यस्य, तादृशपुरुषेण आगमः न ज्ञायत इत्यर्थः । 'आलयं मुहुरहो रसिका भुवि भावुका' इत्येतदर्थकमिदं नाम ज्ञेयम् । अत्रैकोनविंशतिनाम्नां जन्माद्यस्येत्यारभ्य श्लोकद्वयार्थान्तर्गतत्वं यथासम्भवमूहनीयम् ॥ ११ ॥

इत ऊर्ध्वं निगमकल्पतरोरित्येतत्प्रतिपादनामाह **शुकवागमृताब्धीन्दु**रिति ।

**शुकवागमृताब्धीन्दुः शौनकाद्यखिलेष्टदः ।**
**भक्तिप्रवर्तकस्त्राता व्यासचिन्ताविनाशकः ॥ १२ ॥**

वागेवामृतं वागमृतं, शुकस्य वागमृतं शुकवागमृतं, तद्रूपो योऽब्धिः अब्धिसदृशं श्रीभागवतशास्त्रं गाम्भीर्यादिगुणैः तदिन्दुस्तत्सारभूत इत्यर्थः । यद्यपि समुद्रे इन्द्वतिरिक्तान्यपि रत्नानि सन्त्येव, तथापि बहुगुणाकरत्वात्, आह्लादकत्वाच्च तदुक्तिः । **शौनकाद्यखिलेष्टद** इति । नैमिषे श्रीभागवतश्रवणार्थं सूतागमनं शौनकप्रश्नादिकं केवलं भगवत्कृतमिति शौनकादीनामखिलस्यानल्पस्येष्टस्य भक्तियोगस्य सम्पन्नत्वात् तत्प्रद इत्यर्थः । **भक्तिप्रवर्तक** इति । शौनकादीनां सर्वपुराणेतिहासादिकश्रवणतः कर्मज्ञानादिसिद्धावपि महदनुग्रहैकलभ्यस्य भक्तियोगस्यासिद्धत्वात् एतच्छास्त्रश्रवणेन भक्तियोगस्यापि तेषु प्रवर्तकत्वात् तत्केवल भगवत्कृतमिति भक्तिप्रवर्तकत्वम्, भक्तेः प्रवर्तको भक्तिप्रवर्तक इति । **त्रातेति** । यतो भक्तिप्रवर्तकत्वमतस्त्रातृत्वं सर्वदुःखादिति युक्तमेव । यतो भक्तिमतः सर्वाशुभनिवृत्तेः । तथाचोक्तम्, 'न क्रोधो न च मात्सर्यं न लोभो नाशुभा मतिः । भवन्ति कृतपुण्यानां भक्तानां पुरुषोत्तम' इति । 'न वासुदेवभक्तानामशुभं विद्यते क्वचित् । जन्ममृत्युजराव्याधिभय नाप्युपजायते' । सर्वाभीष्टदत्वमपि भक्तेः श्रूयते । तदुक्तं बृहन्नारदीये । 'यस्य देवे परा भक्तिर्विभौ नारायणाह्वये । तस्य स्यात् सफलं जन्म मुक्तिश्चैव करे स्थिता । धर्मार्थकाममोक्षाख्याः पुरुषार्था द्विजोत्तमाः । हरिभक्तिपराणां वै सम्पद्यन्ते न संशयः । यथा जलौकसां नित्यं जीवनं सलिलं मतम् । तथा समस्तसिद्धीनां जीवनं भक्तिरिष्यते । यथा भूमिं समाश्रित्य

सर्वे जीवन्ति जन्तव' । तथा भक्तिं समाश्रित्य सर्वकर्माणि साधयेत्' इत्येवमादीनि तत्रैवा न्यत्रापि बहून्येव वचनानि सन्ति, तथापि विस्तरभयान्न लिख्यन्ते सर्वाणि । **व्यासचिन्ताविनाशक** इति । तदुक्तं प्रथमस्कन्धे, 'तथापि बत मे देह्यो ह्यात्मा चैवात्मना विभु । असम्पन्न इवाभाति ब्रह्मवर्चस्यसत्तम ' इत्यादिना या व्यासचिन्ता निरूपिता नारदद्वारा, 'न यद्वचश्चित्रपदं'मित्यादिना 'समाधिने'त्यन्ता ता विशेषेण नाशयतीति ॥ १२ ॥

**सर्वसिद्धान्तवागात्मा नारदाद्यखिलेष्टदः ।**
**अन्तरात्मा ध्यानगम्यो भक्तिरत्नप्रदायकः ॥ १३ ॥**

**सर्वसिद्धान्तवागात्मे**ति । सर्वासां वाचां मध्ये सिद्धान्तरूपा या वाक् समाधिभाषा तद्रूप इत्यर्थ । यद्वा । पूर्वोक्तायामेव वाचि आत्मा निजं रूपं यस्येति वा, सर्वे ये सिद्धाः कपिलादयस्तेषामन्तर्यामिरूप इति वा । यतोऽस्मादधिको वक्तव्यपदार्थो नास्तीति । **नारदाद्यखिलेष्टद** इति । पूर्वजन्मनि दास्याः पुत्रत्वादतिनीचोऽपि, भगवद्भक्तिसम्बन्धात् पश्चाज्जन्मनि व्यासस्याप्युपदेष्टा जात इति, नारदस्य तदादीनां पर्वतर्षिप्रभृतीनां तत्सम्बन्धादेवाखिलेष्टदत्वमिति, अखिलान् सर्वान् इष्टानभिमतानर्थान् ददातीति च तथा ॥ **अन्तरात्मे**ति । अन्तरन्तःकरणं तद्रूप इत्यर्थ । समाधावन्तःकरणस्य प्राधान्यात् तद्रूपत्वमुक्तम् । विभूतिषु तद्रूपस्योक्तत्वात् । 'इन्द्रियाणां मनश्चास्मि भूतानामस्मि चेतने'ति । एवमुक्तेऽपि यदुत्कृष्टं तद्भगवदीयमेवेति ज्ञेयम् । तदपि भगवतैवोक्तम् । 'यद्यद्विभूतिमत् सत्त्वं श्रीमदूर्जितमेव वा । तत्तदेवावगच्छ त्वं मम तेजोंशसम्भव'मिति । **ध्यानगम्य** इति । ध्यानेन समाध्यावेशितचित्तेन गम्यो ज्ञेय इति यावत् । 'आसीनोप उपस्पृश्य मन प्रणिदधौ स्वयम् । भक्तियोगेन मनसि सम्यक् प्रणिहितेऽमले । अपश्यत् पुरुषं पूर्णं मायां च तदपाश्रया'मिति । **भक्तिरत्नप्रदायक** इति । अत्र भक्तिस्तत्साधनं श्रीभागवततत्संहितारूपमपि रत्नमुच्यते । तस्य प्रकर्षेण दायकः दातेत्यर्थ । भक्तिपदवाच्ये भक्तितत्साधने ज्ञेये ॥ १३ ॥

**मुक्तोपसृप्यः पूर्णात्मा मुक्तानां रतिवर्धनः ।**
**भक्तकार्यैकनिरतो द्रौण्यस्त्रविनिवारकः ॥ १४ ॥**

**मुक्तोपसृप्य** इति । मुक्ता भक्ता उप समीपे सृप्या गन्तुं योग्या यस्येति । मुक्तानां स्वयमुपसृप्य इति वा, यतो मुक्तानामपि परमगतिरूपत्वात् भजनार्थमेषामुपसृप्यो भवत्येवेति । **पूर्णात्मे**ति । पूर्णश्चासावात्मा चेति । यद्वा । पूर्णानां भक्तिरसैकपूर्णानामात्मेति वा, सर्वगुणैः पूर्ण आत्मा यस्येति वा । पूर्णत्वं व्यापकत्वम् । तदुक्तं 'मया ततमिदं विश्वं जगदव्यक्तमूर्तिने'ति । श्रुतिरपि 'वृक्ष इव स्तब्धो दिवि तिष्ठत्येकस्तेनेदं पूर्णं पुरुषेण सर्व'मिति । यद्वा । पूर्णात्मा मुक्तात्मा शुकरूप एवेति यावत् । अत एवोक्तम् । 'सर्वनिर्वृत्तिनिरतः सर्वत्रोपेक्षको मुनि'रिति । **मुक्तानां रतिवर्धन** इति । सर्वतो मुक्तानामपि भक्तानां स्वस्मिन् रतिं स्नेहम्, अलौकिकीं भक्तिं वर्धयति प्रकटयतीति तथा । अत एवोक्तं, 'आत्मारामाश्च मुनयो निर्ग्रन्था अप्युरु

मन्ये । कुर्वन्त्यहैतुकीं भक्तिमित्थम्भूतगुणो हरि'रिति । **भक्तकार्यैकनिरत** इति । भक्तानां कार्यरूप एवैकस्मिन्नर्थे नितरां रत उद्युक्त । यद्वा । भक्तानां यत्कार्यं भजनमेव तेनैव नितरां रमते रतिं मन्यत इति यावत् । अत एवोक्तं 'भक्त्यैव तुष्टिमभ्येति हरिरन्यद्विडम्बन'मिति, 'यो मद्भक्त स मे प्रिय' इत्यादिभिश्च । भक्तकार्यैकनिरतत्वं कुरुपाण्डवयुद्धे स्फुटमेव । **द्रौण्यस्त्रविनिवारक** इति । द्रोणेरश्वत्थाम्नोऽस्त्रस्य ब्रह्मशिरोनामकस्य विशेषेण निवारकः शमक इति यावत् । तदानीमर्जुनस्य सन्देहेन अर्थनिश्चयाभावात् व्याकुलचित्तस्यास्त्रज्ञापनं तन्निवारणोपायं च धृतवान् । तदुक्तं 'कृष्ण कृष्ण महाबाहो'इत्यादिना ॥ १४ ॥

**भक्तस्मयप्रणेता च भक्तवाक्परिपालकः ।**
**ब्रह्मण्यदेवो धर्मात्मा भक्तानां च परीक्षकः ॥ १५ ॥**

**भक्तस्मयप्रणेता** चेति । भक्तानां पाण्डवानां स्मयस्य विस्मयस्य प्रकर्षेण नेता प्रापकः । यतो भगवन्मुखाद्ब्राह्मणवधश्रवणं विस्मयहेतुर्भवत्येव । तदेवोक्तं 'नैनं पार्थार्हसि त्रातु'मित्यादिना । यद्वा । भक्तानां भीमार्जुनादीनां स्मयस्य गर्वस्य प्रणयनकर्ता तद्दूरीकर्तेति वा । अश्वत्थामापमाननं स्वकर्तृकमेवेति तेषां मनस्यागतत्वात् गर्वः सम्भावित एव । **भक्तवाक्परिपालक** इति । भक्ताया द्रौपद्या वाचां परितः सर्वतः पालको रक्षकः तथैव करणात् । यतः स्वोक्तवधमनादृत्य कृष्णावचनमङ्गीकृतवान् । तदुक्तं 'निरीक्ष्य कृष्णापकृतं गुरोः सुत'मित्यादिना । अत एवाग्रिमनामानि । **ब्रह्मण्यदेव** इति । ब्रह्मणि साधुः ब्रह्मण्यः, स चासौ देवश्चेति । यद्वा । ब्रह्मण्येषु दीव्यति स्वच्छन्दं क्रीडति, ब्रह्मण्यान् प्राप्नोति वा, ब्रह्मण्यैः दीव्यत इति वा, तान्स्तौतीति वा, तत्तेन स्तूयत इति वा । अत एव स्तुतौ 'नमो ब्रह्मण्यदेवायेति' । **धर्मात्मेति** । धर्म आत्मा स्वरूपं यस्य, धर्मस्य युधिष्ठिरस्यात्मेति वा, धर्मार्थमात्मा अवतारो यस्येति वा धर्मरक्षकत्वात् । तदुक्तं भगवतैव 'यदा यदा हि धर्मस्य ग्लानिर्भवति भारत । अभ्युत्थानमधर्मस्य तदात्मानं सृजाम्यहम् । परित्राणाय साधूनां विनाशाय च दुष्कृताम् । धर्मसंस्थापनार्थाय सम्भवामि युगे युगे' इति । धर्मे आत्मा चित्तं यस्येति वा । **भक्तानां च परीक्षक** इति । भक्तानां पाण्डवानां द्रौपद्या अपि परीक्षकः परीक्षाकर्ता, यतः पूर्वं ब्रह्मवधानुज्ञानं तत्परीक्षार्थमेव । अन्यथा अग्रे भगवानेव कथं वदेत् 'न हन्तव्य' इति ॥ १५ ॥

**आसन्नहितकर्ता च मायाहितकरः प्रभुः ।**
**उत्तराप्राणदाता च ब्रह्मास्त्रविनिवारकः ॥ १६ ॥**

**आसन्नहितकर्ता** चेति । आसन्नं शीघ्रमेव हितस्य कर्ता ब्रह्मवधान्निवर्तकत्वात् । यद्वा । आसन्नेषु अन्तरङ्गेषु हितकर्तेति वा । **मायाहितकर** इति । मायया लोकरीत्या धृतराष्ट्रादीनां हितं शोकापमार्जनरूपं करोतीति वा । यद्वा । प्रज्ञाचक्षुषोऽपि धृतराष्ट्रस्य पुत्रस्नेहमायया तस्यैवाहितकरः, सर्वक्षयकारकत्वात् । यद्वा । माया शक्तिः, तस्या स्थापिता अभयकरः स्वीयत्वात् । यद्वा मा श्री तत्सम्बन्धी योऽयं शुभावहो निधिः 'अयं शुभावहो

विधि'रिति कोशात्, तत्रासमन्ताद्धितकरः । तत्रैव पाणिग्रहणार्थमाहितकरो वा, ब्रह्मादिषु सत्स्वपि स्वयमेवोढत्वात् । प्रभुरिति । प्रकृष्टो भवति ब्रह्मादिभ्यः, प्रभवति सर्वकरणसमर्थत्वाद्वा प्रभुः । युधिष्ठिरप्रतिपक्षक्षयपूर्वकं राज्यं दत्तवानश्वमेधैश्च याजितवान् । अत एवोक्तं 'साधयित्वाऽजातशत्रोः स्वं राज्यं कितवैर्हृतम् । घातयित्वाऽसतो राज्ञः कचस्पर्शक्षतायुषः । याजयित्वाश्वमेधैस्त'मित्यादिना । उत्तराप्राणदाता चेति । उत्तरायाः वैराट्याः गर्भरक्षणेन प्राणान् दत्तवानिति तथा । यद्वा । अप्राणस्य गर्भस्य दाता, ब्रह्मास्त्रदग्धस्यापि पुनर्जीवितकरणात् । ब्रह्मास्त्रविनिवारक इति । ब्रह्मास्त्रस्य विशेषतो निवारको निवृत्तिकर्तेत्यर्थः । यतस्तस्याब्रस्यामोघत्वात्पुनरुद्भवो भवेदपीति विशेषतो निवारणम् । तदुक्तं 'यद्यप्यस्त्रं ब्रह्मशिर अमोघं चाप्रतिक्रियम् । वैष्णवं तेज आसाद्य समशाम्यद्भृगूद्वहे'ति ॥ १६ ॥

**सर्वतः पाण्डवपतिः परीक्षिच्छुद्धिकारणम् ।**
**गूढात्मा सर्ववेदेषु भक्तैकहृदयङ्गमः ॥ १७ ॥**

**सर्वतः पाण्डवपतिरिति** । सर्वस्मात् अनिष्टात् पाण्डवानां पतिः पालको रक्षक इति यावत् । यद्वा । सर्वतोप्यन्यस्मात्पाण्डवानामेव पतिः स्वामी, यतस्तेषामैहिकं पारलौकिकं च द्वयमपि भगवदेकनिबन्धनमिति । **परीक्षिच्छुद्धिकारणमिति** । परीक्षितः राज्ञः शुद्धेः पावित्र्यस्य कारणं हेतुरित्यर्थः । भगवता साक्षाद्रक्षितत्वात्, गर्भदोषदूरीकरणाच्छुद्धिहेतुत्वम् । यद्वा । अग्रे श्रीभागवतश्रवणात् भाविनीं शुद्धिं प्रति कारणत्वं रक्षाकरणेन, तदर्थमेव रक्षापि । अत एवाचार्यैरप्युक्तं 'वैयासकिः स भगवानथ विष्णुरात'मित्यत्र विष्णुरातपदव्याख्याने विष्णुना एतदर्थमेव रक्षितः । अन्यथा पुरुषार्थो न सिध्यतीति किं रक्षणेनेति । **गूढात्मा सर्ववेदेष्विति** । गूढः गुप्त आत्मा स्वरूपं सर्वेष्वपि वेदेषु यस्य स तथा । अत्रासमस्तपदद्वयस्याप्येकपदत्वं संज्ञायामविरुद्धमेव सर्वत्रापीति ज्ञेयम् । महाभारतीयसहस्रनामस्वपि तथैवाम्नातत्वात् । तद्यथा 'मुक्तानां परमा गतिः' 'श्रीमतां वर' इत्यादि तद्वदत्रापीत्यर्थः । यद्यपि 'वेदैश्च सर्वैरहमेव वेद्य' इत्यादिभिर्भगवानेव सर्वत्र वेदेषु पुराणेष्वपि प्रतिपाद्यत्वेन श्रूयते । तथाचोक्तं 'वेदे रामायणे पुण्ये पुराणे भारते तथा । आदावन्ते च मध्ये च हरिः सर्वत्र गीयत' इत्यादिभिः, तथापि विशिष्यवेदादिष्वपि स्वरूपयाथार्थ्यं नास्तीति तथोक्तम् । अत एव श्रूयतेपि 'यतो वाचो निवर्तन्ते' 'न तं विदाथ य इमा जजाने'ति । वेदस्यापि यथार्थस्वरूपापरिज्ञानं स एवाह । तथाहि । 'प्र तत्ते अद्य शिपिविष्ट नामार्यः शंसामि वयुनानि विद्वान् । तं त्वा गृणामि तवसमतव्यान् क्षयन्तमस्य रजसः पराके' इति । अर्थस्तु हे शिपिविष्ट! विष्णो! तत् लोकवेदप्रसिद्धं ते तव नाम अहं प्रशंसामि । कीदृशोसि त्वं? अर्यः मम स्वामी, पुनः कीदृशोमि? वयुनानि ज्ञानोपायान् विद्वान् जानानः तादृशं त्वामहं गृणामि स्तौमि, कीदृशं तवसं प्रवृद्धं सर्वतः, अहं कीदृशः? अतव्यान् अतवीयान् क्षुद्रः, पुनः कथंभूतं? अस्य रजसः प्रपञ्चस्य रञ्जनात्मकस्य पराके परस्तात् क्षयन्तं निवसन्तम् ।

मन्त्रान्तरमपि 'न ते महित्वमन्वश्नुवन्ती'त्यादि । भगवानप्याह 'मां तु वेद न कश्चने'ति गूढो गुप्तः आत्मा अभिप्रायो यस्येति वा । सर्वथा ज्ञानाप्राप्तौ भक्तेषु विशेषमाह भक्तैकहृदयङ्गम इति । भक्तानामेव यदेकं हृदयं तत्रैव गच्छति, तत्र स्थितिशील इत्यर्थः । यद्वा । भक्त एव एको हृदयङ्गमो यस्येति वा, भक्तैः सहैकहृदयं यथा स्यात्तथा गमो ज्ञानं यस्येति वा ॥ १७ ॥

**कुन्तीस्तुत्यः प्रसन्नात्मा परमाद्भुतकार्यकृत् ।**
**भीष्ममुक्तिप्रदः स्वामी भक्तमोहनिवारकः ॥ १८ ॥**

कुन्तीस्तुत्य इति । कुन्त्या स्तुत्यः स्तोतुं योग्यः भक्तैकहृदयङ्गमत्वादेव स्त्रियापि कुन्त्या स्तुत्यो भवत्येव स्वरूपज्ञानस्य जातत्वात् । स्तुतेश्च स्वरूपज्ञानस्य साध्यत्वादिति । प्रसन्नात्मेति । प्रसन्नः प्रसादयुक्तः आत्मा चित्तं यस्येति, रजस्तमोभ्यामकलुषितः स्वच्छः आत्मा अन्तःकरणं यस्येति वा, अवाप्तसर्वकामत्वाद्वा । परमाद्भुतकार्यकृदिति । परममुत्कृष्टं अद्भुतमाश्चर्ययुक्तकार्यं तस्य कर्तेत्यर्थः । आश्चर्यत्वं तु कार्यस्य तादृशमन्यैः कर्तुमशक्यत्वात् । तच्च भीष्ममुखाद्व्यासादिमहर्षीनपि सर्वधर्मान् श्रावितत्वात्, आश्चर्यकरणं यतस्त एव सर्वधर्मोपदेष्टारः कर्तारश्चेति । परमत्वं तु भ्रमराहित्यपूर्वककथनात्, भगवत्सन्निधानाद्वा । भीष्ममुक्तिप्रद इति । सर्वदुःखात् मोक्षं भीष्माय प्रददातीत्यर्थः । स्वामीति । स्वं भक्तरूपमेव विद्यते यस्येति, अत एवोक्तं 'ये भजन्ति तु मां भक्त्या मयि ते तेषु चाप्यह'मिति । भक्तमोहनिवारक इति । भक्तस्य युधिष्ठिरस्य यो मोहः धर्माज्ञानजनितो बन्धुवधात् शोकस्तस्य निवारकः । भीष्मद्वारा धर्मोपदेशतः शोकदूरीकरणात् ॥ १८ ॥

**सर्वावस्थासु संसेव्यः समः सुखहितप्रदः ।**
**कृतकृत्यः सर्वसाक्षी भक्तस्त्रीरतिवर्धनः ॥ १९ ॥**

सर्वावस्थासु संसेव्य इति । बाल्यादिषु सर्वावस्थासु सम्यक् कापट्यादिराहित्येन सेव्यः भजनीय इत्यर्थः । अवस्था च बाल्याद्युपलक्षितः कालविशेष एव । सम इति । सर्वेष्वपि कालेषु सर्वविकाररहितत्वात् समः । मया श्रिया सह वर्तत इति वा । सुखहितप्रद इति । सुखं च हितं च भक्तेभ्यः प्रकर्षेण ददातीति । सुखाय यद्धितं तत्प्रददातीति वा । कृतकृत्य इति । कृतं सम्पादितं भूभारहरणादिरूपं कृत्यं कार्यं येन । यद्वा । कृतं सर्वदा सिद्धमेव कार्यं यस्य, पूर्णकामत्वात् । तदुक्तं भगवता 'न मे पार्थास्ति कर्तव्यं त्रिषु लोकेषु किञ्चन । नानवाप्तमवाप्तव्यं वर्त्त एव हि कर्मणि' । सर्वसाक्षीति । सर्वं साक्षात्स्वरूपज्ञानेनैव पश्यतीति, स्वरूपेण पश्यतीति वा, 'साक्षाद्द्रष्टरि संज्ञाया'मि'तीन्प्रत्ययः । भक्तस्त्रीरतिवर्धन इति । भक्तानां युधिष्ठिरादीनां, स्त्रीणां कुन्त्यादीनां, रतिं भक्त्युद्रेकं वर्धयतीति वर्धनः । भक्ताश्च ताः स्त्रियश्च भक्तानां स्त्रिय इति वा, तदुक्तं 'न सेहिरे विमुद्यन्तो विरहं शार्ङ्गधन्वन' इत्यादिना ॥ १९ ॥

**सर्वसौभाग्यनिलयः परमाश्चर्यरूपधृक् ।**
**अनन्यपुरुषस्वामी द्वारकाभाग्यभाजनम् ॥ २० ॥**

**सर्वसौभाग्यनिलय** इति । सर्वं च तत् सौभाग्यं च, सर्वस्मादुत्तमसौभाग्यं वा तस्य निलयः सहजस्थानभूत इत्यर्थः । तत्र मूले स्फुटमेव द्वारवतीं प्रतिगच्छतो भगवतः । **परमाश्चर्यरूपधृगि**ति । परममाश्चर्यरूपं यद्रूपं अभूतोपमं तद्धारयतीति तथा, तदुक्तं 'सितातपत्रव्यजनैरुपस्कृत' इत्यादिना । **अनन्यपुरुषस्वामी**ति । नास्त्यन्यः प्रभवितुमन्यदपि किञ्चित्कर्तुं वा येषां पुरुषाणां द्वारकौकसां ते अनन्यपुरुषास्तेषां स्वामी प्रभुरित्यर्थः । पुरुषेत्युपलक्षणं, प्राणिमात्रस्य स्वामीति ज्ञेयम् । **द्वारकाभाग्यभाजन**मिति । द्वारकाया यद्भाग्यं सर्वसम्पत्तिस्तस्य भाजनं कारणं तद्भजत इति वा, तस्य स्थानमिति वा, स्वभोगार्थमेव तन्निर्माणात् ॥ २० ॥

**बीजसंस्कारकर्ता च परीक्षिज्ज्ञानपोषकः ।**
**सर्वत्रपूर्णगुणकः सर्वभूषणभूषितः ॥ २१ ॥**

**बीजसंस्कारकर्ता** चेति । बीजस्य परीक्षिद्देहस्य संस्कारं कर्मोपार्जितपूर्वदेहनिवृत्त्या भगवद्भजनयोग्यदेहसम्पत्तिस्तस्य कर्तेत्यर्थः । **परीक्षिज्ज्ञानपोषक** इति । मातृकुक्षिस्थस्य यज्ज्ञानमासीत्तस्य तदेव पुष्णातीति तथा, यथान्यस्य कुक्षिनिर्गतस्य गर्भदशापन्नं ज्ञानं तिरोभवति तथा तस्य नेति भावः । **सर्वत्रपूर्णगुणक** इति । सर्वत्रान्तर्बहिरपि पूर्णा अक्षया गुणा ऐश्वर्यादयो यस्य स तथा, स्वार्थे कः । अत एवोक्तं 'मातुर्गर्भगतो वीरः स तदा भृगुनन्दने'त्यादिना । **सर्वभूषणभूषित** इति । सर्वाणि च तानि भूषणानि च मुकुटकुण्डलादीनि तैर्भूषितो मण्डित इत्यर्थः । तदुक्तं 'अङ्गुष्ठमात्रममलं स्फुरत्पुरटमौलिन'मित्यादिना ॥ २१ ॥

**सर्वलक्षणदाता च धृतराष्ट्रविमुक्तिदः ।**
**सन्मार्गरक्षको नित्यं विदुरप्रीतिपूरकः ॥ २२ ॥**

**सर्वलक्षणदाता** चेति । सर्वेषामीक्ष्वाकुप्रभृतीनां प्रत्येकं प्रसिद्धानि यानि लक्षणानि प्रजापालनब्रह्मण्यत्वादीनि तेषां समुदितानामेकत्र परीक्षिति दातेत्यर्थः । **धृतराष्ट्रविमुक्तिद** इति । विदुरवचनैर्विशेषतो वैराग्योत्पादनद्वारा व्यासोपदेशतो वा धृतराष्ट्राय मुक्तिं ददाति दत्तवानित्यर्थः । **सन्मार्गरक्षको नित्य**मिति । अयमेव सतां मार्गो रीतिः, यद्गृहत्यागपूर्वकं भगवत्प्राप्तिसाधनं कार्यं तादृशस्य कार्यस्य रक्षकः पालकः । अत एव धृतराष्ट्रस्य गृहान्निर्यापणमिति, नित्यं नैमित्तिकक्रियाविशेषणत्वान्नपुंसकम् । ऐकपद्यं च यथा न विरुद्धं तथा प्रागेवोक्तम् । **विदुरप्रीतिपूरक** इति । विदुरस्य प्रीतिर्भक्तिस्तस्याः पूर्तिकर्तेत्यर्थः । विदुरस्य प्रीतिपूरेण कं सुखं यस्येति वा ॥ २२ ॥

**लीलाव्यामोहकर्ता च कालधर्मप्रवर्तकः ।**
**पाण्डवानां मोक्षदाता परीक्षिद्भाग्यवर्धनः ॥ २३ ॥**

**लीलाव्यामोहकर्ता** चेति । लीलयासुरमोहनाय मानुषानुकरणं, तयैव विशेषतः आसमन्तान्मोहक इत्यर्थः । यद्वा । लीला चेष्टा, तद्रूपो यो विः कालः 'योऽयं कालस्तस्य तेऽव्यक्तबन्धो'इत्युक्तत्वात् तेनैवासमन्तान्मोहकर्तेति । **कालधर्मप्रवर्तक** इति । कालस्य रौद्रस्य धर्मास्त्रिविधोत्पातास्तेषां प्रवृत्तिकर्तेत्यर्थः । उक्तं च 'व्यतीताः कतिचिन्मासास्तदा पाण्डुसुतो नृप, ददर्श घोररूपाणि निमित्तानि कुरूद्वह । कालस्य च गतिं रौद्रा'मित्यादिना । **पाण्डवानां मोक्षदात्रेति** । अर्जुनागमनानन्तरं यथा तेषां मोक्षस्तत्सर्वं मूले स्फुटमेव । **परीक्षिद्भाग्यवर्धन** इति । परीक्षिज्जन्मकाले ब्राह्मणैर्यान्युक्तानि राज्योपयोगीनि तानि सर्वाण्यपि राज्यसमये वर्धयतीति । तदुक्तं 'ततः परीक्षिद्द्विजवर्यशिक्षये'त्यादिना । परितः ईक्षते सर्वं जानातीति परीक्षित्, ईक्षेरौणादिक इत्प्रत्ययः ॥ २३ ॥

**कलिनिग्रहकर्ता च धर्मादीनां च पोषकः ।**
**सत्सङ्गज्ञानहेतुश्च श्रीभागवतकारणम् ॥ २४ ॥**

**कलिनिग्रहकर्ता** चेति । कलेर्निग्रहः स्ववशे स्थापनं तस्य कर्तेत्यर्थः । उक्तं च 'निजग्राहौजसा वीरः कलि'मित्यादिना । **धर्मादीनां च पोषक** इति । धर्मस्य वृषरूपस्य चतुष्पादत्वसम्पादनेन पोषकः पुष्टिकर्तेत्यर्थः । आदिपदेन ब्राह्मणपृथ्व्यादीनानाथानां च पोषक इत्यर्थः । तत्सर्वं मूले स्पष्टम् । **सत्सङ्गज्ञानहेतुश्चेति** । सतां भक्तानां दर्शनस्पर्शालापादिभिर्यः सङ्गः, तस्माद्यज्ज्ञानं तत्र हेतुः कारणं तादृशसामग्रीसम्पादकत्वात् । सत्सङ्गो ज्ञानहेतुर्यस्येति वा, उक्तं च 'तुलयाम लवेनापी'त्यादिना । **श्रीभागवतकारणमिति** । श्रियोपेतं भागवतं श्रीभागवतं, तस्य कारणं तत्प्रवृत्तिकारणमित्यर्थः, ब्राह्मणशापव्याजेन श्रीभागवतप्रवर्तकत्वादिति ॥ २४ ॥

**प्राकृतादृष्टमार्गश्च,**

**प्राकृतादृष्टमार्गश्चेति** । अदृष्टं कर्म तदधीनो मार्गो जायस्व म्रियस्वेत्येवंरूपः स प्राकृतो यस्मादिति । यद्वा । प्रकृतिकार्यं प्राकृतं देहादि, अदृष्टं प्रारब्धं, ते उभे अपि मार्जयति दूरीकरोतीति वा ।

इति प्रथमस्कन्धनामानि ॥

## ॥ अथ द्वितीयस्कन्धनामानि प्रारभ्यते ॥

श्रोतव्यः सकलागमैः ।

कीर्तितव्यः शुद्धभावैः स्मर्तव्यश्चात्मवित्तमैः ॥ २५ ॥

**श्रोतव्यः सकलागमैरिति** । सकलैः सर्वैरप्यागमैः सिद्धान्तैः सकलागमवर्तिभिर्वा श्रोतव्यः श्रोतव्यत्वेनाभिमतः । स च श्रीकृष्ण एव, अत एवोक्तं भगवता 'वेदैश्च सर्वैरहमेव वेद्य'इति । 'सर्वे वेदा यत्पदमामनन्ती'त्यादिश्रुतिरपि । प्रथमस्कन्धान्ते 'यच्छ्रोतव्यमथो जाप्य'मिति राज्ञा पृष्टः शुको यत्सिद्धान्तितवान् 'तस्माद्भारत सर्वात्मा भगवान् हरिरीश्वरः । श्रोतव्यः कीर्तितव्यश्च स्मर्तव्यश्चेच्छताऽभयमि'ति । तदर्थकानि त्रीण्येतानि नामानि ज्ञेयानि । **कीर्तितव्यः शुद्धभावैरिति** । शुद्धः कामक्रोधादिरहितो भावः अन्तःकरणवृत्तिर्येषां ते तादृशाः, तैः कीर्तितव्यः कीर्तनयोग्यः । अत एवोक्तं भगवता 'महात्मानस्तु मां पार्थ दैवीं प्रकृतिमाश्रिताः । भजन्त्यनन्यमनसो ज्ञात्वा भूतादिमव्ययम् । सततं कीर्तयन्तो मां यतन्तश्च दृढव्रता' इति । **स्मर्तव्यश्चात्मवित्तमैरिति** । आत्मानं भगवन्तं विदन्तीत्यात्मविदः, अतिशयितास्ते आत्मवित्तमाः, तैः स्मर्तव्यः स्मरणयोग्यः, अतिशयस्तु तेषु महदनुग्रह एव ॥ २५ ॥

अनेकमार्गकर्ता च नानाविधगतिप्रदः ।

पुरुषः सकलाधारः सत्त्वैकनिलयात्मभूः ॥ २६ ॥

**अनेकमार्गकर्ता चेति** । अनेकेषां मार्गाणां कर्ता प्रवर्तक इत्यर्थः । ते च मार्गा योगादयः । यद्वा । अनेकस्य स्वस्य यो मार्गः 'एको नैकः सवः कः किं'मिति नामपाठात् । **नानाविधगतिप्रद इति** । नानाविधाः प्रकारा येषु साधनेषु तैर्गतिर्ज्ञानं स्वर्गादिकं प्रकर्षेण ददातीति तथा । नानाविधा गतिर्वा साधननानात्वं प्रत्येकं कीर्तनस्मरणादिना ज्ञेयम् । **पुरुष इति** । परं ब्रह्म पुरं शरीरं वा तस्मिन् शेते इति पुरुषः, तदुक्तं महाभारते 'नवद्वारं पुरं पुण्यमेतैर्भावैः समन्वितम् । व्याप्य शेते महात्मा यत् तस्मात्पुरुष उच्यते' इति । यद्वा । अस्तेर्व्यस्ताक्षरयोगादासीत्पुरा पूर्वमेवेति विग्रहं कृत्वा व्युत्पाद्य पुरुष इति, 'पूर्वमेवाहमिहासमिति तत्पुरुषस्य पुरुषत्व'मिति श्रुतेः । पुरुषु भूरिषु उत्कर्षशालिषु सर्वेषु सीदतीति वा, पुरूणि सनोति ददातीति वा, पुरूणि भवनान्यनन्तकालस्य तं तं करोतीति वा, पूर्णत्वाद्वा, पुराणत्वाद्वा, सदनाद्वा पुरुषः । 'पूरणात्सदनाचैव ततोऽसौ पुरुषो मत' इति वचनात् । प्रकृते तु वैराज उच्यते 'वैराजो वै पुरुष' इति श्रुतेः । **सकलाधार इति** । सकलस्य ब्रह्माण्डदेहस्याधारः आश्रयोऽवष्टम्भको वा, सर्वाश्रयत्वं भगवतैवोक्तं 'मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इव । विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जग'दित्यादिना । श्रुतिश्च 'व्यस्तभ्ना रोदसी विष्णवेते दाधर्थ पृथिवीमभितो मयूखै'रित्यादिना । **सत्त्वैकनिल-**

यात्मभूरिति । सत्त्वस्यैवैकस्य निलय आश्रयभूत आत्मा चित्तं यस्य, तत्र भवति आविर्भवतीति तथा, तादृशैर्भाव्यत इति वा, तादृशान्भावयतीति वा, सत्त्वैकनिलयेन स्वरूपेण भवतीति वा ॥ २६ ॥

**सर्वध्येयो योगगम्यो भक्त्या ग्राह्यः सुरप्रियः ।**
**जन्मादिसार्थककृतिर्लीलाकर्ता पतिः सताम् ॥ २७ ॥**

**सर्वध्येय इति** । सर्वैर्भक्तैर्ध्येयो ध्यातुं योग्यः, सर्वत्र ध्येय इति वा, अत एवोक्तं भगवता 'यो मां पश्यति सर्वत्र सर्वं च मयि पश्यती'त्यादिना सर्वत्वेन ध्येय इति वा, उक्तं च 'तस्मात्सर्वात्मना राज'न्नित्यादिना । **योगगम्य इति** । योगो भक्तियोगस्तेनैव गम्यो ज्ञातव्यः, प्राप्तव्यो वा, तदुक्तं भगवता 'भक्त्या मामभिजानाति यावान् यश्चास्मि तत्त्वतः । भक्त्या त्वनन्यया शक्यः, अहमेवंविधोऽर्जुन । ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुं च परन्तपे'त्यादिना । **भक्त्याग्राह्य इति** । भक्त्या हेतुभूतया ग्राह्यं उपादेयं यस्येति, तदुक्तं भगवता 'पत्रं पुष्पं फलं तोयं यो मे भक्त्या प्रयच्छति । तदहं भक्त्युपहृतमश्नामि प्रयतात्मन' इति । यद्वा । भक्त्या आसमन्तात् ग्राह्यं स्वरूपं यस्येति । **सुरप्रिय इति** । सुरा देवा जीवास्तेषां प्रियः, तान् प्रीणाति, तैः प्रीयत इति वा, ते प्रिया यस्येति वा । **जन्मादिसार्थककृतिरिति** । जन्म आदिर्येषामायुरादीनां तेषां सार्थकत्वाय सफलत्वाय कृतिर्लीलाकरणं यस्येति । न भगवल्लीलाश्रयणं विना आयुरादीनि सप्रयोजकानि भवन्ति । अत एवोक्तं 'तज्जन्म तानि कर्माणी'त्यादि । यद्वा । जन्मादिसार्थकेषु कृतिर्लीला यस्येति, उक्तं च 'आयुर्हरति वै पुंसा'मित्यादिना । **लीलाकर्ता** । लीयते क्षिप्यतेऽनयेति लीला माया तस्या इलनं प्रेरणं तत्कर्तेत्यर्थः । तस्य आसमन्तात् कर्तेत्यर्थः, सृष्ट्यादिकर्तेति यावत् । तदुक्तं 'भूय एव विवत्सामि भगवानात्ममायये'त्यादिना । **पतिः सतामिति** । सतां सत्पुरुषाणां भक्तानां वा पतिः पालक इत्यर्थः । उक्तं च 'श्रियः पतिर्यज्ञपति'रित्यादिना ॥ २७ ॥

**आदिकर्ता तत्त्वकर्ता सर्वकर्ता विशारदः ।**
**नानावतारकर्ता च ब्रह्माविर्भावकारणम् ॥ २८ ॥**

**आदिकर्तेति** । आदिश्चासौ कर्ता चेति, आदेराकाशस्य कालस्य वा कर्तेति । 'तस्माद्वा एतस्मादात्मन आकाशः सम्भूत' इति श्रुतेः । आदेर्ब्रह्मणो वा । तदुक्तं 'स एव भगवांल्लिङ्गैस्त्रिभि'रित्यादिना । **तत्त्वकर्तेति** । तत्त्वानां प्रकृत्यादिचतुर्विंशतेः कर्तेति । तानि च तत्त्वानि सांख्यशास्त्रे प्रणीतानि 'मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त । षोडशकस्तु विकारो न प्रकृतिर्न विकृतिः पुरुष' इति । उक्तं च 'कालाद्गुणव्यतिकरा'दित्यादिना । **सर्वकर्तेति** । सर्वस्य व्यस्तसमस्तस्य कर्ता कारकः, सर्वः कुलालादिः कर्ता यस्मात्, सर्वरूपः कर्तेति वा । **विशारद इति** । विशिष्टा शारदा वाणी यस्येति, या विगतस्तिरस्कृतः शारदः शरच्चन्द्रो यस्मात्, येन वा, निपुण इति । **नानावतारकर्ता चेति** । नाना बहुविधा

ये अवतारा वराहादयः तेषां कर्ता कारक इत्यर्थः । तदुक्तं 'यत्रोद्यतः क्षितितलोद्धरणाये'त्यादिना । ब्रह्माविर्भावैककारणमिति । ब्रह्मणो हिरण्यगर्भस्य आविर्भाव उत्पत्तिस्तत्र कारणम्, 'हिरण्यगर्भः समवर्त्तताग्रे' इति श्रुतेः । ब्रह्मार्थो य आविर्भाव इति वा, तदुक्तं 'ब्रह्मणे दर्शयन् रूपमव्यलीकव्रतादृत' इत्यादिना ॥ २८ ॥

दशलीलाविनोदी च नानासृष्टिप्रवर्तकः ।
अनेककल्पकर्ता च सर्वदोषविवर्जितः ॥ २९ ॥

दशलीलाविनोदी चेति । दशसंख्याका लीलाः सर्गादयस्ताभिर्विनोदः क्रीडा यस्य, ताभिरेव वेः कालस्य नोदः प्रेरणं यस्येति वा, तदुक्तं 'अत्र सर्गो विसर्गश्चे'त्यादिना । नानासृष्टिप्रवर्तक इति । नानाविधाः सृष्टीः देवपितृमनुष्यादिरूपाः प्रवर्तयतीति तथा । तदुक्तं 'पुरुषोऽण्डं विनिर्भिद्ये'त्यादिना । अनेककल्पकर्ता चेति । अनेके ये कल्पा ब्राह्मपाद्मादयस्तेषां कर्ता प्रवृत्तिकर्तेत्यर्थः । तदुक्तं 'अयं तु ब्रह्मणः कल्प' इत्यादिना । सर्वदोषविवर्जित इति । सर्वे दोषा येभ्यो बन्धुभ्यो दुःखहेतुभ्यस्तेभ्यो विशेषतो वर्जितः, विदुरे तथा करणात् । तदुक्तं च 'चचार तीर्थानि भुवं त्यक्त्वे'त्यादिना ॥ २९ ॥

इति द्वितीयस्कन्धनामानि ।

---

## ॥ अथ तृतीयस्कन्धनामानि ॥

वैराग्यहेतुस्तीर्थात्मा सर्वतीर्थफलप्रदः ।
तीर्थशुद्धैकनिलयः स्वमार्गपरिपोषकः ॥ ३० ॥

वैराग्यहेतुरिति । विदुरस्य दुर्योधनादिवचनतो वैराग्योत्पादक इत्यर्थः । तदुक्तं च 'क एनमत्रोपजुहाव' इत्यादिना । तीर्थात्मेति । तीर्थस्वरूप इत्यर्थः । तीर्थस्यात्मा अधिष्ठेयो वा । सर्वतीर्थफलप्रद इति । सर्वेषां तीर्थानां फलं भगवद्दर्शनरूपं, तत्प्रददातीति तथा । तदुक्तं 'कालेन तावद्यमुनामुपेत्ये'त्यादिना । तीर्थशुद्धैकनिलय इति । तीर्थशुद्धो विदुरः स एवैको निलयोऽधिष्ठानं यस्येति । स्वमार्गपरिपोषक इति । स्वस्य यो मार्गो भक्तिमार्गः, स्वानां भक्तानां वा मार्गः सङ्गतिरूपः तस्य परितः पोषकः सम्पादक इत्यर्थः ॥ ३० ॥

तीर्थकीर्तिर्भक्तगम्यो भक्तानुशयकार्यकृत् ।
भक्ततुल्यः सर्वतुल्यः स्वेच्छासर्वप्रवर्तकः ॥ ३१ ॥

तीर्थकीर्तिरिति । तीर्थस्य षदर्याश्रमस्य कीर्तिर्यस्मादिति, तीर्थे कीर्तिर्यस्येति वा, तीर्थानि कीर्तिरूपाणि यस्येति वा । उक्तं च 'अहं प्रोक्तो भगवते'त्यादिना । भक्तगम्य इति । भक्तैरुद्धवादिभिः गम्यते प्राप्यत इति वा, भक्तानां गम्यो गमनयोग्यो देशो यद-

र्योश्रमरूपो यस्येति वा । भक्तानुशयकार्यकृदिति । भक्तानामनुशयो निरोधस्तदर्थं कार्यकृत् लीलाकर्तेत्यर्थः । भक्ततुल्य इति । भक्तास्तुल्याः सदृशा यस्येति, तदुक्तं 'नोद्धवोऽण्वपि मन्न्यून' इत्यादिना । यद्वा । भक्तास्तुल्याः सर्वत्र समा यस्येति । तथा च विष्णुपुराणे 'न चलति निजवर्णधर्मतो यः सममतिरात्मसुहृद्विपक्षपक्षे' इति । सर्वतुल्य इति । सर्वेषु तुल्यः सममतिरित्यर्थः, 'समोऽहं सर्वभूतेषु न मे द्वेष्योऽस्ति न प्रिय' इति भगवद्वचनात् । यद्वा । सर्वे तुल्यास्तोलनीयाः स्वस्वानुरूपफलदानार्थं यस्येति । स्वेच्छासर्वप्रवर्तक इति । स्वानां भक्तानां, स्वस्य वा इच्छया, सर्वस्य भक्तिदानादेः प्रवर्तकः, अर्थेहया सर्वान् प्रवर्तयतीति वा ॥ ३१ ॥

गुणातीतोऽनवद्यात्मा सर्गलीलाप्रवर्तकः ।
साक्षात्सर्वजगत्कर्ता महदादिप्रवर्तकः ॥ ३२ ॥

गुणातीत इति । गुणान् सत्त्वादीनतिक्रम्य इतः गतः, गुणाः अतीता येनेति वा, गुणानतिक्रम्य इतं ज्ञानं यस्येति वा । अनवद्यात्मेति । अनवद्यः अगर्ह्यः आत्मा अवतारो यस्य, अनवद्यानामात्मेति वा, अनवद्ये आत्मा चित्तं यस्येति । 'करोति कर्माणि कृतावतार' इत्यादिना । सर्गलीलाप्रवर्तक इति । सर्गः सृष्टिस्तद्रूपलीलायाः प्रवृत्तिकर्तेत्यर्थः । 'भगवानेक आसेदमग्र' इत्यादिना । साक्षात्सर्वजगत्कर्तेति । साक्षादन्यस्वरूपनिरपेक्षस्वरूपेणैव सर्वस्य स्थावरस्य जङ्गमस्य जगतः कर्तेत्यर्थः । भगवतः साक्षात्कर्तृत्वं कारणमिति तृतीयरूपत्वादेव । तथा च श्रुतयः 'पुरुष एवेदं सर्वम्, स वै सर्वमिदं जगत्, पादोऽस्येहाऽभवत्पुन'रित्यादयः । गीतायामपि 'अहं क्रतुरहं यज्ञः स्वधाहमहमौषध'मित्यादिना भगवद्रूपत्वमुक्तं 'जन्माद्यस्य यतोऽन्वयादितरतश्चे'त्याद्यप्यूहनीयम् । महदादिप्रवर्तक इति । महत् महत्तत्त्वं तदादि येषामहङ्कारादीनां तत्प्रवृत्तिकर्तेत्यर्थः । तदुक्तं 'ततोऽभवन्महत्तत्व'मित्यादिना ॥ ३२ ॥

मायाप्रवर्तकः साक्षी मायारतिविवर्धनः ।
आकाशात्मा चतुर्मूर्तिश्चतुर्धा भूतभावनः ॥ ३३ ॥

मायाप्रवर्तक इति । मायायास्त्रिगुणात्मिकायाः प्रवृत्तिकर्तेत्यर्थः । प्रवर्तनं प्रेरणं 'मयाध्यक्षेण प्रकृतिः सूयते सचराचर'मिति भगवद्वचनात् । साक्षीति । साक्षादव्यवधानेन पश्यतीत्यर्थः । 'साक्षाद्द्रष्टरि संज्ञाया'मितीन्प्रत्ययः । उक्तं च 'कालमायांशयोगेन भगवद्वीक्षितं नभ' इत्यादिना । मायारतिविवर्धन इति । पुंसां मायया गृहपुत्रादिषु रतिमासक्तिं विशेषेण वर्धयतीति, मायया अरतिं स्वस्मिन्नासक्त्यभावं वर्धयतीति, मायारतिविशेषेण वर्धयति छिनत्तीति वा । तदुक्तं 'यत्सानुबन्धे सती'त्यादिना । आकाशात्मेति । आकाश आत्मा देहो यस्य, 'आकाशशरीरं ब्रह्मेति' श्रुतेः । यद्वा । आसमन्तात् काशते

१ इन्दिवं सम इतिपाठः ।

स्वेन तेजसा दीप्तो भवतीति, तादृशं स्वरूपं यस्येति तथा । तदुक्तं 'स्मरन् विश्वसृजामीशो विज्ञापित'मित्यादिना । चतुर्मूर्तिरिति । चतस्रो मूर्तयो वासुदेवादयो यस्य, ब्रह्मक्षत्र विट्शूद्ररूपा मूर्तयो यस्मादिति वा । तदुक्तं 'मुखतो वर्तते ब्रह्मे'त्यादिना । चतुर्धेति । चतुःप्रकारं चतुर्धा, चतुर्णां वर्णानां या भिन्ना वृत्तयस्तत्तद्रूप इत्यर्थः, तत्र मूले सप्तम् । यः चतुरः पुरुषार्थान् धत्त इति वा । भूतभावन इति । भूतानि भावयति जनयतीति, वर्धयतीति वा, भूतैर्भाव्यते चिन्त्यते इति वा ॥ ३३ ॥

रजःप्रवर्तको ब्रह्मा मरीच्यादिपितामहः ।
वेदकर्ता यज्ञकर्ता सर्वकर्ताऽमितात्मकः ॥ ३४ ॥

रजःप्रवर्तक इति । रजसो रचनात्मकस्य गुणस्य प्रवर्तकः व्यतिकारकः प्रेरक इतियावत् । तदुक्तं 'तथार्थसूक्ष्माभिनिविष्टदृष्टे'रित्यादिना । ब्रह्मेति । बृहणत्वाद् ब्रह्मा स्वयम्भूस्तद्रूप इत्यर्थः । ब्रह्मेति नपुंसकं वा, तदुक्तं 'तल्लोकपद्मं स उ एव विष्णु'रित्यादिना । मरीच्यादिपितामह इति । मरीचिरादिर्येषां मरीच्यादीनां, तेषां पितामहः पितुः पितेत्यर्थः । ब्रह्मणः पितृत्वे स्वस्य पितामहत्वं युक्तमेव । 'पितृव्यमातुलमातामहपितामहा'इति निपातनात्साधुत्वम् । यद्वा । मरीच्यादीन् पितामहयति तत्तत्सदृशान् करोतीति वा, तेष्वपि स्रष्टृत्व सम्पादनादिति । वेदकर्तेति । वेदानां कर्तेति, कृद्योगलक्षणषष्ठीसमासः । वेदकर्तृत्वं श्रुतौ प्रसिद्धं 'तस्माद्यज्ञात्सर्वहुत ऋचः सामानि जज्ञिरे' इत्यादौ । यद्वा । वेदेभ्यो हेतुभूतेभ्यः कर्तेत्यर्थः । तदुक्तं 'भूयस्त्वं तप आतिष्ठ विद्यां चैव मदाश्रया'मित्यादिना । यज्ञकर्तेति । यज्ञानामग्निहोत्रादीनां कर्ता स्रष्टेत्यर्थः । तथा च श्रुतिः 'प्रजापतिर्यज्ञानसृजताग्निहोत्रं चाग्निष्टोमं च पौर्णमासीं चोक्थ्यामावास्यां चातिरात्र' चेत्यादि । यद्वा । यज्ञात् निमित्तभूतात् कर्तेति । 'यज्ञेन वै प्रजापतिः प्रजा असृजते'तिश्रुतेः । सर्वकर्तेति । सर्ववेदमयः कर्ता सर्वकर्तेति मध्यमपदलोपी समासः । तदुक्तं 'सर्ववेदमयेनेदमात्मने'त्यादिना । अमितात्मक इति । अमिता असंख्याता आत्मानः अवतारभेदा यस्येति, अमितः अपरिच्छिन्न इति वा, तदुक्तं 'एकं व्यभाक्षीदुरुधे'त्यादिना ॥ ३४ ॥

अनेकसृष्टिकर्ता च दशधासृष्टिकारकः ।
यज्ञाङ्गो यज्ञवाराहो भूधरो भूमिपालकः ॥ ३५ ॥

अनेकसृष्टिकर्ता चेति । अनेकैर्गुणैर्मिश्रितामिश्रितैः सृष्टिकर्तेत्यर्थः । दशधासृष्टिकारक इति । दशप्रकारं यथा स्यात्तथा सृष्टिकर्तेत्यर्थः । 'आद्यस्तु महतः सर्ग' इत्यारभ्य 'दशैते विदुराख्याता' इत्यन्तेन मूले स्पष्टम् । यज्ञाङ्ग इति । यज्ञा अङ्गान्यवयवा यस्येति, यज्ञाङ्गो वराहः । तदुक्तं हरिवंशे 'वेदपादो यूपदंष्ट्रः क्रतुहस्तश्चितीमुखः । अग्निजिह्वो दर्भरोमा ब्रह्मशीर्षो महातपाः । अहोरात्रेक्षणो दिव्यो वेदान्तश्रुतिभूषणः । आज्यनासः स्रुवातुण्डः सामघोषस्वनो महान् । धर्मसत्यमयः श्रीमान् कर्मविक्रमसत्क्रियः । प्रायश्चित्त

नखो घोरः पशुर्जानुर्महाभुजः । उद्गातान्त्रो होमलिङ्गः फलबीजमहौषधिः । वाय्वन्तरात्मा मन्त्रस्फिग्विकृतः सोमशोणितः । वेदीस्कन्धो हविर्गन्धो हव्यकव्यातिवेगवान् । प्राग्वंशकायो द्युतिमान् नानादीक्षाभिरर्चितः । दक्षिणाहृदयो योगी महासत्रमयो महान् । उपाकर्मोष्ठरुचकः प्रवर्ग्यावर्तभूषणः । नानाछन्दोगतिपथो गुह्योपनिषदासनः । छायापत्नीसहायो वै मेरुशृङ्गमिवोच्छ्रितः' । मूलेऽपि 'स्रुक्तुण्ड आसी'दित्यादिना स्पष्टम् । **यज्ञवाराह** इति । पूर्वोक्तयज्ञरूपो वाराहो वराहसम्बन्धी अवतारो यज्ञवाराहः, वराह एव वाराह इति स्वार्थेऽण् । **भूधर** इति । भुवं पृथ्वीं दंष्ट्राग्रेण धारयति धरतीति वा, तदुक्तं 'दंष्ट्राग्रकोट्या भगवंस्त्वया धृते'त्यादिना । **भूमिपालक** इति । भूमेः पालको रक्षकः । हिरण्याक्षादानीय पूर्ववत्स्थापनमेव भूमेः पालनं 'संस्थापयैनां जगता'मित्यादिना ॥ ३५ ॥

**सेतुर्विधरणो जैत्रो हिरण्याक्षान्तकः सुरः ।**
**दितिकश्यपकामैकहेतुसृष्टिप्रवर्तकः ॥ ३६ ॥**

**सेतु**रिति । सिनोति बध्नाति सर्वान् स्वस्वधर्मेष्विति सेतुः, मर्यादारूप इति वा, संसृतितरणहेतुत्वात् सेतुरिति 'सेतुर्विधरण एषां लोकानामसम्भेदाये'ति श्रुतेः । **विधरण** इति । विशिष्टं धरणं धारणं दंष्ट्राग्रेण यस्येति । वेः कालस्येति वा, वेः पक्षिराजस्य धरणं धृतिर्यस्मादिति वा । **जैत्र** इति । जयनशीलो जेत्रः जेत्र एव जैत्रः स्वार्थेऽण्प्रत्ययः । **हिरण्याक्षान्तक** इति । हिरण्याक्षस्य दैत्यस्यान्तको नाशकः । **सुर** इति । सुशोभनं राति ददातीति सुरः, दैत्यवधेन सर्वेभ्यो मङ्गलप्रदत्वात् । **दितिकश्यपकामैकहेतुसृष्टिप्रवर्तक** इति । दितिश्च कश्यपश्चेति, असुरपक्षस्य स्त्रीप्रधानत्वात् पूर्वप्रयोगार्हत्वं दितेः, योर्यः काम इच्छा, सा चासावेकश्चेति दितिकश्यपकामैक एव हेतुर्यस्यां सृष्टौ सा तथा, तस्याः प्रवर्तक इत्यर्थः । तदुक्तं 'दितिर्दाक्षायणी क्षत्त'रित्यादिना ॥ ३६ ॥

**देवाभयप्रदाता च वैकुण्ठाधिपतिर्महान् ।**
**सर्वगर्वप्रहारी च सनकाद्यखिलार्थदः ॥ ३७ ॥**

**देवाभयप्रदाता** चेति । देवेभ्य इन्द्रादिभ्यः अभयं भयाभावं प्रकर्षेण दत्तवानित्यर्थः । तदुक्तं 'तम एतद्विभो वेत्थे'त्यादिना । यद्वा । देवाद् रुद्रादभयं दितिगर्भार्थमिति तदपि मूले स्पष्टम् । **वैकुण्ठाधिपति**रिति । वैकुण्ठस्य लोकस्य विज्ञानघनस्याधिपतिः स्वामी । तदुक्तं 'त एकदा भगवतो वैकुण्ठस्ये'त्यादिना । **महा**निति । महपूजायामित्यस्य रूपं महान् पूज्य इत्यर्थः । वृद्धत्वस्य वा, 'महतो महीया'निति श्रुतेः । शब्दादिगुणरहितत्वान्निरतिशयसूक्ष्मत्वान्नित्यशुद्धबुद्धसर्वगतत्वादितिप्रतिबन्धकं धर्मजातं तर्कतोऽपि धर्तुमशक्यमत एव महानिति शङ्कराचार्याः । **सर्वगर्वप्रहारी** चेति । सर्वेषां भक्तानां यो गर्वोऽहङ्कारस्तस्य प्रकर्षेण हरणशीलः, यतः सनकादयोऽपि स्वनित्यमुक्ताभिमानेन भगवद्दन्ति गन्तुं प्रवृत्ता यद्वा एव, प्रतिबन्धो मूले स्पष्टः, प्रतिबन्धेन भगवद्दर्शनप्रत्यूहा-

हङ्कारापगमाद्यज्ञातं तदाह । **सनकाद्यखिलार्थद** इति । अखिलः अमोघः अन्यूनो वा योऽर्थो भगवद्दर्शनरूपः तस्य सनकादिषु दातेत्यर्थः । तदुक्तं 'तं त्वागतं प्रतिहतौपयिक'मित्यादिना ॥ ३७ ॥

**सर्वाश्वासनकर्ता च भक्ततुल्याहवप्रदः ।**
**काललक्षणहेतुश्च सर्वार्थज्ञापकः परः ॥ ३८ ॥**

**सर्वाश्वासनकर्ता** चेति । सर्वेषां सनकादीनां जयादीनामाश्वासनस्य सान्त्वनस्य कर्तेति, तदुक्तं 'एतौ तौ पार्षदौ मह्य'मित्यादिना । **भक्ततुल्याहवप्रद** इति । भक्तस्य हिरण्याक्षस्य तुल्यः अनुरूपो य आहवः सङ्ग्रामस्तत्प्रद इत्यर्थः । रौद्रवपुःस्वीकरणं तदर्थमेव, न तु रामरावणयुद्धवदत्रापि । **काललक्षणहेतुश्चे**ति । कालस्य दैत्यप्रसवकालस्य लक्षणानि तज्ज्ञापकानि चिह्नान्युत्पातरूपाणि तेषां हेतुः प्रवर्तक इत्यर्थः । 'अहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्तते' इति भगवद्वचनात् सर्वप्रवर्तकत्वं भगवत एवेति । तदुक्तं 'उत्पाता बहवस्तत्र निपेतुरि'त्यादिना । **सर्वार्थज्ञापक** इति । सर्वे अर्था धर्मादयो यत्र स सर्वार्थो वराहस्तज्ज्ञापक इत्यर्थः । यद्वा । सर्वार्थज्ञस्य स्वरूपस्य ज्ञापकः प्रापको हिरण्याक्षायेति । तदुक्तं 'ददर्श तत्राभिजितं धराधर'मित्यादिना । **पर** इति । पिपर्ति पूरयति भक्तयुद्धेच्छामिति परः ॥ ३८ ॥

**भक्तोन्नतिकरः सर्वप्रकारसुखदायकः ।**
**नानायुद्धप्रहरणो ब्रह्मशापविमोचकः ॥ ३९ ॥**

**भक्तोन्नतिकर** इति । भक्तस्य दैत्यस्योन्नतिरुत्कर्षः स्वापेक्षयाधिकविक्रमज्ञापकं सर्वेषु तत्कर्तेत्यर्थः । तदुक्तं 'आसन्नशौण्डीरमपेतसाध्वस'मित्यादिना । **सर्वप्रकारसुखदायक** इति । सर्वे प्रकारा यस्मिन् सुखे तादृशस्य दातेत्यर्थः । भक्तस्य दैत्यत्वेपि इन्द्राधिकसुखप्रदत्वात् । **नानायुद्धप्रहरण** इति । नानाविधानि युद्धानि प्रहरणान्यायुधानि यस्य, नानायुद्धेषु प्रहरणमायुधविक्षेपो यस्येति वा, नानायुद्धैः प्रहरति ताडयतीति वा । **ब्रह्मशापविमोचक** इति । ब्रह्मपदेन ब्राह्मण उच्यते, ब्राह्मणानां सनकादीनां यः शापः 'लोकानितो व्रजतमन्तरभावदृष्ट्ये'त्यादिनोक्तः तस्माद्विमोचकः विशेषेण मुक्तिदातेत्यर्थः । वधेन जन्मत्रयमध्ये एकस्य न्यूनताकरणात् ॥ ३९ ॥

**पुष्टिसर्गप्रणेता च गुणसृष्टिप्रवर्तकः ।**
**कर्दमेष्टप्रदाता च देवहूत्यखिलार्थदः ॥ ४० ॥**

**पुष्टिसर्गप्रणेता** चेति । पुष्टिः पोषणमनुग्रहस्तदर्थोपायः सर्गः सृष्टिः, तस्य प्रकर्षेण नेता प्रणयकर्ता, तत्करणसामर्थ्यदातेत्यर्थः । यद्वा । पुष्ट्यैव यः सर्गस्तत्कर्तेत्यर्थः । मनुकश्यपादीनां सर्गे भक्ता बहवो भविष्यन्तीति पुष्टिसर्गत्वम् । यद्वा । मनुसृष्टौ परस्परं भ्रातृणामेव विवाहादिकरणात् तन्मर्यादाविरुद्धमपि भगवान् स्वेच्छया कारितवानित्यतः

पुष्टिसर्गत्वं युक्तम् । न हि सकलधर्मप्रवर्तकानामपि भगवदिच्छां विना तथा करण सम्भवतीति । **गुणसृष्टिप्रवर्तक** इति । गुणमयी सृष्टिः गुणसृष्टिः तत्प्रवृत्तिकर्तेत्यर्थः । तदुक्तं 'जातक्षोभाद्भगवतो महानासी'दित्यादिना । **कर्दमेष्टप्रदाता** चेति । कर्दमस्य प्रजापतेरिष्टं विवाहादिकं तस्य प्रकर्षेण दाता सम्पादकः, प्रकर्षस्तु यथा वाञ्छितकरणादेव । तदुक्त 'विदित्वा तव चैत्य'मित्यादिना । **देवहूत्यखिलार्थद** इति । देवहूतेर्मनुपुत्र्या अखिलानन्यूनानमोघान् वा प्रियानर्थान् ददातीति तथा । तदुक्त 'प्रियायाः प्रियमन्विच्छन्नि'त्यादिना ॥ ४० ॥

**शुक्लनारायणः सत्यकालधर्मप्रवर्तकः ।**
**ज्ञानावतारः शान्तात्मा कपिलः कालनाशकः ॥ ४१ ॥**

**शुक्लनारायण** इति । शुक्लः शुद्धसत्वात्मको नारायणः सत्ययुगेवतीर्णः सोत्र हृदमाहात्म्यार्थमुच्यते, 'निमज्ज्यास्मिन्हृद' इत्यादिना । **सत्यकालधर्मप्रवर्तक** इति । सत्यो यथार्थः कालस्य कालसम्बन्धी यो धर्मः क्रीडोपयोगी यौवनादिस्तत्प्रवृत्तिकर्तेत्यर्थः । तदुक्तं 'सा तद्भर्तुः समादाये'त्यादिना । **ज्ञानावतार** इति । अवतरणमवतारः आविर्भावः, अवतारयतीति वा, स चासौ ज्ञानरूपः शुक्लनारायणस्तद्रूप इत्यर्थः । तदुक्त 'स त्वयाराधितः शुक्ल' इत्यादिना । **शान्तात्मे**ति । शान्तः कामक्रोधादिरहितः आत्मा स्वरूप यस्येति, ज्ञानावतारस्य शान्तत्व युक्तमेवेति । यद्वा । शान्तानामात्मेति वा । **कपिल** इति । कपिलवर्णत्वात् कपिलः, यद्वा, क जल पिबन्तीति कपयो रश्मयः, तान् लाति आदत्ते सूर्यरूपेणेति वा, 'सूर्यो मरीचिमादत्ते सर्वस्माद्भुवनादधी'तिश्रुतेः । कपीन् श्रेष्ठान् लाति अनुगृह्णातीति वा, तदुक्तं महाभारते 'कपिर्वराहः श्रेष्ठश्च धर्मस्य वृष उच्यते । तस्माद्वृषाकपि प्राह कश्यपो मां प्रजापति'रिति । **कालनाशक** इति । कालश्चासौ नाशकश्चेति, कालस्य मृत्योर्वा, कालरूप तु 'स चावतीर्ण त्रियुग'मित्यादिना स्पष्टम् । तत्त्वोपदेशतः सर्वसंशयान्नाशयतीति नाशकत्वम् ॥ ४१ ॥

**त्रिगुणाधिपतिः सांख्यशास्त्रकर्ता विशारदः ।**
**सर्गदूषणहारी च पुष्टिमोक्षप्रवर्तकः ॥ ४२ ॥**

**त्रिगुणाधिपति**रिति । गुणपदेन गुणाधारभूतः काल उपलक्ष्यते, तेन त्रयो गुणाः सन्ति यत्रेति त्रिगुण. कालस्तस्याधिपतिः नियन्ता, आधिदैविकरूप इति वा, अत एव कालात्मना स्तुतिः । 'पर प्रधान पुरुष महान्त काल'मित्यादिना । **सांख्यशास्त्रकर्ते**ति । सांख्यमात्मानात्मविवेकस्तदेव शासनाच्छास्त्र तस्य कर्तेत्यर्थः । तदुक्त 'मात्रे चाध्यात्मिकीं विद्या'मित्यादिना । **विशारद** इति । शास्त्रे विशारदो निपुण इत्यर्थः । यद्वा । विशारण विशारः हृदयग्रन्थिदूरीकरणेनान्तःकरणविशरणस्तेन समार्  यति, अत एव वक्ष्यतेपि 'भिद्यते हृदयग्रन्थि'रित्यादिना । त ददातीति वा विशारद इति च ।

**सर्गदूषणहारीति** । सर्गं सृष्टिस्तत्कृत यद्दूषण तत्र दूषण वा तस्य हरणशील इत्यर्थ । अत्र दूषणमधर्मादिदोष एव कर्दमस्य सृष्टौ स्वयमवतीर्य सृष्टेर्भूषणत्वमेव कृतवान्न तु दूषणत्वमपि । **पुष्टिमोक्षप्रवर्तक इति** । पुष्टिमार्गीयो मोक्ष पुष्टिमोक्ष, पुष्टिमार्गीयाणामिति वा, तस्य प्रवर्तको दातेत्यर्थ । कर्दमस्य तथाविधमोक्षप्रदत्वात् । तदुक्त 'व्रत स आस्थित' इत्यादिना ॥ ४२ ॥

**लौकिकानन्ददाता च ब्रह्मानन्दप्रवर्तकः ।**
**भक्तिसिद्धान्तवक्ता च सगुणज्ञानदीपकः ॥ ४३ ॥**

**लौकिकानन्ददाता चेति** । लौकिक लोकानुसारी य आनन्द भगवत्यपि कपिले पुत्रस्नेहपूर्वकप्रश्नादिजनित, देवहूतौ तादृशस्य दातेत्यर्थ, तदुक्त 'तमासीनमकर्माणमि'त्यादिना । यद्वा । लौकिकाना ससारिणा जीवानामेतच्छास्त्रप्रकाशनेनानन्दत्वम् । **ब्रह्मानन्दप्रवर्तक इति** । 'स एको ब्रह्मण आनन्द' इति श्रुत्यादौ प्रसिद्ध य आनन्द सोऽक्षरब्रह्मानन्दस्तस्य प्रवर्तको दातेत्यर्थ । **भक्तिसिद्धान्तवक्ता चेति** । भक्ति भजनमेव सिद्धान्तत्वेन वक्तीति तथा। तदुक्त 'विसृज्य सर्वतश्चान्या'नित्यादिना । **सगुणज्ञानदीपक इति** । गुणसहित सगुण प्रपञ्चजात तस्य ज्ञानस्य दीपक' प्रकाशक इत्यर्थ । सगुणस्य ज्ञानदीपक इति वा, तदुक्त 'अथ ते सम्प्रवक्ष्यामि तत्त्वाना मित्यादिना ॥ ४३ ॥

**आत्मप्रदः पूर्णकामो योगात्मा योगभावितः ।**
**जीवन्मुक्तिप्रदः श्रीमानन्यभक्तिप्रवर्तक' ॥ ४४ ॥**

**आत्मप्रद इति** । आत्मान स्वस्वरूप शास्त्रप्रकाशनेन प्रकर्षेण ददाति प्रकाशयतीति वा, तथा । **पूर्णकाम इति** । पूर्णा सम्पन्ना कामा सङ्कल्पा यस्येति, पूर्ण निरपेक्षं काम्यत इति वा, पूर्णकामा यस्येति वा, यस्मादिति वा । **योगात्मेति** । योगे समाधौ आत्मा ध्येयस्वरूप यस्येति । **योगभावित इति** । योगेनाष्टाङ्गेन भाव्यते चिन्त्यते इति, योगो भावितो येनेति वा । **जीवन्मुक्तिप्रद इति** । जीवत्येव पूर्वकर्मोपार्जित शरीरे नियमान एव कामादिभ्यो मुक्तिं प्रददातीति तथा । तदुक्त 'एव विदिततत्त्वस्ये' त्यादिना । **श्रीमानिति** । श्री शोभा विद्यतेऽस्मिन्निति, तदुक्त 'प्रसन्नवदनाम्भोज पद्मगर्भारुणेक्षण मित्यादिना । **अन्यभक्तिप्रवर्तक इति** । अन्यन्महदादिक भक्तिश्च तयो प्रवर्तक । यद्वा । अन्येभ्य पुरुषार्थेभ्यश्चतुर्भ्योऽप्यधिकत्वेन भक्तेरेव प्रवर्तक इत्यर्थ । तदुक्त 'सालोक्यसार्ष्टिसामीप्ये'त्यादिना ॥ ४४ ॥

**कालसामर्थ्यदाता च कालदोषनिवारकः ।**
**गर्भोत्तमज्ञानदाता कर्ममार्गनियामकः ॥ ४५ ॥**

**कालसामर्थ्यदाता चेति** । कालस्याधियज्ञात्मकस्य सामर्थ्यं ददातीति तथा, तदुक्त 'स विष्ण्वाख्योऽधियज्ञोऽसौ काल' इत्यादिना । **कालदोषनिवारक इति** ।

कालकृतदोषाः कालदोषास्तेषां नितरां वारकः । गर्भोत्तमज्ञानदाता चेति । गर्भे गर्भदशायां सप्तममासादूर्ध्वं उत्तमस्योत्कृष्टस्य ज्ञानस्य दातेति । तदुक्तं 'यस्योपपन्नमविनु-मित्यादिना । कर्ममार्गनियामक इति । कर्म अदृष्टं तदधीनो यो मार्गः 'जायस्व-म्रियस्वे'त्येवंरूपः 'मृत्वा पुनर्मृत्युमापद्यन्ते अर्द्यमानाः स्वकर्मभि'रिति श्रुतेः, तस्य नितरां यामको नाशक इत्यर्थः । यद्वा । तत्र नियामकस्तदनुरूपफलदातेति ॥ ४५ ॥

**सर्वमार्गनिराकर्ता भक्तिमार्गैकपोषकः ।**
**सिद्धिहेतुः सर्वहेतुः सर्वाश्चर्यैककारणम् ॥ ४६ ॥**

**सर्वमार्गनिराकर्तेति** । सर्वे ये मार्गाः भक्त्यजनकाः कर्मादयस्तेषां निराकर्ता तिरस्कर्तेत्यर्थः । यतः सर्वमार्गनिराकरणमत एवाह । **भक्तिमार्गैकपोषक** इति । भक्तिमार्गस्यैकस्य कर्मादिनाऽसमुचितस्य पोषकः स्थापक इत्यर्थः । अत एवोक्तं 'तस्मात्त्वं सर्वभावेन भजस्वे'त्यादिना । **सिद्धिहेतुरिति** । देवहूतेः सिद्धिः भगवत्प्राप्तिः, तत्र हेतुः कारणमित्यर्थः । तदुक्तं 'मार्गेणानेन मातस्त' इत्यादिना । **सर्वहेतुरिति** । सर्वेषामपि सिद्धिहेतुरित्यर्थः, सर्वत्र हेतुरिति वा । **सर्वाश्चर्यैककारणमिति** । सर्वं यदाश्चर्यमद्भुतं तत्रैकं स्वयमेवासाधारणं वा तत्कारणं चेति तथा । तत्र देवहूत्यर्थं प्रथमतो लौकिकभोगसम्पादनं, पश्चात् स्त्रीजातीयाया अपि ब्रह्मोपदेशतः पुनस्तत्कालमेव वैराग्योत्पादनमित्यादि ज्ञेयम् ॥ ४६ ॥

**चेतनाचेतनपतिः समुद्रपरिपूजितः ।**
**सांख्याचार्यस्तुतः सिद्धपूजितः सर्वपूजितः ॥ ४७ ॥**

**चेतनाचेतनपतिरिति** । चेतन्ति सम्यक् जानन्तीति चेतना ऋषयस्तद्भिन्ना अचेतनाः पामरास्तेषां पतिः, पालनादिति । **समुद्रपरिपूजित** इति । समुद्रेण परितः सर्वतः पूजितोऽर्चितः 'स्तूयमानः समुद्रेण दत्तार्हणनिकेतनः' इत्युक्तत्वात् । **सांख्याचार्यस्तुत** इति । आचरन्ति स्वयं कर्म कृत्वा प्रदर्शयन्ति लोकसङ्ग्रहार्थमित्याचार्याः, मार्गप्रवर्तका इति यावत् । सांख्यस्य आचार्याः सांख्याचार्यास्तैः स्तुत इति । तदुक्तं 'आस्ते योगं समास्थाय सांख्याचार्यैरभिष्टुत' इति । **सिद्धपूजित** इति । सिद्धाः प्रद्युनिदायप्रभृतयः, तैः पूजितः सत्कृतः, ते पूजिता यस्मादिति वा, **सर्वपूजित** इति । सर्वैश्चारणादिभिरपि पूजित इति तथा । तदुक्तं 'सिद्धचारणगन्धर्वैर्मुनिभि'रित्यादिना ॥ ४७ ॥

**॥ इति तृतीयस्कन्धनामानि ॥**

---

## ॥ अथ चतुर्थस्कन्धनामानि ॥

**विसर्गकर्ता सर्वेशः कोटिसूर्यसमप्रभः ।**
**अनन्तगुणगम्भीरो महापुरुषपूजितः ॥ ४८ ॥**

**विसर्गकर्तेति** । पूर्वोक्तसर्गापेक्षया विलक्षण सर्गो विसर्ग, तदुक्त द्वितीये 'भूतमात्रेन्द्रियधिया जन्म सर्ग उदाहृत । ब्रह्मणो गुणवैषम्याद्विसर्ग प्राकृत स्मृत' इति । तस्य कर्ता कारक इत्यर्थ । स च 'मनोस्तु शतरूपाया'मित्यादिनोक्त । **सर्वेश इति** । सर्वेषामीश सर्वेश, सर्वान् ब्रह्मादीनपि ईशयतीति, सर्वे ईशा यस्मादिति । **कोटिसूर्यसमप्रभ** इति । कोटिसख्याका सूर्या कोटिसूर्या, कोटिसूर्यै समा यत् किञ्चित्सादृश्य कर्तुं योग्या प्रभा तेजो यस्येति । 'यदादित्यगत तेजो जगद्भासयतेऽखिल । यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामक'मित्यादिवाक्यै कोटिसूर्याणामपि धर्मितेजोंशरूपत्वेन सर्वांशेन धर्मिसाम्य न घटत एव यद्यपि, तथापीतोऽधिकस्योपमानस्याभावात् प्रदर्शनार्थमेतत्र वस्तुत, परमार्थतस्त्वमूतोपम एवेति । अत एव गीताया विश्वरूपवर्णनावसरे यद्युपनिबन्धे नैवोक्त 'दिवि सूर्यसहस्रस्य भवेद्युगपदुत्थिता । यदि भा सदृशी सा स्याद्भासस्तस्य महात्मन' इति । **अनन्तगुणगम्भीर** इति । नास्त्यन्त समाप्तिर्येषा ते अनन्ता देश कालावधिरहिता ये गुणा ऐश्वर्यादयो भक्तवात्सल्यादयो वा, तै गम्भीर पूर्ण आतलस्पर्शी इति वा, अक्षोभ्य इति वा, अत एव श्रुति 'परो मात्रया तन्वा वृधान न ते महित्वम न्वश्नुवन्ति । उभे ते विद्म रजसी पृथिव्या विष्णो देव त्व परमस्य वित्से' इति । अर्थस्तु । परस्ताद्वर्तमानया मात्रया तन्वा शरीरेण वा वृधान वृद्धिं प्राप्तवान्, हेदेव विष्णो ते तव उभे रजस्तमसी रञ्जनात्मके द्यावापृथिव्यौ वय विद्म जानीम, परमस्य परलोकस्य त्वस्य न्वन्विन त्वमेव वित्से जानासीत्यर्थ । **महापुरुषपूजित** इति । महापुरुषै ब्रह्म नारदादिभि पूजित ॥ ४८ ॥

**अनन्तसुखदाता च ब्रह्मकोटिप्रजापतिः ।**
**सुधाकोटिस्वास्थ्यहेतु कामधुक्कोटिकामदः ॥ ४९ ॥**

**अनन्तसुखदाता** चेति । अनन्तस्य निरवधिकस्य सुखस्य दातेत्यर्थ । **ब्रह्मकोटिप्रजापतिरिति** । सर्वत्र कोटिशब्दोऽसख्यवचनो ज्ञेय, 'सहस्रशीर्षा पुरुष' इत्यत्र सहस्रपदवत् । ब्रह्मा चतुर्मुख स त्वेकब्रह्माण्डान्तर्वर्तिभूतजातस्रष्टत्वात् प्रजापतिरित्यु च्यते, भगवास्तु तादृशब्रह्मकोटिस्रष्टृत्वेनैव प्रजापतिरित्यर्थ । अत एव ब्रह्मस्तुतौ 'क्वेद विधा विगणिताण्डपराणुचर्यावाताध्वरोमविवरस्य च ते महित्व'मिति । **सुधाकोटिस्वास्थ्यहेतुरिति** । सुधा अमृत सा च पीता सती देवाना स्वास्थ्यहेतुरमरत्वहेतुर्भवति, तदपि कालग्रस्तत्वात् पारिमाषिकमेव, भगवास्तु सुधाना कोटेर्यत्स्वास्थ्य तत्र हेतु, यस्से

वनात् पुनः कालादिभ्यो न भयमिति भावः । अत एव दशमस्कन्धेप्युक्तं 'मर्त्यो मृत्यु-व्यालभीतः पलायन्' 'तथा न ते माधव तावका' इत्यादिभिरिति । कामधुक्कोटिकामद इति । कामान् वाञ्छितानर्थान् दोग्धि प्रपूरयतीति कामधुक् कामधेनुरित्यर्थः । तस्याः कोटिः कामधुक्कोटिः, कामधुक्कोटिरिव कामद इत्यर्थः । 'उपमानानि सामान्यवचनै'रिति-समासः ॥ ४९ ॥

**समुद्रकोटिगम्भीरस्तीर्थकोटिसमाह्वयः ।**
**सुमेरुकोटिनिष्कम्पः कोटिब्रह्माण्डविग्रहः ॥ ५० ॥**

**समुद्रकोटिगम्भीर** इति । महद्गुणाकरत्वात् समुद्रकोटिरिव गम्भीरः स्थिराकृति-रित्यर्थः । समासादि पूर्ववदेव सर्वत्र । **तीर्थकोटिसमाह्वय** इति । अयं भावः, यथा अतीर्थजलादिषु स्नानादिकर्मसाद्गुण्यार्थं गङ्गादितीर्थसन्निधिकल्पनं, तद्वद्भगवदाह्वानं तत्को-टिगुणफलप्रदमित्यर्थः । यद्वा । तीर्थकोटिसमः आह्वयः कीर्तनं यस्येति, तीर्थकोटिसमः आह्वयः अभिधानं यस्येति वा, अत एव महर्षयः 'यस्य स्मृत्या च नामोक्त्या तपोयज्ञ-क्रियादिषु । न्यूनं सम्पूर्णतां याति सद्यो वन्दे तमच्युत'मिति । **सुमेरुकोटिनिष्कम्प** इति । सुमेरुरचलानां श्रेष्ठः, सुमेरुकोटिरिव निष्कम्पः अचल इत्यर्थः । मेरोस्तु चालकः कालः, भगवांस्तु तस्यापि चालक इति भावः । **कोटिब्रह्माण्डविग्रह** इति । कोटि-ब्रह्माण्डानि विग्रहो यस्येति, कोटीनां कोटिसंख्याकानां ब्रह्माण्डानां समाहारः कोटिब्रह्माण्डं तत् विग्रहे देहे यस्येति वा । अत एव विश्वरूपदर्शने इतोतिरिक्तब्रह्माण्डप्रदर्शनमेव भगवता कारितं तच्च 'पश्यामि देवांस्तव देव देहे'इत्यादिना स्पष्टम् ॥ ५० ॥

**कोट्यश्वमेधपापघ्नो वायुकोटिमहाबलः ।**
**कोटीन्दुजगदानन्दी शिवकोटिप्रसादकृत् ॥ ५१ ॥**

**कोट्यश्वमेधपापघ्न** इति । कोटिसंख्याकानामश्वमेधानां समाहारः कोट्यश्वमेधं, तदिव ब्रह्महत्यादेः पापस्य हन्तेत्यर्थः । 'सर्वं पाप्मानं तरति तरति ब्रह्महत्यां योश्व-मेधेन यजते' इत्यादिना । बहुकालकष्टसाध्यस्याप्यश्वमेधस्यैकस्यैकब्रह्महत्योपशमहेतुत्वमुक्तम् । अयं तु स्मरणादिभिरेकैकशः सर्वपापनाशकः सद्य एवेति महान् विशेषः, अत एवोक्तं 'नाम्नोऽस्ति यावती शक्तिः पापनिर्दहने हरेः । तावत्कर्तुं न शक्नोति पातकं पातकी नरः' इति 'प्रायश्चित्तान्यशेषाणि तपःकर्मात्मकानि वै । यानि तेषामशेषाणां कृष्णानुस्मरणं पर-मि'त्यापि । **वायुकोटिमहाबल** इति । वायुकोटिरिव महच्च तद्बलं च महाबलं तद्वि-द्यते यस्येति । **कोटीन्दुजगदानन्दी**ति । कोटीनामिन्दूनां समाहारः कोटीन्दु तद्वज्ज-गदाह्लादक इत्यर्थः । **शिवकोटिप्रसादकृ**दिति । शिवकोटिरिव प्रसादवरदानादिकं करोतीति तथा ॥ ५१ ॥

ननु तथाप्ये कथं न स्तूयते सर्वैरित्याशङ्क्याह- **सर्वसद्गुणमाहात्म्य** इति ।

**सर्वसद्गुणमाहात्म्यः सर्वसद्गुणभाजनम् ।**
**मन्वादिप्रेरको धर्मो यज्ञनारायणः परः ॥ ५२ ॥**

सर्वं. सद्गुणै समीचीनैर्गुणै सता गुणै ताद्दशगुणवद्भिर्वा ताद्दशेषु वा माहात्म्य महिमा यस्येति, सर्वसद्गुणाना माहात्म्य यस्मादिति वा । तथात्वेप्यन्ये दूरतोपि न भजन्तीत्याशयेनाहु [३२१]**सर्वसद्गुणभाजन**मिति । सर्वान् सद्गुणान् तद्वतो वा भजति तान् भाजयतीति वा । व्यूहादिपूपासनादिकमपि सम्भवति न तु पूर्णस्येति भाव. । **'सर्वेश'** इत्यारभ्याष्टादशनामानि पुराणान्तरप्रसिद्धानीति ज्ञेयम्, निर्वचन पश्चाद्भविष्यति । सर्वकरणसामर्थ्यद्योतनायात्र तेषा कथनम् । [३२२]**मन्वादिप्रेरक** इति । मनु स्वायभुव आदिर्येषा मन्वादीना सृष्टयर्थं प्रेरक इत्यर्थ । [३२३]**धर्म** इति । मन्वादिप्रणीतधर्मरूप इत्यर्थ । [३२४]**यज्ञनारायण** इति । यज्ञात्मको नारायणो यज्ञनारायणस्तद्रूप इत्यर्थ । तदुक्त 'प्रजापति. स भगवान् रुचि'रित्यादिना । [३२५]**पर** इति । पिपर्ति देवानिति पर. उत्कृष्टो वा ॥ ५२ ॥

तस्यैव नामान्तरमाहु [३२६]**आकृतिसूनु**रिति ।

**आकृतिसूनुर्देवेन्द्रो रुचिजन्माऽभयप्रदः ।**
**दक्षिणापतिरोजस्वी क्रियाशक्तिः परायणः ॥ ५३ ॥**

आकृतेर्मनुपुत्र्या सूनु पुत्र इत्यर्थ । [३२७]**देवेन्द्र** इति । देवानामिन्द्रः, देवश्चासाविन्द्रश्चेति वा । [३२८]**रुचिजन्मे**ति । रुचेर्जन्म यस्येति । [३२९]**अभयप्रद** इति । यज्ञस्वरूपेण देवेभ्योऽभय प्रददातीति तथा । 'यज्ञेनासुरानपानुदन्त' इति श्रुते । [३३०]**दक्षिणापति**रिति । दक्षिणा रुचे पुत्री, तस्या पति पालको भर्तेति यावत् । तदुक्त 'ता कामयाना'-मित्यादिना । [३३१]**ओजस्वी**ति । ओज उत्साहविशेषस्तद्वानोजस्वी । [३३२]**क्रियाशक्ति**रिति । क्रियाया कर्मण शक्ति सामर्थ्य यस्मादिति वा, तद्रूप इति । तपआदिकमत्र क्रियापदेनोच्यते । ननु क्रियाशक्तित्व दृश्यते सर्वत्र, तथा सति कथ न सर्वेषा फलसिद्धिरत आहु [३३३]**परायण** इति । परमक्षरमयनमधिष्ठान यस्येति, परमुत्कृष्टमयन ज्ञान यस्येति वा, परेषूत्कृष्टेषु ससरण यस्येति वा ॥ ५३ ॥

नन्वस्तु ज्ञानादि स्मरणान्त, फल तु साधनासाध्यत्वान्न भविष्यतीत्याशङ्क्याहुः [३३४]**दत्तात्रेय** इति ।

**दत्तात्रेयो योगपतिर्योगमार्गप्रवर्तकः ।**
**अनसूयागर्भरत्नमृषिवंशविवर्धनः ॥ ५४ ॥**

अत्रेरपत्यमात्रेय दत्तश्चासावात्रेयश्चेति । [३३५]**योगपति**रिति । योगस्याष्टाङ्गयोगस्य पति स्वामी, योगाचार्यत्वात् । [३३६]**योगमार्गप्रवर्तक** इति । स्पष्टम् । [३३७]**अनसूयागर्भ-**

रत्नमिति । अनसूया अत्रेः पत्नी, तस्यास्त्रिदेवरूपगर्भेष्वपि रत्नं श्रेष्ठ इत्यर्थः, तच्च मूले स्फुटम् । **ऋषिवंशविवर्धन** इति । ऋषीणामङ्गिरआदीनां वंशस्य परम्परायाः विशेषेण वृद्धिकर्तेत्यर्थः ॥ ५४ ॥

**गुणत्रयविभागज्ञश्चतुर्वर्गविशारदः ।**
**नारायणो धर्मसूनुर्मूर्तिपुण्ययशस्करः ॥ ५५ ॥**

**गुणत्रयविभागज्ञ** इति । गुणानां त्रयं गुणत्रयं तस्य विभागं विवेचनं जानातीति तथा । यद्वा । सत्त्वादिगुणत्रयेण विभजनं विभागस्तं जानातीति तथा, तदुक्तं 'सोमोमूद्ब्रह्मणोंशेने'त्यादिना । **चतुर्वर्गविशारद** इति । चतुर्णां धर्मादीनां वर्गः समुदायस्तत्र विशारदस्तदभिज्ञ इत्यर्थः । **नारायण** इति । नरः आत्मा, ततो जातान्याकाशादीनि नाराणि तानि कार्याणि अयनं कारणात्मना व्याप्नोति अतश्च नारायणः । 'यच्च किञ्चिज्जगत्सर्वं दृश्यते श्रूयतेपि वा । अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थित' इति मन्त्रवर्णात् । महाभारतेपि 'नराज्जातानि तत्त्वानि नाराणीति ततो विदुः । तान्येवायतनं तस्य तेन नारायणः स्मृत' इति । 'नराणामयनं यस्मात्तस्मान्नारायणः स्मृत' इति ब्रह्मवैवर्ते । मनुरप्याह 'आपो नारा इति प्रोक्ता आपो वै नरसूनवः । अयनं तस्य ता पूर्वं तेन नारायणः स्मृत'इति । व्यासोप्याह 'नयतीति नरः प्रोक्तः परमात्मा सनातन' इति । **धर्मसूनु**रिति । धर्मस्य सूनुरिव सूनुरिति । **मूर्तिपुण्ययशस्कर** इति । मूर्तिर्धर्मपत्नी स्वजननी तस्याः पुण्यं पावनं तद्यशस्तत्करोतीति तत्तथा । तदुक्तं 'मूर्तिः सर्वगुणोपेतौ नरनारायणा'वित्यादिना ॥ ५५ ॥

**सहस्रकवचच्छेदी तपःसारो नरप्रियः ।**
**विश्वानन्दप्रदः कर्मसाक्षी भारतपूजितः ॥ ५६ ॥**

**सहस्रकवचच्छेदी**ति । सहस्रं कवचानि वर्माणि छेत्तुं शीलमस्येति । **तपःसार** इति । तप एव सारं ग्राह्यांशो यस्य, तदेव बलं यस्येति, तपोरूपसारांश इति वा । तपश्चास्मि तपस्विष्वि'ति वचनात् । **नरप्रिय** इति । नरः प्रियो यस्य, भ्रातृत्वात्, नरस्य प्रिय इति वा, नराणामिति वा । **विश्वानन्दप्रद** इति । विश्वस्मै सर्वस्मै आनन्दं प्रयच्छतीति तथा, विश्वहितार्थमेव तपश्चरणात् । **कर्मसाक्षी**ति । देवमनुष्यादीनां कर्म शुभाशुभं साक्षात् पश्यति विविनक्तीति तथा । स्वाचरणं त्वन्येषामेव तथा ज्ञापनायान्यथा यद्यदाचरणं श्रेष्ठेष्वितिव्यर्थं स्यात् । ज्ञापनं सन्निहितानामेव, तथात्वं तु स्वकीयानामेव भवतीत्यर्थः । ननु तथात्वाभावेऽन्येषां कर्मणां कथं फलसिद्धिरित्याशयेनाह कर्मेति, विहितं तु साक्षात् पश्यतीतरत्तु परम्परया पश्यति । आसुराणां तु विहितमपि न तथा, कर्मणां वैलक्षण्याद्भावभेदाच्चेति भावः । ननु आसुराणां देवेष्वपि जन्म निहिताचरणं सम्भवति तदा कथं भवतीत्याशयेनाहुः । **भारतपूजित** इति । भारतैर्युधिष्ठिरादिभिः पूजितः सत्कृतः सहायोपायकरणात् । भारतैः सार-

स्तैर्वा पूजित इति, भरतवंशोत्पन्नैरिति वा, भरतखण्डस्थितैः पूजित इति वा, खण्डोपास्यत्वात् ॥ ५६ ॥

**अनन्ताद्भुतमाहात्म्यो बदरीस्थानभूषणम् ।**
**जितकामो जितक्रोधो जितसङ्गो जितेन्द्रियः ॥ ५७ ॥**

**अनन्ताद्भुतमाहात्म्य** इति । अनन्तमपरिच्छिन्नमद्भुतमाश्चर्ययुक्तं माहात्म्यं यस्येति, तच्च महाभारतादौ प्रसिद्धम् । **बदरीस्थानभूषणमिति** । बदर्याख्यस्य महास्थानस्य बदर्युपलक्षितस्येति वा तस्य भूषणं मण्डनमित्यर्थः । **जितकाम** इति । जितः कामः कन्दर्पो येन, तपोविघ्नार्थं प्रवर्तितत्वात् । **जितक्रोध** इति । जितो वशीकृतः क्रोधः अमर्षो येन तं विनैव तत्तिरस्करणात्, न तु रुद्रवद्भस्मीकरणेनेति भावः । **जितसङ्ग** इति । जितः सङ्गो विषयव्यासङ्गो येन । **जितेन्द्रिय** इति । जितानि वशीकृतानीन्द्रियाणि येन, हृषीकेशत्वात् ॥ ५७ ॥

**उर्वशीप्रभवः स्वर्गसुखदायी स्थितिप्रदः ।**
**अमानी मानदो गोप्ता भगवच्छास्त्रबोधकः ॥ ५८ ॥**

**उर्वशीप्रभव** इति । उर्वशीनाम्नामप्सरसां प्रभव उत्पत्तिर्यस्मात् । **स्वर्गसुखदायीति** । स्वर्गपदेन तत्स्था इन्द्रादयोऽप्युच्यन्ते, तेभ्यः सुखदानशील इत्यर्थः, सर्वाप्सरोमुख्योर्वशीप्रदानात् । **स्थितिप्रद** इति । स्थितिमवस्थितिं स्वर्गे प्रददातीति, न पुनः स्वस्मिन्नाकृष्टवानुर्वशीमिति भावः । **अमानीति** । मानोऽस्यास्तीति मानी न मानी अमानी मानस्यासुरत्वात्तदभाव इति भावः । **मानदः** । अन्येभ्यो लोकसङ्ग्रहार्थं मानं सन्मानं ददातीति तथा, मानमभिमानं द्यति खण्डयतीति वा । **गोप्तेति** लोकानां रक्षितेत्यर्थः । **भगवच्छास्त्रबोधक** इति । भगवच्छास्त्रं पञ्चरात्रादि, तस्य बोधको ज्ञापको नारदादिभ्य इति ॥ ५८ ॥

**ब्रह्मादिवन्द्यो हंसः श्रीर्मायावैभवकारणम् ।**
**विविधानन्तसर्गात्मा विश्वपूरणतत्परः ॥ ५९ ॥**

**ब्रह्मादिवन्द्य** इति । ब्रह्मा आदिर्येषां शिवादीनां तैर्वन्द्यो वन्दनीयः । **हंस** इति । हन्ति संसृतिं जानातीति वा, सर्वं हंसः परमात्मेति यावत् । **श्रीरिति** । श्रयन्तेऽनेनेति श्रीः, सर्वाश्रयणीयः लक्ष्मीरूपो वा । 'कीर्तिः श्रीर्वाक् नारीणा'मिति पाठात् । **मायावैभवकारणमिति** । मायायाः प्रकृतेर्वैभवं सृष्ट्यादिकर्तृत्वं तत्र कारणं हेतुरित्यर्थः । **विविधानन्तसर्गात्मेति** । विविधा बहुविधा अनन्ता अमिता ये सर्गाः रुद्रकृता वीरभद्रादयस्तत्र आत्मा गमनशीलः दक्षयज्ञविध्वंसनार्थं तेषु सामर्थ्येन आविर्भावादिति भावः । अन्यथा भगवदधिष्ठितयज्ञस्य नाशो न स्यात् । **विश्वपूरणतत्पर** इति । विश्वस्य पूरणे पोषणे तत्परः सावधानः । यद्वा । विश्वपूरणस्य तननं विश्वपूरणतत्, तदेव परं उत्कृष्टं यस्येति ॥ ५९ ॥

**यज्ञजीवनहेतुश्च यज्ञस्वामीष्टबोधकः ।**
**नानासिद्धान्तगम्यश्च सप्ततन्तुश्च षड्गुणः ॥ ६० ॥**

**यज्ञजीवनहेतुश्चेति** । यज्ञे जीवनं दक्षादीनां, यज्ञस्य वा पुनरुत्थानं तत्र कारणमित्यर्थः । **यज्ञस्वामीति** । यज्ञस्य स्वामी, यज्ञस्य यजमानस्य वा 'यज्ञो यजमान' इति श्रुतेः, यज्ञरूपस्वामीति वा, 'यज्ञो वै विष्णु'रिति श्रुतेः । **इष्टबोधक इति** । इष्टस्य रुद्रप्रसादोपायस्य बोधकः ज्ञापक इत्यर्थः । **नानासिद्धान्तगम्यश्चेति** । नानारूपैः सिद्धान्तैर्गम्यो ज्ञातुं योग्यः, अत एव ऋत्विगादयः स्वस्वज्ञानानुसारेण सर्वे स्तुतवन्तः । तदुक्तं 'तत्त्वं न ते वयमनञ्जने'त्यादिना । **सप्ततन्तुश्चेति** । सप्तानामग्निष्टोमादिसप्तसंस्थानानां तन्तुर्विस्तारक इत्यर्थः, सप्तानां लोकानां वा । **षड्गुण इति** । षडैश्वर्यादयो गुणा यस्येति ॥ ६० ॥

**प्रतिसर्गजगत्कर्ता नानालीलाविशारदः ।**
**ध्रुवप्रियो ध्रुवस्वामी चिन्तिताधिकदायकः ॥ ६१ ॥**

**प्रतिसर्गजगत्कर्तेति** । प्रतिसर्गं जगत्कर्तेति बाहुलकादिसमासः । **नानालीलाविशारद इति** । नानालीलाः सृष्ट्यादयस्तासु निपुण इत्यर्थः, तच्च मूले स्पष्टं 'सनकाद्या नारदश्चे'त्यादौ । **ध्रुवप्रिय इति** । ध्रुवस्यौत्तानपादेः प्रियमिष्टसिद्धिर्यस्मादिति, ध्रुवस्य प्रियः, ध्रुवः प्रियो यस्येति वा, । **ध्रुवस्वामीति** । ध्रुवस्य स्वामी प्रभुः, अत एव स्वपदे स्थापनमिति । **चिन्तिताधिकदायक इति** । सपत्न्या मातुर्दुरुक्तव्यथितस्वान्तो ध्रुवो मातुरभिमानमार्जनाय प्रवृत्तो न तु केवलभगवदुद्देशेनापीति, तादृशस्यापि यद्विष्णुपदस्थानं सकलमहर्षिप्रभृतिसेव्यं दत्तवानतः चिन्तिताधिकदायकत्वं युक्तमेव । अत एवोशनसा गीतं विष्णुपुराणे 'अहोऽस्य तपसो वीर्यमहोऽस्य तपसः फलम् । यदेनं पुरतः कृत्वा ध्रुवं सप्तर्षयः स्थिता' इति ॥ ६१ ॥

**दुर्लभानन्तफलदो दयानिधिरमित्रहा ।**
**अङ्गस्वामी कृपासारो वैन्यो भूमिनियामकः ॥ ६२ ॥**

**दुर्लभानन्तफलद इति** । दुर्लभं प्राप्तुमशक्यमन्यैर्देवादिभिरपि, अनन्तमविनाशि यत्फलं तद्धुवाय ददातीति तथा । तदुक्तं 'वेदाहं ते व्यवसित'मित्यादिना । **दयानिधिरिति** । दया अनुकम्पा तस्या निधिर्निधानं, पञ्चवार्षिकोऽतिबालोऽयं कष्टं प्राप्नोतीति दया । **अमित्रहा इति** । अमित्रान् भ्रातृघातकान् रुद्रानुचरान् हतवानिति । तदुक्तं 'ध्रुवो भ्रातृवधं श्रुत्वे'त्यादिना । **अङ्गस्वामीति** । अङ्गस्य राज्ञः स्वामी नियामक इत्यर्थः । **कृपासार इति** । कृपैव देयपदार्थे सारं यस्येति, कृपायामासारो धारासम्पात इति यावत् । अत एवाङ्गस्य कदपत्यदानेन वैराग्यमुत्पाद्य मोचितवानित्यर्थः, तदुक्तं 'कदपत्यं वरं मन्य' इत्यादिना । **वैन्य इति** । वेनस्यापत्यं वैन्यः पृथुरित्यर्थः । **भूमिनि-**

**यमक** इति । भूमिं नियमयति वशे स्थापयतीति तथा । तदुक्तं 'वसुधे त्वा वधिष्यामी'-त्यादिना ॥ ६२ ॥

**भूमिदोग्धा प्रजाप्राणपालनैकपरायणः ।**
**यशोदाता ज्ञानदाता सर्वधर्मप्रदर्शकः ॥ ६३ ॥**

**भूमिदोग्धेति** । भूमेर्धेनुरूपाया दोग्धा तत्तदपेक्षितसारदायकः । तदुक्तं 'वत्सं कल्पय मे वीरे'त्यादिना । **प्रजाप्राणपालनैकपरायण** इति । प्रजानां प्राणाः प्रजाप्राणास्तेषां पालनं दुःखाद्रक्षणं तदेवैकं परमुत्कृष्टं अयनं स्थानमाश्रयो यस्येति । **यशोदाते**ति । यशसो दातेत्यर्थः । अन्यैरकृताद्भुतकर्मकारकत्वात् । तदुक्तं 'चूर्णयश्च धनुःकोट्ये'त्यादिना । **ज्ञानदाते**ति । ज्ञानं स्वसम्बन्धी तस्य सनत्कुमारादिद्वारा पृथवे दातेत्यर्थः । तदुक्तं 'एवं स्म ब्रह्मपुत्रेणे'त्यादिना । **सर्वधर्मप्रदर्शक** इति । सर्वेषां प्रवृत्तिनिवृत्तिलक्षणानां धर्माणां प्रकर्षेण दर्शयितेत्यर्थः ॥ ६३ ॥

**पुरञ्जनो जगन्मित्रं विसर्गान्तप्रदर्शकः ।**
**प्रचेतसां पतिश्चित्रभक्तिहेतुर्जनार्दनः ॥ ६४ ॥**

**पुरञ्जन** इति । पुरं शरीरं जनयतीति तथा 'पश्चाद्भूमिमथो पुरः' इति श्रुतेः । तदुक्तं 'पुरुषं पुरञ्जनं विद्धी'त्यादिना । **जगन्मित्र**मिति । जगतां मित्रं बन्धुरूपत्वात् 'आत्मैव ह्यात्मनो बन्धु'रिति भगवद्वचनात् । **विसर्गान्तप्रदर्शक** इति । प्राचीनबर्हिषो यो निसर्गः पुनः सृष्टीच्छा नारदतो वैराग्यमुत्पाद्य तस्य निसर्गस्यान्तस्य समाप्तेः प्रदर्शको बोधक इत्यर्थः । तदुक्तं 'भागवतमुख्यो भगवा'नित्यादिना । **प्रचेतसां पति**रिति । प्रकृष्टानि चेतांसि ज्ञानानि अन्तःकरणानि वा येषां श्रीरुद्रप्रसादात् प्राप्तभक्तित्वात् ते प्रचेतसस्तेषां पतिः स्वामीति । तदुक्तं 'प्रचेतसोऽन्तरुदधा'वित्यादिना । **चित्रभक्तिहेतु**रिति । चित्रा सत्करणीया या भक्तिस्तत्र कारणमित्यर्थः, विचित्राया इति वा । **जनार्दन** इति । जना माया तामर्दयति नाशयतीति तथा, जनान् जीवानन्तकाले अर्दयतीति वा, जनैरर्द्यते प्रार्थ्यते ज्ञायत इति वा ॥ ६४ ॥

**स्मृतिहेतुब्रह्मभावसायुज्यादिप्रदः शुभः ।**
**विजयी,**

**स्मृतिहेतुब्रह्मभावसायुज्यादिप्रद** इति । स्मृतिः स्मरणं, सैव हेतुः, तच्च स्मरणं नारदमुखाच्छ्रुतस्य तेन स्मृतिहेतुना यो ब्रह्मभावो ब्रह्मत्वसम्पत्तिस्तस्मात् सायुज्यादीन् प्रदत्तवानित्यर्थः । आदिपदात्सालोक्यादिरपि गृह्यते । **शुभ** इति । शुभं विद्यतेऽस्मिन्निति मत्वर्थीयोऽच्प्रत्ययः । शुभः कल्याणं तद्रूपो वा । 'मङ्गलानां च मङ्गल'मिति वचनात् । **विजयी**ति । विशेषतो जेतुं शीलमस्येति तथा ।

॥ इति चतुर्थस्कन्धनामानि ॥

## ॥ अथ पञ्चमस्कन्धनामानि ॥

**स्थितिलीलाब्धिरच्युतो विजयप्रदः ॥ ६५ ॥**

स्थितिलीलाब्धिरिति । स्थितिः स्थान तद्रूपलीलाया अब्धिः समुद्र इत्यर्थः । 'स्थित-वैकुण्ठविजय' इति द्वितीये प्रसिद्धम् । अच्युत इति । न च्यवते कालादिना स्वरूपादिति, तदुक्त महाभारते 'यस्मान्नच्युतपूर्वोहमच्युतस्तेन कर्मणे'ति, 'शाश्वतꣳशिवमच्युत'मिति मन्त्रवर्णादपि । विजयप्रद इति । विशिष्ट जय प्रददातीति सस्तेरिति तथा ॥ ६५ ॥

**स्वसामर्थ्यप्रदो भक्तकीर्तिहेतुरधोक्षजः ।**
**प्रियव्रतप्रियस्वामी स्वेच्छावादविशारदः ॥ ६६ ॥**

स्वसामर्थ्यप्रद इति । प्रियव्रताय स्वसामर्थ्यं प्रकर्षेण दत्तवानित्यर्थः । भक्त-कीर्तिहेतुरिति । भक्तानां कीर्तिः ख्यातिस्तत्र हेतुः जयप्रदत्वादिति । अधोक्षज इति । अधोक्षाणां जितेन्द्रियाणां जायते प्रत्यक्षीभवतीति, अक्षजं ज्ञान तदधो यस्मादिति वा, उद्योगपर्वण्यपि 'अधो न क्षीयते जातु यस्मात्तस्मादधोक्षज' इति । द्यौरन्तरिक्षं पृथिवी चाधस्तयोर्यस्मादजायत मध्ये वैराजरूपेणेति वा । प्रियव्रतप्रियस्वामीति । प्रियव्रतस्य राज्ञः प्रियश्चासौ स्वामी चेति । तदुक्त 'यर्हि वाव राजन्य' इति । स्वेच्छावादवि-शारद इति । स्वेच्छयैव यो वादो मन्त्रकृतस्तत्र चतुरः, तस्य विस्तारक इति वा । यद्वा । स्वस्य भगवत इच्छया वदति इच्छावादो वेदस्तत्र विशारदः कर्मकलापकुशल इत्यर्थः । उक्त च 'समावेशितसकलकलाप' इत्यादिना ॥ ६६ ॥

**सङ्ख्यगम्यः स्वप्रकाशः सर्वसङ्गविवर्जितः ।**
**इच्छायां च समर्यादस्त्यागमात्रोपलम्भनः ॥ ६७ ॥**

सङ्ख्यगम्य इति । सङ्गिभिः स्वस्वाधिकारनियुक्तैः ब्रह्मादिभिरगम्यः सम्यक् ज्ञातुमशक्य इत्यर्थः । तदुक्त 'यद्वापि तन्त्वा'मित्यादि । स्वप्रकाश इति । स्वेनैव स्वरूपेणैव प्रकाशत इति स्वप्रकाशः । सर्वसङ्गविवर्जित इति । सर्वेषां त्रयाणां कविमहावीर-सवनाख्यानां सङ्गो विषयस्य विशेषेण वर्जितो येनेति, तदुक्त 'एतेषां कविर्महावीर' इत्यादिना । इच्छायां च समर्याद इति । इच्छायां सङ्गपरित्यागनेच्छायामपि समर्यादो मर्यादासहैव । स्वाप भावः । सर्वेषां राजपुत्रत्वे समानेपि त्रयाणामेवोर्ध्वरेतस्त्वे भगवदि-च्छयैव कारणम् । तादृशानामपि यन्मोक्षं विना यात्यादारभ्य चतुर्थाश्रमस्थापनं तन्मर्या-दैवेति ज्ञायते । त्यागमात्रोपलम्भन इति । त्यागः सर्वसङ्गस्य तावन्मात्रेणैवोपलभ्यते प्राप्यत इति तथा 'त्यागाच्छान्तिरनन्तर'मिति भगवद्वचनात् ॥ ६७ ॥

**अचिन्त्यकार्यकर्मा च तर्कागोचरकार्यकृत् ।**
**शृङ्गाररसमर्यादा आग्नीध्ररसभाजनम् ॥ ६८ ॥**

**अचिन्त्यकार्यकर्ता** चेति । अचिन्त्यस्य मनोव्यापाराविषयस्यापि भक्तकार्यस्य कर्तेत्यर्थः । **तर्कागोचरकार्यकृदिति** । तर्कस्य यद्येवं स्यात्तदैवं स्यादित्येवंरूपतर्कस्याप्यविषयो यत्कार्यं तस्य कर्तेत्यर्थः । अचिन्त्यतर्कागोचरकार्यकर्तृत्वं तु 'तदा हि भगवदुपासनोपचितातिपुरुषप्रभाव' इत्यादिनोक्तम् । **शृङ्गाररसमर्यादेति** । शृङ्गाराख्यस्य रसस्य मर्यादा अवधिः, इतोऽधिकोऽन्यो नास्तीत्यर्थः, 'रसो वै स' इति श्रुतेः । **आग्नीध्ररसभाजनमिति** । आग्नीध्रस्य पूर्वचित्तिमिलने यो रसस्तस्य भाजनं आश्रय इत्यर्थः, तत्सम्पादक इति वा । तदुक्तं 'सा च तदाश्रमोपवन'मित्यादिना ॥ ६८ ॥

**नाभीष्टपूरकः कर्ममर्यादादर्शनोत्सुकः ।**
**सर्वरूपोऽद्भुततमो मर्यादापुरुषोत्तमः ॥ ६९ ॥**

**नाभीष्टपूरक** इति । नाभेराग्नीध्रपुत्रस्येष्टं भगवत्सदृशपुत्रजननं ऋषभदेवप्राकट्येन तत्पूर्तिकर्तेत्यर्थः, तदुक्तं 'बर्हिषि तस्मिन्नेव'मित्यादिना । **कर्ममर्यादादर्शनोत्सुक** इति । कर्मणां मर्यादा रीतिस्तस्याः दर्शनं लोकेभ्यः प्रदर्शनं तदर्थमुत्सुकः उत्कण्ठित इत्यर्थः । 'धर्मं दर्शयितुकामो वातरसनाना'मित्यादिना । **सर्वरूप** इति । सर्वाणि रूपाणि यस्येति, सर्वं कुलाचारं रूपयति कृत्वा प्रदर्शयतीति वा, 'सर्वाणि रूपाणि विचिन्त्य धीरो नामानि कृत्वाऽभिवदन् यदास्ते' इति श्रुतेः । तदुक्तं 'प्रदर्शितगुरुकुलवास' इत्यादिना । **अद्भुततम** इति । अतिशयितोऽद्भुतोऽद्भुततमः, अन्याश्चर्यरूप इत्यर्थः । **मर्यादापुरुषोत्तम** इति । मर्यादा वेदमार्गस्तद्रक्षकः पुरुषोत्तमो मर्यादापुरुषोत्तम इति ॥ ६९ ॥

**सर्वरूपेषु सत्यात्मा कालसाक्षी शशिप्रभः ।**
**मेरुदेवीव्रतफलमृषभो भगलक्षणः ॥ ७० ॥**

**सर्वरूपेषु सत्यात्मेति** । सर्वेष्वपि रूपेषु ब्राह्मणराजन्यादिषु सत्यः अवितथः आत्मा अवतारो यस्येति । यद्वा । सर्वरूपेषु आब्रह्मस्तम्बपर्यन्तं आत्मा स्वरूपं यस्येति । **कालसाक्षीति** । कालस्य साक्षी नियन्तेत्यर्थः । **शशिप्रभ** इति । शशिप्रभेव प्रभा कान्तिः यस्य, दर्शनाह्लादकत्वात् । **मेरुदेवीव्रतफलमिति** । नाभिपत्न्या मेरुदेव्या आचरितस्य व्रतस्य पुंसवनादेः फलरूप इत्यर्थः । **ऋषभ** इति । एकस्यैव सर्वगुणोपलम्भात् । सर्वस्मादृषभः श्रेष्ठ इत्यर्थः । तदुक्तं 'तस्य ह वा व इत्थं वर्ष्मणे'त्यादिना । **भगलक्षण** इति । भगमैश्वर्यादिगुणसमुदायं स्वस्मिन् लक्षयतीति तथा । 'ऐश्वर्यस्य समग्रस्य धर्मस्य यशसः श्रियः । ज्ञानवैराग्ययोश्चैव षण्णां भग इति स्मृति'रितिवचनात्, तदुक्तं, 'अथ तमुत्पत्त्यैवाभिव्यज्यमाने'त्यादिना । अत्र कतिपयनाम्नां विपर्ययो ज्ञेयः ॥ ७० ॥

**जगत्सन्तर्पको मेघरूपी देवेन्द्रदर्पहा ।**
**जयन्तीपतिरत्यन्तप्रमाणाशेषलौकिकः ॥ ७१ ॥**

**जगत्सन्तर्पक** इति । जगतः प्रजायाः सम्यक् तर्पकः पोषक इत्यर्थः । **मेघरूपी**[330]ति । अजनाभाख्ये मेघरूपीत्यर्थः । 'आत्मनो योगमायया स्ववर्ष'मित्यादिना । **देवेन्द्रदर्पहे**[331]ति । देवेन्द्रस्य दर्पं गर्वं स्ववर्षेण हतवानित्यर्थः । **जयन्तीपति**[332]रिति । जयन्त्या इन्द्रदत्तायाः पतिर्भर्तेत्यर्थः, तन्मूले स्पष्टम् । **अत्यन्तप्रमाणाशेषलौकिक**[333] इति । अन्तमतिक्रान्तोऽत्यन्तः प्रमाणानि चाशेषलौकिकानि च तेषां समाहारस्तथा, प्रमाणाशेषलौकिकस्यात्यन्तः, षष्ठ्या पूर्वनिपाताभावो राजदन्तादित्वात्समाधेयः । यद्वा । अत्यन्तमतिशयितं प्रमाणं प्रमाणत्वेन स्वीकार्यं यस्येति ॥ ७१ ॥

**शतधान्यस्तमूतात्मा शतानन्दो गुणप्रसूः ।**
**वैष्णवोत्पादनपरः सर्वधर्मोपदेशकः ॥ ७२ ॥**

**शतधान्यस्तमूतात्मे**ति । शतप्रकारं यथा स्यात्तथा न्यस्तः स्थापितः भूतेषु शरीरेषु आत्मा येन 'आत्मा वै जायते पुत्र' इति श्रुतेः । तदुक्तं 'आत्मसमानानां शतं जनयागासे'त्यादिना । **शतानन्द** इति । शतपुत्रा एवानन्दरूपा यस्येति वा, शतेनानन्दो यस्येति वा, शतगुणितानन्दो वेति 'स एको ब्रह्मण आनन्द' इति श्रुतेः । **गुणप्रसू**[336]रिति । गुण गुणवन्तमभेदविवक्षयानन्दनिधानं भरत प्रसूत इति तथा । तदुक्तं 'येषां खलु महायोगी भरतो ज्येष्ठः श्रेष्ठगुण' इत्यादिना । **वैष्णवोत्पादनपर** इति । वैष्णवो भरतस्तदुत्पादनेन वैष्णवधर्मान् पिपर्तीति तथा । यद्वा । वैष्णवेषु भक्त्युत्पादनपर इति वा । यद्वा । वैष्णवार्थमुत्पादन स्वावतरण तत्पर इति वा । **सर्वधर्मोपदेशक** इति । सर्वान् निवृत्तिलक्षणान् धर्मान् ब्रह्मर्षिभ्य उपदिष्टवानिति तथा । तदुक्तं 'स कदाचिदटमानो भगवानि'त्यादिना ॥ ७२ ॥

**परहंसक्रियागोप्ता योगचर्याप्रदर्शकः ।**
**चतुर्थाश्रमनिर्णेता सदानन्दशरीरवान् ॥ ७३ ॥**

**परहंसक्रियागोप्ते**ति । परे उत्कृष्टाश्च ते हंसाश्च परहंसाः परमहंसा इत्यर्थः, तेषां क्रिया सम्पत्तिस्तस्या रक्षक इत्यर्थः । यद्वा । परमहंसविषये क्रियायाः कर्ममार्गस्य गोप्ता दूपक इत्यर्थः । **योगचर्याप्रदर्शक** इति । योगस्य भक्तिरूपस्य चर्या आचरणं तस्याः प्रदर्शक इत्यर्थः । **चतुर्थाश्रमनिर्णेते**ति । संन्यासनिर्वचक इत्यर्थः । **सदानन्दशरीरवा**निति । सदा सर्वकालेषु आनन्द एव शरीरं स्वरूपं यस्येति, यद्वानन्दश्च तदुभयात्मकशरीर इति वा ॥ ७३ ॥

**प्रदर्शितान्यधर्मश्च भरतस्वाम्यपारकृत् ।**
**यथावत्कर्मकर्ता च सद्बानिष्टप्रदर्शकः ॥ ७४ ॥**

**प्रदर्शितान्यधर्मश्चे**ति । प्रदर्शितः स्थापितः अन्येषु धर्मो येनेति । **भरतस्वामी**ति । भरतस्य ज्येष्ठपुत्रस्य स्वामी शिक्षक इत्यर्थः । तदुक्तं 'स्वतनयशतज्येष्ठ'मि-

त्यादौ । [अ]पारकृदिति । न विद्यते पारं यस्येत्यपारः संसारसागरः तं कृणत्ति छिनत्तीति तथा । [अ]यथावत्कर्मकर्ता चेति । यथा येन प्रकारेणोक्तं तेनैव प्रकारेण कर्मणां श्रौतस्मार्तानां कर्तेत्यर्थः । तदुक्तं 'ईजे च भगवन्तं यज्ञक्रतुरूप'मित्यादिना । [अ]सङ्गानिष्टप्रदर्शक इति । सङ्गात् भगवत्सम्बन्धरहितात् अनिष्टमनर्थं प्रदर्शयतीति तथा, सङ्गस्येति वा । तदुक्तं 'स एकदा महानद्या'मित्यादिना ॥ ७४ ॥

आवश्यकपुनर्जन्मकर्ममार्गप्रदर्शकः ।
यज्ञरूपमृगः शान्तः सहिष्णुः सत्पराक्रमः ॥ ७५ ॥

[अ]आवश्यकपुनर्जन्मकर्ममार्गप्रदर्शक इति । अवश्यमेवावश्यकं तादृशं यत्पुनर्जन्म तदर्थो यः कर्ममार्गस्तत्कारणीभूतं कर्म तस्य लोके प्रदर्शको ज्ञापक इत्यर्थः । भगवदिच्छोपात्तकर्मणां प्राबल्यमेवेति ज्ञापितम्, अन्यथेदृशस्यैव कथं स्यादिति भावः । [अ]यज्ञरूपमृग इति । यज्ञस्य वृषलैर्भद्रकालीं यक्ष्यमाणस्य, रूपं सम्पत्तिस्तदर्थं मृग्यते अन्विष्यते पश्वर्थमिति यज्ञरूपमृगः, तदुक्तं 'अथ वृषलराजपणि'रित्यादौ । [अ]शान्त इति । वृषलैर्वध्यानीतोऽप्यक्रोधनत्वाच्छान्त इत्यर्थः । अत एव सहिष्णुः सहनशील इत्यर्थः । [अ]सत्पराक्रम इति । सन् सत्सु वा पराक्रमो यस्येति, सन् भगवान् तत्परः तान् नातिक्रामतीति वा, तानाक्रमतीति वा, सतः पिपर्तीति सत्परो भगवान् वेति ॥ ७५ ॥

रहूगणगतिज्ञश्च रहूगणविमोचकः ।
भवाटवीतत्त्ववक्ता बहिर्मुखहिते रतः ॥ ७६ ॥

[अ]रहूगणगतिज्ञश्चेति । रहूगणस्य गतिं ज्ञानोपायं जानातीति तथा । [अ]रहूगणविमोचक इति । रहूगणं वै कालात् ज्ञानोपदेशेन मोचितवानित्यर्थः । [अ]भवाटवीतत्त्ववक्तेति । भवाटवीपदसङ्केतग्रहस्य तत्त्वतो वक्ता । [अ]बहिर्मुखहिते रत इति । बहिर्मुखानां वेदबाह्यानां हिते हितनिमित्तं सङ्क्रीडितं यस्येति, उन्मत्तवदाचरितं भगवतः पाषण्डिनामग्रे जीवनहेतुर्भविष्यतीति भावः । तदुक्तं 'यमुह वा व केचित् पाषण्डिन' इत्यादौ ॥ ७६ ॥

गयस्वामी स्थानवंशकर्ता स्थानविभेदकृत् ।
पुरुषावयवो भूमिविशेषविनिरूपकः ॥ ७७ ॥

[अ]गयस्वामीति । गयस्य राजर्षेः स्वामी प्रभुरित्यर्थः, तदुक्तं 'गयो राजर्षिप्रवर' इत्यादौ । [अ]स्थानवंशकर्तेति । स्थानं स्थितिर्धर्मस्य, तदर्थं गयस्य वंशस्य कर्तेति । [अ]स्थानविभेदकृदिति । स्थानस्य वंशस्थितेः विभेदं सत्था करोतीति तथा, प्रियव्रतवंशसंस्थाकर्तेत्यर्थः । [अ]पुरुषावयव इति । पुरुषस्य विराड्रूपस्य अवयवो भूगोलकं तद्रूप इत्यर्थः । 'पृथिवी मे शरीरे श्रिते'ति श्रुतेः । [अ]भूमिविशेषविनिरूपक इति । भूमिविशेषाणां द्वीपवर्षपर्वतादीनां विशेषतो मानादिकथनपूर्वकं निरूपणकर्तेत्यर्थः । तदुक्तं 'प्राधान्येनैव भूगोलक'मित्यादिना ॥ ७७ ॥

**जम्बूद्वीपपतिर्मेरुनाभिपद्मरुहाश्रयः ।**
**नानाविभूतिलीलाढ्यो गङ्गोत्पत्तिनिदानकृत् ॥ ७८ ॥**

[३६२] **जम्बूद्वीपपतिरि**ति । जम्ब्वाख्यस्य द्वीपस्य पतिः स्वामीत्यर्थः । [३६३] **मेरुनाभिपद्मरुहाश्रय** इति । इलाव्रतवर्षस्य मध्यं नाभिस्तत्र नाभौ पद्मवद्रुहः प्रादुर्भावो यस्यासौ नाभिपद्मरुहः, मेरुश्चासौ नाभिपद्मरुहश्च मेरुनाभिपद्मरुहः स चासावाश्रयश्चेति तथा, सुरालयत्वादाश्रयत्वं 'मेरुः शिखरिणामह'मिति भगवद्वचनात् तद्रूपत्वम् । [३६४] **नानाविभूतिलीलाढ्य** इति । नानाविधाः याः विभूतिलीलाः लक्ष्मीविलासास्ताभिराढ्यः समृद्ध इत्यर्थः । यद्वा । नानाविभूतिभिर्लीलाभिश्चाढ्यः इति । तदुक्तं 'देवोद्यानानि भवन्ती'त्यादिना । [३६५] **गङ्गोत्पत्तिनिदानकृ**दिति । गङ्गाया विष्णुपद्या उत्पत्तेर्निदानं स्थानं करोतीति तथा । तदुक्तं 'तत्र भगवतः साक्षा'दित्यादिना ॥ ७८ ॥

**गङ्गामाहात्म्यहेतुश्च गङ्गारूपोऽतिगूढकृत् ।**
**वैकुण्ठदेहहेत्वम्बुजन्मकृत् सर्वपावनः ॥ ७९ ॥**

[३६६] **गङ्गामाहात्म्यहेतुश्चे**ति । गङ्गाया माहात्म्यं महिमा तत्र हेतुः, स्वचरणसम्बन्धकारकत्वादिति । [३६७] **गङ्गारूप** इति । गङ्गा रूपं यस्य, 'स्रोतसामस्मि जाह्नवी'ति भगवद्वचनात्, 'योऽसौ निरञ्जनो देव' इत्यपि । [३६८] **अतिगूढकृ**दिति । अन्येभ्यस्तीर्थेभ्योऽप्यत्यन्तं गूढं गुप्तं गङ्गारूपं तीर्थं करोतीति तथा, अतिगूढमपि पापं गङ्गारूपेण कृन्ततीति वा । [३६९] **वैकुण्ठदेहहेत्वम्बुजन्मकृ**दिति । वैकुण्ठो भगवान्, लोको वा, तत्सम्बन्धी यो देहस्तत्र हेतुभूतं यदम्बु गङ्गाजलं तस्य जन्मकर्तेति । भगवत्सेवायोग्यदेहसम्पादकत्वं तु गङ्गोदकस्य 'तत्पादसलिलं यथे'त्यस्य व्याख्याने प्रपञ्चितमाचार्यैः । [३७०] **सर्वपावन** इति । सर्वान् आब्रह्मस्तम्बपर्यन्तान् गङ्गारूपेण पावयतीति तथा ॥ ७९ ॥

**शिवस्वामी शिवोपास्यो गूढः सङ्कर्षणात्मकः ।**
**स्थानरक्षार्थमत्स्यादिरूपः सर्वैकपूजितः ॥ ८० ॥**

[३७१] **शिवस्वामी**ति । शिवस्य स्वामी सेव्य इति, शिवरूपस्वामीति वा, तदुक्तं 'इलावर्ते तु भगवान् भव एक' इत्यादिना । तदेव प्रकारान्तरेणाप्याहुः [३७२] **शिवोपास्य** इति । शिवस्य उपास्यः, शिवत्वेनोपास्य इति वा । [३७३] **गूढ** इति । पुरुषमानागम्यस्थलस्थितत्वाद्गूढो गुप्त इत्यर्थः । [३७४] **सङ्कर्षणात्मक** इति । सम्यक् कर्षति अन्तकाले सर्वानिति सङ्कर्षणः संहारमूर्तिस्तदात्मकस्तद्रूप इत्यर्थः । तदुक्तं 'तुरीयां तामसीं मूर्ति' मित्यादिना । [३७५] **स्थानरक्षार्थमत्स्यादिरूप** इति । स्थानानां द्वीपवर्षादीनां रक्षार्थं मत्स्यादिरूपेण तत्र तत्र स्थित इत्यर्थः । येन रूपेण यत्र स्थितः तत्सर्वं मूले स्पष्टम् । [३७६] **सर्वैकपूजित** इति । सर्वैः पूज्यस्वरूपैः भक्तैर्वा एक एव पूजितः, उपासनार्थं नानात्वेऽपि परमार्थतस्तु सर्वापि

मूर्तिः कृष्णस्यैवेति, स एव पूजित इति भावः । 'यो यो यां यां तनुं भक्तः' इति भगवद्वचनात् ॥ ८० ॥ पुनस्तदेवाहुः—

**उपास्यनानारूपात्मा ज्योतीरूपो गतिप्रदः ।**
**सूर्यनारायणो वेदकान्तिरुज्ज्वलवेषधृक् ॥ ८१ ॥**

**उपास्यनानारूपात्मेति** । उपास्यो नानारूपो मत्स्यादिरूपः आत्मा अवतारो यस्येति । **ज्योतीरूप** इति । ज्योतिस्तेजस्तद्रूपो रविरित्यर्थः । 'ज्योतिषां रविरंशुमानि'ति वाक्यात् । **गतिप्रद** इति । गत्या उदग्दक्षिणरूपया सर्वेभ्यः शुभाशुभं प्रकर्षेण ददातीति तथा । **सूर्यनारायण** इति । सूर्यमण्डलमध्यवर्ती नारायणः सूर्यनारायणस्तद्रूप इति । तदुक्तं 'स एष भगवानादित्यरूप' इत्यादिना, 'ध्येयः सदा सवितृमण्डलमध्यवर्ती'त्यादिना । **वेदकान्तिरि**ति । वेदः त्रयी, सैव कान्तिः स्वरूपं यस्येति तथा, कान्तिर्यस्येति वा । तदुक्तं 'आत्मानं त्रयीमय' मित्यादिना सूर्यमण्डलस्य त्रयीरूपत्वम्, तैत्तिरीयनारायणोपनिषदि 'आदित्यो वा एष एतन्मण्डल'मित्यनुवाके स्पष्टमाम्नातम्, 'ऋग्भिः पूर्वाह्णे दिवि देव ईयते यजुर्वेदे तिष्ठति मध्ये अह्नः सामवेदेनास्तमये महीयते' । 'वेदैरशून्यस्त्रिभिरेति सूर्य' इति श्रुत्यन्तरमपि । **उज्ज्वलवेषधृगि**ति । उज्ज्वलं दीप्तं वेषं रूपं धारयतीति तथा ॥ ८१ ॥

**हंसोऽन्तरिक्षगमनः सर्वप्रसवकारणम् ।**
**आनन्दकर्ता वसुदो बुधो वाक्पतिरुज्ज्वलः ॥ ८२ ॥**

**हंस** इति । हन्ति गच्छति आयुःक्षयकारकत्वेन, सर्वान् हिनस्ति च । आयुःक्षयकारकत्वं तु सूर्यस्य 'योसौ तपन्नुदेति' इत्यनुवाके स्पष्टमाम्नातम्, 'हंसः शुचिष'दिति मन्त्रवर्णाच्च । **अन्तरिक्षगमन** इति । अन्तरिक्ष एव गच्छतीति तथा । **सर्वप्रसवकारणमि**ति । सर्वेषां प्राणिनां प्रसवः प्रेरणं तत्र कारणं कर्तेत्यर्थः । 'सविता प्रसवानामीश' इति श्रुतेः । ( सूर्यनामान्युक्तानि । अथ चन्द्राद्यष्टग्रहरूपनामान्याहुः ) **आनन्दकर्ते**ति आनन्दस्याह्लादस्य कर्ता कारकश्चन्द्र इत्यर्थः । **वसुद** इति । वसूनि द्यति क्रूरत्वात्, ददाति वा एकादशस्थानस्थित इति । वसुदो मङ्गल इत्यर्थः । **बुध** इति । बुध्यते जानातीति बुधः । **वाक्पतिरि**ति । वाचां पतिर्वाक्पतिर्बृहस्पतिरित्यर्थः । **उज्ज्वल** इति । उज्ज्वलः सितः शुभ्रत्वात् शुक्र इत्यर्थः ॥ ८२ ॥

**कालात्मा कालकालश्च कालच्छेदकृदुत्तमः ।**
**शिशुमारः सर्वमूर्तिराधिदैविकरूपधृक् ॥ ८३ ॥**

**कालात्मेति** । कालः श्यामः आत्मा देहो यस्येति, सर्वपीडाकरत्वात् कालरूप इति वा, शनैश्चर इत्यर्थः । **कालकालश्चेति** । कालात् सौरेरपि कालः श्यामः, तमस्कारित्वाद्राहुरित्यर्थः । **कालच्छेदकृदि**ति । कालस्य राहोः छेदो द्वैधीकरणं तेनैव केतुं करोतीति तथा, अभेदविवक्षया तद्रूप इत्यर्थः । **उत्तम** इति । अतिशयेन उत् उच्चः ऊर्ध्वतम इत्यर्थः । शिशुमारचक्रस्य सर्वग्रहोपरि स्थितत्वात् । **शिशुमार** इति । शिशून् मारयतीति शिशुमारो जलजन्तु-

निशेप , पुच्छादिना समानाकृतित्वात् तन्नाम्ना निर्देशस्तद्रूप इति । सर्वमूर्तिरिति । सर्वेषा धर्मब्रह्मादीना मूर्तयोऽस्मिन्निति तथा, सर्वमूर्तित्व तु तैत्तिरीयारण्यके ध्रुवोपस्थानानुवाके 'शिशुमारचक्रस्य भू प्रपद्य' इत्यादौ स्फुटम् , मूलेपि 'यस्य पुच्छाग्रेऽवाक् शिरस' इत्यादौ । तच्च सर्वेषामाधिदैविकस्वरूपमित्याहु आधिदैविकरूपधृगिति । आधिदैविक रूप धारयतीति तथा ॥ ८३ ॥

**अनन्तसुखभोगाढ्यो विवरैश्वर्यभाजनम् ।**
**सङ्कर्षणो दैत्यपतिः सर्वाधारो बृहद्वपु ॥ ८४ ॥**

अनन्तसुखभोगाढ्य इति । अनन्तस्य अपरिमितस्य सुखस्य भोगस्तेनाढ्य समृद्ध , स आढ्यो यस्मिन्निति वा, यस्माद्वा । विवरैश्वर्यभाजनमिति । अधस्तात् सर्व सप्तस्वपि विवरेषु अतलादिषु यदैश्वर्य विभूतिस्तद्भाजयति, तस्य भाजनमाश्रय इति वा । तदुक्त 'एतेषु हि बिलस्वर्गे'ष्वित्यादिना । सङ्कर्षण इति । सम्यक् कर्षति सर्वान् एकत्र करोतीति तथा । पातालादप्यध सङ्कर्षणस्थितिरित्युक्तम् , तदुक्त 'तस्य मूले त्रिंशद्योजने'त्यादि । दैत्यपतिरिति । दैत्याना पति स्वामी तामसत्वात् । सर्वाधार इति । सर्वस्य सविवरभूगोलकस्य आधार आश्रय इति । अत एव । बृहद्वपुरिति । बृहत् प्रवृद्ध वपु शरीर यस्येति, तदुक्त 'मूर्धन्यर्पितमणुव'दि त्यादिना ॥ ८४ ॥

**अनन्तनरकच्छेदी स्मृतिमात्रार्तिनाशन' ।**
**सर्वानुग्रहकर्ता च,**

अनन्तनरकच्छेदीति । अनन्ताना नराणा कानि शिरासि सहारसमये छिनत्तीति तथा । स्मरणादेवानन्तनरकयातनानाशक इति वा । अत एव । स्मृतिमात्रार्तिनाशन इति । स्पष्टम् । सर्वानुग्रहकर्ता चेति । सर्वेष्वपि नतेषु अनुग्रह हित करोतीति तथा । नरकयातनाप्रदर्शनेन सर्वान् पापभीतान् करोतीति भाव ।

इति पञ्चमस्कन्धनामानि ॥

---

## अथ षष्ठस्कन्धनामानि ॥

**मर्यादाभिन्नशास्त्रकृत् ॥ ८५ ॥**

मर्यादाभिन्नशास्त्रकृदिति । साधनानुरूपफलदान मर्यादा, साधन विना अल्प-साधनेन वा यन्महाफलदानम् मर्यादाभिन्नम् , तच्च केवलभगवदनुग्रहमूलमेकमेव पुष्टिकृत मिति यावत् , 'पोषण तदनुग्रह' इति वाक्यात् । मर्यादाभिन्नस्य पुष्टे शास्त्र पुष्टिलीला-प्रतिपादक षष्ठस्कन्धरूप करोतीति तथा ॥ ८५ ॥

कालान्तकभयच्छेदी नामसामर्थ्यरूपधृक् ।
उद्धारानर्हगोसात्मा नामादिप्रेरकोत्तमः ॥ ८९ ॥

कालान्तकभयच्छेदीति । कालो यमः अन्तको मृत्युः, ताभ्यां वा यद्भयं मृत्युनरकादेः, तस्य छेदनशील इत्यर्थः । इदं सर्वं नामसामर्थ्यप्राकट्यपूर्वकमजामिलमोचने स्फुटम् । नामसामर्थ्यरूपधृगिति । नाम्नां यत्सामर्थ्यं यथेष्टपापापनोदनशक्तिस्तद्रूपं धारयतीति तथा 'यद्यद्विभूतिमत्सत्त्व'मितिवाक्यात् । उद्धारानर्हगोसात्मेति । उद्धरणमुद्धारः संसारान्मोक्षः, यत्र ये अनर्हाः अयोग्याः तेषां गोसा रक्षकः आत्मा यस्येति, प्रकृते तु तादृशोऽजामिल एव । अन्येप्यसंख्याः सन्तीति ज्ञेयम्, अत एव नरके पच्यमानानामपि श्रीकृष्णनामोच्चारणमात्रेण वैकुण्ठारोहणं श्रूयते । नृसिंहपुराणे मार्कंडेयमृत्युप्रसङ्गेन तत्रत्यानि कानिचिद्वचनानि लिख्यन्ते । 'व्यास उवाच । इत्येवं किङ्करानुक्त्वा मृत्युं च पुरतः स्थितम् । यमो निरीक्ष्य च जनं नरकस्थं प्रपीडितम् । कृपया परया युक्तो विष्णुभक्त्या विशेषतः । जनस्यानुग्रहार्थाय तेनोक्ता वागिमां शृणु । नरके पच्यमानस्तु यमेन परिभाषितः । किं त्वया नार्चितो देवः केशवः क्लेशनाशनः । उदकेनाप्यलाभे तु द्रव्याणां पूजितः प्रभुः । यो ददाति स्वकं लोकं स त्वया किं न पूजितः । नारसिंहो हृषीकेशः पुण्डरीकनिभेक्षणः । स्मरणान्मुक्तिदो नृणां स त्वया किं न पूजितः । इत्युक्त्वा नारकान् सर्वान् पुनराह स किङ्करान् । वैवस्वतो यमः साक्षाद्विष्णुभक्तिविजृम्भितः । नारदाय स विश्वात्मा प्राहेदं विष्णुरव्ययः । अन्येभ्यो वैष्णवेभ्यश्च सिद्धेभ्यश्चेति नः श्रुतम् । तद्वः प्रीत्या प्रवक्ष्यामि हरिवाक्यमनुत्तमम् । शिक्षार्थं किङ्कराः सर्वे शृणुत प्रयतो हरेः । कृष्ण कृष्णेति कृष्णेति यो मां स्मरति नित्यशः । जलं भित्त्वा यथा पद्मं नरकादुद्धराम्यहम् । पुण्डरीकाक्ष देवेश नरसिंह त्रिविक्रम । त्वामहं शरणं प्राप्त इति यस्तं समुद्धरेत् । त्वां प्रपन्नोऽस्मि शरणं देवदेव जनार्दन । इति यः शरणं प्राप्तस्तं क्लेशादुद्धराम्यहम् । व्यास उवाच । इत्युदीरितमाकर्ण्य हरिवाक्यं यमेन तु । नारकाः कृष्ण कृष्णेति नारसिंहेति चुक्रुशुः । यथा यथा हरेर्नाम कीर्तयन्त्यत्र नारकाः । तथा तथा हरौ भक्तिमुद्वहन्तो भुवन्निदम् । नारका ऊचुः । ॐ नमो भगवते वासुदेवाय केशवाय महात्मने । भक्तप्रियाय देवाय यज्ञाय हरये नमः । लोकनाथाय शान्ताय यज्ञेशायादिमूर्तये । अनन्तायाप्रमेयाय नारसिंहाय ते नमः । नारायणाय गुरवे शङ्खचक्रगदाभृते । वेदप्रियाय महते त्रिविक्रम नमो नमः । वाराहायाप्रतर्क्याय वेदाङ्गाय गदाभृते । महाद्युतिमते नित्यं ब्रह्मण्याय नमो नमः । वामनाय बहुज्ञाय वेदवेदाङ्गधारिणे । बलिबन्धनदक्षाय वेदपालाय ते नमः । विष्णवे सुरनाथाय व्यापिने परमात्मने । चतुर्भुजाय शुद्धाय शुद्धद्रव्याय ते नमः । जामदग्न्याय रामाय दुष्टक्षत्रान्तकाय च । रामाय रावणान्ताय नमः स्तुभ्यं महात्मने । अस्मात् सुदुःसहात् कृष्ण नारसिंह जनार्दन । अस्मानुद्धर गोविन्द पूजितस्त्वं नमोस्तु ते । व्यास उवाच । इति सङ्कीर्तितो विष्णुर्नारकैर्भक्तिपूर्वकम् । नारकीयातनाः सर्वास्तेषां नष्टा महात्मनाम् ।

दिव्यरूपधराः सर्वे दिव्यवस्त्रविभूषिताः । दिव्यगन्धानुलिप्ताङ्गा दिव्याभरणभूषिताः । नानारूपविमानेषु दिव्येषु हरिपूरुषैः । विष्णुलोकं यमो गत्वा नमश्चक्रे तदा हरिम् । यन्नामकीर्तनायाता नारकाः केशवालयम् । तं नमामि महादेवं नारसिंहं महद्गुरुम् । तस्य वै नारसिंहस्य विष्णोरमिततेजसः । प्रणामं ये च कुर्वन्ति तेषामपि नमो नमः । दृष्ट्वा प्रशान्तं नरकाभिमुग्रं यन्त्रादि सर्वं विपरीतमत्र । पुनः [redacted] शिक्षार्थमथात्मदूतान् यमो हि वक्तुं कृतवान् मनश्च । व्यास उवाच । स्वपुरुषमभिवीक्ष्य पाशहस्तं वदति यमः किल तस्य कर्णमूले । परिहर मधुसूदनप्रपन्नान् प्रभुरहमन्यनृणां न वैष्णवानाम् । अहममरगणार्चितेन धात्रा यम इति लोकहिताय वै नियुक्तः । हरिगुरुविमुखान् प्रशास्मि मर्त्यान् हरिचरणप्रणतान् नमस्करोमि । सुगतिमभिलषामि वासुदेवादहमपि भागवतः स्थिरान्तरात्मा । मधुमथनवशोऽस्मि न स्वतन्त्रः प्रभवति संयमने ममापि कृष्णः । भगवति विमुखस्य नास्ति सिद्धिर्विषममृतं भवतीति नैतदस्ति । वर्षशतमपीह धम्यमानं व्रजति न काञ्चनतामयः कदाचित् । नहि शशकलुषच्छविः कदाचित्तिमिरपराभवतामुपैति चन्द्रः । भगवति च हरावनन्यचेता भृशमलिनोपि विराजते मनुष्यः । विषधरकणभक्षशङ्करोक्तिर्दशबलपञ्चशिखाक्षपादवादात् । अहमपि सुविचार्य लोकतन्त्रं भगवदुपास्तिमृते न सिद्धिरस्तु । सुरपतिरसुरैः सदाभियुक्तः पशुपतिरप्यविनीतभृत्यवर्गः । सुरगुरुरहमसादकर्ता हरिचरणौ मरणापवर्गहेतू । शुभमिदमुपलभ्य मानुषत्वं सुकृतवशेन वृथेन्द्रियार्थहेतोः । रमयति कुरुते न मोक्षमार्गं स दहति चन्दनमेव भस्महेतोः । मुकुलितकरकुड्मलैः सुरेन्द्रैः सततनमस्कृतपादपङ्कजाय । अविहितगतये सनातनाय प्रथमजगत्पतये नमोऽस्त्वजाय । इति घोषयते भ्रमः स्वदुन्दुभीन् गमयति सर्वदिशासु युग्मताडिताः । यमदूता यद्वचश्चिभ्रगुप्त शृणु इत्थं परिहर विष्णुभक्तान् । यमाष्टकमिदं पुण्यं पठते यः शृणोति च । मुच्यते सर्वपापेभ्यो विष्णुलोकं स गच्छति । इदं स्वमुक्तं यमवाक्यमुत्तमं यथाधुना ते हरिभक्तिकीर्तनं । पुनश्च वक्ष्यामि पुरातनीं कथां भृगोश्च मैत्रेण च या कृता पुरा[1] । इति नृसिंहपुराणे नवमोध्यायः । एवमादीनि बहून्येव सन्तीति विस्तरभयान्न लिख्यन्ते । **नामादिप्रेरकोत्तम** इति । नाम आदिर्येषां साधनानां तेषां प्रेरकः प्रेरणकर्ता, [redacted] चासावुत्तमश्चेति, नामादिप्रेरकः उत्तमो यस्येति वा ॥ ८६ ॥

अजामिलमहादुष्टमोचकोऽघविमोचकः ।
धर्मवक्ताऽक्लिष्टवक्ता विष्णुधर्मस्वरूपधृक् ॥ ८७ ॥

**अजामिलमहादुष्टमोचक** इति । अजामिलनामा यो ब्राह्मणः स एव महादुष्टः महापापैः महद्भिर्वा दूषितः तस्य मोचकः, नामसामर्थ्येन दोषान्मोचक इति भावः । **अघविमोचक** इति । अघस्य शूद्रासम्बन्धजनितस्य, अघाद्वा । **धर्मवक्ते**ति । धर्मस्य स्वकीयस्य विष्णुदूतरूपेण वक्तेत्यर्थः । तदुक्तं 'अहो कष्टं धर्मदृशा'मिति । **अक्लिष्टव-**

---

[1] मन्त्रादीति क्वचित्पाठः ।

त्केति । अक्लिष्टं शास्त्राविरुद्धं यथा स्यात्तथा धर्मस्य वक्तेति, अक्लिष्टस्य सुखोपायस्य वक्तेति
वा । सुखोपायस्तु नामोच्चारणमात्रमेव, तदतिरिक्तं दुःखरूपमेवेति ज्ञेयम्, तत्सर्वं पुराणा-
दिषु बहुषु श्रूयते 'सर्वधर्मोज्झिता' इत्यादि । मूलेपि 'अयं हि कृतनिर्वेश' इत्यादिना ।
**विष्णुधर्मस्वरूपधृगिति** । विष्णुधर्मा एव स्वं धनं येषान्ते विष्णुधर्मस्वाः भक्ताः तेषु
रूपं स्वस्वरूपं धारयति स्थापयति वा । यद्वा । धर्मोपमः विष्णुश्चासौ धर्मस्वरूपधृक् चेति
'यमः संयमतामह'मिति वाक्यात् ॥ ८७ ॥

**सन्मार्गप्रेरको धर्ता त्यागहेतुरधोक्षजः ।**
**वैकुण्ठपुरनेता च दाससंवृद्धिकारकः ॥ ८८ ॥**

**सन्मार्गप्रेरक** इति । सतां मार्गः सन्मार्गः, संश्चासौ मार्गश्चेति वा, स तु भगव-
न्नामैकपरतारूपस्तत्र प्रेरकः । अत एव नारदेरुक्तं 'हरेर्नामैव नामैव नामैव मम जीवनम् ।
कलौ नास्त्येव नास्त्येव नास्त्येव गतिरन्यथे'ति । **धर्तेति** । भक्तानां धारक इत्यर्थः, अत एव
'कौन्तेय प्रतिजानीहि न मे भक्तः प्रणश्यति'इति । **त्यागहेतुरिति** । त्यागो विषयस्य सम्प्राप्ति-
हेतुर्यस्येति । **अधोक्षज** इति । अधोक्षं इन्द्रियाजन्यं ज्ञानं जनयतीति । **वैकुण्ठपुरनेता**
चेति । वैकुण्ठ एव पुरं तत्र नेता अजामिलमिति शेषः । यद्वा । वैकुण्ठपुरस्य नेता नायक
इत्यर्थः । **दाससंवृद्धिकारक** इति । दासानां भागवतमुख्यानां संवृद्धिः सर्वतः समृ-
द्धिस्तत्कर्तेत्यर्थः । तदुक्तं 'स्वयम्भूर्नारद'इत्यादिना ॥ ८८ ॥

**दक्षप्रसादकृद्धंसगुह्यस्तुतिविभावनः ।**
**स्वाभिप्रायप्रवक्ता च मुक्तजीवप्रसूतिकृत् ॥ ८९ ॥**

**दक्षप्रसादकृदिति** । दक्षे प्राचेतसे प्रसादं सृष्टिसामर्थ्यं करोतीति तथा । **हंसगु-
ह्यस्तुतिविभावन** इति । हंसः परमात्मा तत्सम्बन्धिनी या गुह्यस्तुतिस्तत्र विभावयति
प्रेरयति तथा, विभाव्यते चिन्त्यते इति वा । तदुक्तं 'अस्तौषीद्धंसगुह्येने'त्यादिना । **स्वाभि-
प्रायप्रवक्ता** चेति । स्वस्याभिप्रायो विभूतिजननं तस्य प्रकर्षेण वक्तेति । तदुक्तं 'ममैष
कामो भूताना'मित्यादौ । **मुक्तजीवप्रसूतिकृदिति** । मुक्तानां मुक्तप्रायाणामग्रे सृष्टय
भावात्, जीवानां हर्यश्वादीनां प्रसूतिमुत्पत्तिं करोतीति तथा ॥ ८९ ॥

**नारदप्रेरणात्मा च हर्यश्वब्रह्मभावनः ।**
**सुबलाश्वहितो गूढवाक्यार्थज्ञापनक्षमः ॥ ९० ॥**

**नारदप्रेरणात्मेति** । नारदस्य प्रेरणे आत्मा चित्तं यस्येति । **हर्यश्वब्रह्मभावन**
इति । नारदोपदेशेन हर्यश्वान् ब्रह्मत्वं भावयति प्रापयतीति तथा । तदुक्तं 'उवाच चाथ हर्यश्वा'
नित्यादि । **सुबलाश्वहित** इति । शोभनं बलमस्येति सुबलो भगवान्, तमश्नुवन्ति प्राप्नु-
वन्तीति सुबलाश्वाः, तेभ्यो हित इति । अत्र 'सुबलाश्वहित' इति प्रामादिकपाठ इव लक्ष्यते ।
आचार्योक्तिः 'शबलाश्वहित'इत्येवं भवितुं युक्ता, शबलाश्वशब्देन हर्यश्वाभिधानात् । अत एव

विष्णुपुराणेपि श्रूयते 'विपर्ययिपरास्ते तु शबलाश्वाः प्रजाः पुन'रिति । सुबलाश्वपदस्य कष्टकल्पनया हर्यश्वपरत्वेन व्याख्यानं लोकप्रसिद्धिनिबन्धनं ज्ञेयम्, वस्तुतस्तु 'शबलाश्वहित' इत्येवं पठनीयम् । गूढवाक्यार्थज्ञापनक्षम इति । नारदोक्तगुह्यवाक्येषु ज्ञापने बोधने क्षमः समर्थः । तदुक्तं 'तथैकपुरुषं राष्ट्र'मित्यादिना ॥ ९० ॥

**गूढार्थज्ञापनः सर्वमोक्षानन्दप्रतिष्ठितः ।**
**पुष्टिप्ररोहहेतुश्च दासैकज्ञातहृद्गतः ॥ ९१ ॥**

गूढार्थज्ञापन इति । गूढार्थो हर्यश्वानां मोक्षरूपस्तं दक्षाय ज्ञापयतीति । तदुक्तं 'एकस्मिन् काल'इत्यादिना । सर्वमोक्षानन्दप्रतिष्ठित इति । सर्वेषां हर्यश्वादीनां मोक्षरूपः आनन्दः प्रतिष्ठितः सञ्जातो यस्मादिति । सर्वेषां मोक्षेण नारदस्यानन्दः प्रतिष्ठितः स्थापितो येनेति वा । पुष्टिप्ररोहहेतुश्चेति । पुष्टिमार्गीयो यः प्ररोहः सृष्टिस्तत्र हेतुरित्यर्थः । तदुक्तं 'ततः प्राचेतस'इत्यादिना । दासैकज्ञातहृद्गतः इति । दासैरेकैर्ज्ञातं हृद्गतमभिप्रायो यस्य, कथमन्यथा नारदः कुर्यादुपदेशं भगवदभिप्रायं विनेति ॥ ९१ ॥

**शान्तिकर्ता सुहितकृत् स्त्रीप्रसूः सर्वकामधुक् ।**
**पुष्टिवंशप्रणेता च विश्वरूपेष्टदेवता ॥ ९२ ॥**

शान्तिकर्तेति । दक्षस्य शान्तेरनुनयस्य ब्रह्मवाक्येन कर्तेत्यर्थः । सुहितकृदिति । धर्मादीनां भार्याप्रदत्वेन सुहितं करोतीति तथा, सम्यक् हितमिति । स्त्रीप्रसूरिति । स्त्रीरेव प्रसूतवानिति । सर्वकामधुगिति । तावतीभिरेव सर्वेषां कामान् विषयभोगान् दुग्धवानित्यर्थः । पुष्टिवंशप्रणेता चेति । पुष्ट्या अनुग्रहमात्रेणैव कृतो यो वंशो दक्षस्य तस्य प्रकर्षेण नेता विस्तारक इत्यर्थः । विश्वरूपेष्टदेवतेति । विश्वरूपस्य त्वाष्ट्रस्य इष्टा इष्टफलदात्री देवता नारायणरूपेत्यर्थः ॥ ९२ ॥ तदेवाहुः—

**कवचात्मा पालनात्मा च धर्मोपचितिकारणम् ।**
**विश्वरूपशिरश्छेदी त्वाष्ट्रयज्ञविनाशकः ॥ ९३ ॥**

कवचात्मेति । पालनात्मेति । कवचरूपेणेन्द्रस्य रक्षक इत्यर्थः । सर्वेषां पालनाय आत्मा यस्येति वा । धर्मोपचितिकारणमिति । धर्मणो नारायणात्मकस्य उपचितिर्विस्तरेण कथनं तत्र कारणमित्यर्थः । तदुक्तं 'यया गुप्तः सहस्राक्ष' इत्यादिना । विश्वरूपशिरश्छेदीति । विश्वरूपस्य शिरांसि छेत्तुं शीलमस्येति, तादृश इन्द्रस्तद्रूप इत्यर्थः । 'देवानामस्मि वासव'इति वचनात् । यद्यपि ब्रह्मण्यदेवस्यैवंकरणमनुचितं तथापि मर्यादाभिन्नलीलाकरणान्न दोषः । तदुक्तं 'तदेवहेलन'मित्यादि । त्वाष्ट्रयज्ञविनाशक इति । त्वष्टृसम्बन्धियज्ञस्य विनाशको निष्फलकर्तेत्यर्थः, इन्द्रस्य रक्षणात् ॥ ९३ ॥

**वृत्रस्वामी वृत्रगम्यो वृत्रव्रतपरायणः ।**
**वृत्रकीर्तिर्वृत्रमोक्षो मघवत्प्राणरक्षकः ॥ ९४ ॥**

**वृत्रस्वामीति** । वृत्रासुरदेहस्य स्वामी प्रभुरित्यर्थः । 'तस्माद्विष्णुं मत्वा भजती'ति श्रुतेः । **वृत्रगम्य इति** । वृत्रस्य गम्यः शरणगमनयोग्यः, तेन ज्ञातुं योग्य इति वा **वृत्रव्रतपरायण** इति । व्रतस्य व्रतस्य देवायुधैरन्यैर्देवैर्वा न मरिष्यामीत्येवंरूपस्य पराय रक्षणाय अयनं तत्र गमनं यस्येति, वृत्रो भक्तिपरायणो यस्येति वा, व्रतं भक्तिः । **वृत्रकीर्तिरिति** । वृत्रस्य कीर्तिः ख्यातिर्यस्मादिति, भक्तत्वादिन्द्रादिभिः स्तुतत्वात् । **वृत्रमोक्ष इति** । वृत्रस्य मोक्षः आसुरदेहाद्यस्मादिति, तदुक्तं ' किं व उच्चारिते'रित्यादिभिः । **मघवत्प्राणरक्षक** इति । मघः सौख्यं विद्यते यस्येति मघवा इन्द्रः, मघोनः प्राणानां रक्षकः पविप्राप्त्युपायोपदेशात् ॥ ९४ ॥

**अश्वमेधहविर्भोक्ता देवेन्द्रामीवनाशकः ।**
**संसारमोचकश्चित्रकेतुबोधनतत्परः ॥ ९५ ॥**

**अश्वमेधहविर्भोक्तेति** । इन्द्रकृताश्वमेधसम्बन्धिहविषां भोक्ता स्वीकारक इत्यर्थः । तदुक्तं 'हयमेधेन पुरुष'मित्यादिना । **देवेन्द्रामीवनाशक** इति । देवेन्द्रस्यामीवं ब्रह्महत्यादिरूपं रोगं तज्जनितं वा नाशयतीति, स्वयं यज्ञभोक्तृत्वेनेति । **संसारमोचक** इति । सम्यक् सरणं गमनं संसारः, अश्वमेधे साक्षादागमनं तेनैव ब्रह्महत्यायाः इन्द्रस्य मोचकः । **चित्रकेतुबोधनतत्पर** इति । चित्रकेतोः पुत्रशोकार्तस्याङ्गिरोनारदाभ्यां बोधने तत्परस्तत्पालक इत्यर्थः, तत्र कुशल इति वा ॥ ९५ ॥

**मन्त्रसिद्धिः सिद्धिहेतुः सुसिद्धिफलदायकः ।**
**महादेवतिरस्कर्ता भक्त्यै पूर्वार्थनाशकः ॥ ९६ ॥**

**मन्त्रसिद्धिरिति** । मन्त्रस्य नारदोपदिष्टस्य सिद्धिर्यस्मादिति, तद्रूप इति वा । तदुक्तं ' एतां मन्त्रोपनिषद'मित्यादिना । **सिद्धिहेतुरिति** । सिद्धिर्विशोकत्वं तत्र कारणमित्यर्थः । **सुसिद्धिफलदायक** इति । चित्रकेतोः सुसिद्धिः स्वप्राप्तिस्तद्रूपफलदातेत्यर्थः । '**सुसिद्ध**' इति पाठे सुसिद्धमन्त्रस्य फलदातेत्यर्थः । तदुक्तं 'संसिद्धोसि तया राज'न्नित्यादिना । **महादेवतिरस्कर्तेति** । सगौरीकस्य शिवस्य दुर्वचनतस्तिरस्कारक इत्यर्थः । तदुक्तं 'स एकदा विमानेने'त्यादिना । **भक्त्यै पूर्वार्थनाशक** इति । भक्त्यर्थं पूर्वार्थविद्याधरीयसम्पत्तिं नाशयतीति, सम्पत्तेर्भक्त्यन्तरायत्वात् ॥ ९६ ॥

**देवब्राह्मणविद्वेषवैमुख्यज्ञापकः शिवः ।**
**आदित्यो दैत्यराजश्च महत्पतिरचिन्त्यकृत् ॥ ९७ ॥**

**देवब्राह्मणविद्वेषवैमुख्यज्ञापक** इति । देवेषु ब्राह्मणेषु यो विशिष्टो द्वेषस्तेन स्वस्माद्वैमुख्यं भवति ज्ञापयतीति तथा । लोके ज्ञापनायैवं करणं चित्रकेतोरिति भावः । **शिवं** इति । मङ्गलरूपत्वान्निर्मलत्वात् शिव इति 'शाश्वतं शिवमच्युतमिति'श्रुतेः । **आदित्य इति** । आदित्यस्य सवितुरपत्यं तद्रूप इत्यर्थः । तदुक्तं 'पृश्निस्तु सवितुः पत्नी'त्यादिना । **दैत्यराज**-

श्चेति । दैत्येषु दैत्यपुत्रेषु प्रह्लादादिषु राजते तेषां राजेति वा, तदुक्तं 'अथ कश्यपदायादा'निति वा । महत्पतिरिति । महतो प्रह्लादवल्योर्महता वा । अचिन्त्यकृदिति । अचिन्त्येन सामर्थ्येन करोतीति, अचिन्त्यं वा करोतीति ॥ ९७ ॥

**मरुतां भेदकस्त्राता व्रतात्मा पुंप्रसूतिकृत् ।**

मरुतां भेदक इति । मरुतामेकोनपञ्चाशतो भेदको गणशः कर्तेत्यर्थः । तदुक्तं 'हतपुत्रादिति'रिति । त्रातेति । इन्द्रेणात्यन्तं हन्यमानस्य दितिगर्भस्य त्राता रक्षक इत्यर्थः । 'न ममार दितेर्गर्भ' मित्यादिना । व्रतात्मेति । व्रतं पुंसवनाख्यं आत्मा स्वरूपं यस्येति, व्रतेन आत्मा अवतारो यस्येति वा, तन्मूले स्पष्टम् । पुंप्रसूतिकृदिति । उक्तव्रतेन यथोक्तलक्षणस्य पुंसः प्रसूतिं करोतीति तथा ।

॥ इति षष्ठस्कन्धनामानि ॥

---

## ॥ अथ सप्तमस्कन्धनामानि ॥

**कर्मात्मा वासनात्मा च ऊतिलीलापरायणः ॥ ९८ ॥**

कर्मात्मेति । कर्म प्राकृतं तद्रूप इत्यर्थः । वासनात्मेति । पूर्वोक्तसंस्काररूप इत्यर्थः, वस्ते सर्वं वासयतीति वासनः, स चासावात्मा चेति । ऊतिलीलापरायण इति । 'ऊतयः कर्मवासना' इत्युक्तत्वात् कर्मवासनारूपलीला परमुत्कृष्टमयनं यस्येति तत्परायण इति वा ॥ ९८ ॥

**समदैत्यसुरः स्वात्मा वैषम्यज्ञानसंश्रयः ।**
**देहाद्युपाधिरहितः सर्वज्ञः सर्वहेतुविद् ॥ ९९ ॥**

समदैत्यसुर इति । दैत्याश्च सुराश्च दैत्यसुराः, समास्तुल्या दैत्यसुरा यस्येति । तदुक्तं 'समप्रियः सुहृ'दित्यादिना । स्वात्मेति । सर्वेषामपि स्वात्मेत्यर्थः । स्वे भक्तास्त एव तेषु वा आत्मा यस्येति । वैषम्यज्ञानसंश्रय इति । देवरक्षणमसुरहननं यत् सर्वसमर्थस्यापि तद्वैषम्यं ताद्दृग्ज्ञानं ज्ञानहेतुः सम्यग्यथा स्यात्तथा श्रयते, न तु स्वयं विषम इति भावः । 'समोऽहं सर्वभूते'ष्वित्यादिवचनात् । अत एव देहाद्युपाधिरहित इति । देहादिषुक्तो यः उपाधिः अहङ्कारादिः तद्धेतुभूतो वा तद्रहित इति । सर्वज्ञ इति । सर्वं जानातीति वा, सर्वो नारदादिर्ज्ञो यस्मादिति वा । सर्वहेतुविदिति सर्वैः कामादिभिर्हेतुभूतैर्विद्यते लभ्यते इति तथा, तदुक्तं 'कामाद्द्वेषाद्भया'दित्यादिना ॥ ९९ ॥

**ब्रह्मवाक्यस्थापनपरः स्वजन्मावधिकार्यकृत् ॥**
**सदसद्वासनाहेतुस्त्रिसत्यो भक्तमोचकः ॥ १०० ॥**

---

* मरुत्पतिरपि पाठः, तत्रापि उपरि निर्दिष्टसदृशः समासः कर्तव्यः ।

**ब्रह्मवाक्स्थापनपर** इति । ब्रह्मणां सनकादीनां वाचः, 'पापिष्ठामासुरीं योनि'मित्येवरूपायाः स्थापने सफलकरणे परः अभियुक्तः, तत्स्थापनमेव परमुत्तम प्रयोजन यस्येति वा । **स्वजन्मावधिकार्यकृदिति** । स्वस्य जन्म प्राकट्यं वराहनृसिंहवामनरामकृष्णादिरूप तदवधि यत्कार्यं द्वेषबुद्ध्युत्पादनरूपं तत्करोतीति तथा । **सदसद्वासनाहेतुरिति** । सती चासती च सदसती, ते च अमू वासने च सदसद्वासने ते प्राप्तिहेतू यस्य, तयोर्हेतुरिति वा, भगवद्विपयिण्योरुभयोस्तत्प्राप्तिहेतुत्वमुक्तमेव । 'आर्तेयं विनिहित' इत्यादिना । **त्रिसत्य** इति । त्रिभिरवतारैः सत्य ब्रह्मवचन सत्यकरण यस्येति, त्रिसत्यमिति पदव्याख्यानोक्तेर्वा, त्रिपत्य इति पाठे पत्य पौराणिक ज्ञेयम् । **भक्तमोचक** इति । भक्तयोर्मोचकः वैकुण्ठाधिकारादिति शेप ॥ १०० ॥

**हिरण्यकशिपुद्वेपी प्रविष्टात्माऽतिभीषणः ॥**
**शान्तिज्ञानादिहेतुश्च प्रह्लादोत्पत्तिकारणम् ॥ १०१ ॥**

**हिरण्यकशिपुद्वेपीति** । हिरण्यकशिपुर्द्वेपी यस्मिन्निति । **प्रविष्टात्मेति** । हिरण्यकशिपौ द्वेपविपयत्वेन प्रविष्ट आत्मा यस्येति, सर्वान्तर्यामित्वेन वा 'अन्त प्रविष्टः शास्ता जनाना'मिति श्रुते । **अतिभीषण** इति । अत्यन्तं भीषयति हिरण्यकशिपु भय प्रापयति, भ्रातृवधस्मरणादिति तथा । **शान्तिज्ञानादिहेतुश्चेति** । शोकशान्त्यर्थं यत् ज्ञान हिरण्यकशिपूक्त तत्र हेतु प्रेरक इत्यर्थ । तदुक्त 'अम्याम्ब हे वधू'रित्यादिना । **प्रह्लादोत्पत्तिकारणमिति** । प्रह्लादः उत्पत्तिकारणमवतारकारण यस्येति, प्रह्लादस्येति वा ॥ १०१ ॥

**दैत्यसिद्धान्तसद्वक्ता तपःसार उदारधीः ।**
**दैत्यहेतुप्रकटनो भक्तिचिह्नप्रकाशकः ॥ १०२ ॥**

**दैत्यसिद्धान्तसद्वक्तेति** । दैत्यानां सिद्धान्ते सिद्धान्तस्थाने सतः परमशास्त्रस्य भक्तमुखाद्वक्तेति, तदुक्त 'तत्साधु मन्ये सुरवर्य देहिना'मित्यादिना । **तपःसार** इति । तपो भजनरूप तदेव सार यस्येति । **उदारधीरिति** । उदारा निर्मला प्रह्लादस्य धीर्यस्मादिति । **दैत्यहेतुप्रकटन** इति । दैत्यस्य हेतु प्रह्लादस्यैव बुद्धौ परसङ्ग एव हेतुरित्येवरूप ज्ञापितवानित्यर्थः । तदुक्त 'जहास बुद्धिर्बालाना'मित्यादिना **भक्तिचिह्नप्रकाशक** इति । भक्तेश्चिह्नानि लक्षणानि प्रकाशयतीति तदुक्त 'परस्वश्चेत्यसद्ग्राह' इत्यादिना ॥ १०२ ॥

**सद्वेपहेतुः सद्वेपवासनात्मा निरन्तरः ।**
**नैष्ठुर्यसीमा प्रह्लादवत्सलः सङ्गदोपहा ॥ १०३ ॥**

**सद्वेपहेतुरिति** । सति प्रह्लादे दैत्यस्य द्वेप प्रति हेतु, तत्सम्बन्धादेव तथात्वात् । **सद्वेपवासनात्मेति** । सद्वेप एव वासनमाच्छादनमन्तरायभूत यस्यात्मनः स तथा । **निरन्तर** इति । अन्तरातीत्यन्तरः दैत्येभ्यो निःशेपेण तथा निरन्तर इति । **नैष्ठुर्यसीमेति** । नैष्ठुर्यस्य सीमाऽवधिरित्यर्थः । प्रह्लादविपये यातनानामारम्भ एव न प्रकटितवान्, अतस्त-

येति भावः । **प्रह्लादवत्सल** इति । तत्र तत्र रक्षाया अपि करणात्, तस्मिन् वत्सलो वात्सल्यवानित्यर्थः । **संङ्गदोषहेति** । प्रह्लादस्य वचनेन दैत्यसुतानामासुरसङ्गदोषं हृतवानित्यर्थः ।

**महानुभावः साकारः सर्वाकारः प्रमाणभूः ।**
**स्तम्भप्रसूतिर्नृहरिर्नृसिंहो भीमविक्रमः ॥ १०४ ॥**

**महानुभाव** इति । महानचिन्त्योऽनुभावः सामर्थ्यं यस्य, प्रह्लादस्य तद्रूप इत्यर्थः । 'प्रह्लादश्चास्मि दैत्याना'मिति वाक्यात् । यद्वा । प्रह्लादरक्षाकरणे योऽनुभावः स महान् यस्येति । **साकार** इति । आकरणमाकारः आह्वानं तेन सह वर्तत इति, तदुक्तं 'यस्त्वया मन्दभाग्योक्तो मदन्य' इत्यादिना । **सर्वाकार** इति । सर्वः आकारः स्वरूपं यस्येति । सर्वविलक्षणाकार इति वा । अत एवाद्भुतनृकेसरिरूपम् । **प्रमाणभूरि**ति । प्रह्लादवाक्यस्य प्रमाणाय प्रामाण्याय भवति, स्तम्भाज्जायत इति तथा । अन्यथा, भक्तवात्सल्यं भज्येत, तदुक्तं 'सत्यं विधातुं निजभृत्यभाषित'मित्यादिना । **स्तम्भप्रसूतिरि**ति । स्तम्भात् प्रसूतिः प्राकट्यं यस्येति, तदुक्तं 'स सत्यमेव परितं' इत्यादिना । **नृहरिरि**ति । ना चासौ हरिश्चेति, नृविशिष्टो हरिरिति वा, नृणां भयं हरतीति वा, नॄन् हरति संहारकत्वादिति वा । **नृसिंह** इति । ना च सिंहश्च तयोः समाहारो 'लिङ्गमशिष्यं लोकप्रमाणत्वा'दिति क्लीबत्वाभावः । **भीमविक्रम** इति । भीमो भयानको विक्रमः पादविक्षेपः पराक्रमो वा यस्येति, भीमेषु घोरदैत्येषु वा । तदुक्तं 'तं विक्रमन्त'मित्यादिना ॥ १०४ ॥

**विकटास्यो ललज्जिह्वो नखशस्त्रो जवोत्कटः ।**
**हिरण्यकशिपुच्छेदी क्रूरदैत्यनिवारकः ॥ १०५ ॥**

**विकटास्य** इति । विकटं विषममास्यं यस्येति । **ललज्जिह्व** इति । ललन्ती चलन्ती जिह्वा यस्येति । **नखशस्त्र** इति । नखान्येव शस्त्रमायुधं यस्येति । **जवोत्कट** इति । जवेन युद्धवेगेनोत्कटः असह्य इत्यर्थः । **हिरण्यकशिपुच्छेदी**ति । हिरण्यकशिपुं छेत्तुं शीलं यस्येति । **क्रूरदैत्यनिवारक** इति । तदनुचरेषु ये क्रूरा दैत्यास्तेषां नितरां वारकः हन्तेत्यर्थः ॥ १०५ ॥

**सिंहासनस्थः क्रोधात्मा लक्ष्मीभयविवर्धनः ।**
**ब्रह्माद्यत्यन्तभयभूरपूर्वाचिन्त्यरूपधृक् ॥ १०६ ॥**

**सिंहासनस्थ** इति । सिंहासने नृपासने तिष्ठतीति तथा । तदुक्तं 'ततः समायामुपविष्ट'मित्यादौ । **क्रोधात्मे**ति । क्रोधाविष्ट आत्मा स्वरूपं यस्येति तथा । **लक्ष्मीभयविवर्धन** इति । लक्ष्म्यां भयस्य विशेषेण वर्धयितेत्यर्थः । 'साक्षाच्छ्रीः प्रेषिते'त्यादौ । **ब्रह्माद्यत्यन्तभयभूरि**ति । ब्रह्मादीनामत्यन्तभयस्य भूः स्थानमित्यर्थः । तदुक्तं 'एवं सुरादयः सर्वे' इत्यादिना । सर्वेषां भयकारणमाह **अपूर्वाचिन्त्यरूपधृगि**ति । अपूर्वं यत्पूर्वं न जातं अचिन्त्यं मनसा कलयितुमप्यशक्यं यन्नृहरिरूपं तद्धारक इत्यर्थः ॥ १०६ ॥

**भक्तैकशान्तहृदयो भक्तस्तुत्यः स्तुतिप्रियः ।**
**भक्ताङ्गलेहनोद्धूतक्रोधपुञ्जः प्रशान्तधीः ॥ १०७ ॥**

**भक्तैकशान्तहृदय** इति । भक्त एवैको भक्तैकः प्रह्लादः, तदर्थं शान्तं क्रोधापेतं हृदयं यस्येति । **भक्तस्तुत्य** इति । भक्तेन प्रह्लादेन स्तुत्यः स्तोतुमर्हः । **स्तुतिप्रिय** इति । भक्तकृता स्तुतिः प्रिया यस्येति । **भक्ताङ्गलेहनोद्धूतक्रोधपुञ्ज** इति । भक्तस्य प्रह्लादस्याङ्गास्वादनेन य उद्धूतः अपगतः क्रोधराशिर्यस्मादिति । **प्रशान्तधीरिति** । प्रशान्ता क्रोधरहिता धीर्यस्येति, प्रशान्ता विषयपराङ्मुखी प्रह्लादस्य धीर्यस्मादिति वा ॥१०७॥

**स्मृतिमात्रभयत्राता ब्रह्मबुद्धिप्रदायकः ।**
**गोरूपधार्यमृतपाः शिवकीर्तिविवर्धनः ॥ १०८ ॥**

**स्मृतिमात्रभयत्रातेति** । महासङ्कटे नृसिंहस्मरणमात्रेणैव भयात् त्रायत इति तथा तदुक्तं 'एतद्वपुस्ते भगव'न्नित्यादिना । **ब्रह्मबुद्धिप्रदायक** इति । ब्रह्मणे बुद्धिं 'पुनरेवं वरदानं माकार्षी'रित्येवंरूपां प्रकर्षेण ददातीति तथा । तदुक्तं 'मैवं वरो सुराणां न' इत्यादिना । **गोरूपधारीति** । त्रिपुरं दिधक्षोः शम्भोर्जयार्थं गोरूपं धृत्वा विधिं वत्सं कृत्वाऽसुराणाममृतं पीतवानिति तत्सम्बन्धिनामद्वयं **गोरूपधारीति अमृतपेति** । अमृतं पीतवानिति । अत एव, **शिवकीर्तिविवर्धन** इति । शिवस्य त्रिपुरान्तक इत्येवमादिसंज्ञायां हेतुरित्यर्थः ॥ १०८ ॥

**धर्मात्मा सर्वकर्मात्मा विशेषात्माश्रमप्रभुः ।**
**संसारमग्नस्योद्धर्ता सन्मार्गाखिलतत्त्ववाक् ॥ १०९ ॥**

**धर्मात्मेति** । धर्मः साधारणस्तद्रूपः, तदुक्तं 'भगवन् श्रोतुमिच्छामी'त्यादौ । **सर्वकर्मात्मेति** । सर्वेषां वर्णानां यत्कर्म तत्तद्वर्णधर्मस्तद्रूप इत्यर्थः । **विशेषात्मेति** । आत्मविशेषो धर्मविशेषः वर्णाश्रमधर्मरूपो यथा 'पालाशो दण्डो ब्राह्मणस्ये'ति तद्रूप इत्यर्थः । **आश्रमप्रभुरिति** । आश्रमाणां ब्रह्मचर्यादीनां प्रभुः स्वामी, अत एव व्यासः 'आचारप्रभवो धर्मो धर्मस्य प्रभुरच्युत' इति । **संसारमग्नस्योद्धर्तेति** । संसारे ये मग्नाः विषयाकाङ्क्षिणः स्वे भक्तास्तानेतद्धर्मोपदेशेन उद्धर्ता उद्धरतीत्यर्थः । तदुक्तं 'गृहस्थ एतां पदवी'मित्यादौ । **सन्मार्गाखिलतत्त्ववागिति** । सतां मार्गो येषु शास्त्रेषु तानि सन्मार्गाणि तेषु या अखिलास्तत्त्वप्रतिपादिकाः अध्यात्मविद्यारूपा वाचस्तद्रूप इत्यर्थः । 'अध्यात्मविद्या विद्याना'मिति वाक्यात् ॥ १०९ ॥

**आचारात्मा सदाचारः,**

**आचारात्मेति** । आसमन्तात् चारो ज्ञानं स आत्मा यस्येति, पूर्वं प्रत्येकाचारा-

त्यत्युक्तमिदानीं सदुदिताचाररूपत्वात् । सदाचार इति । सतां भक्तानामाचारो भक्तिस्वरूप इति, सत्सु आचारो ज्ञानं धर्मेति वा ।

इति सप्तमस्कन्धनामानि ।

---

## ॥ अथाष्टमस्कन्धनामानि ॥

मन्वन्तरविभावनः ।
स्मृत्याशेषाशुभहरो गजेन्द्रस्मृतिकारणम् ॥ ११० ॥

मन्वन्तरविभावन इति । मन्वन्तरान् स्वायम्भुवादीन् षडतीतान् वैवस्वतादीनष्टानागतान् विशेषेण भावयति, वर्धयति रक्षतीति वा, तानुत्पादयतीति वा, तैर्मन्वन्तरैश्चिन्त्यत इति, मन्वन्तरैर्विभावयतीति वा, कालं मन्वन्तरं विना मन्वन्तरसम्बन्धिकालेन सर्वान् भावयतीति वा । तदुक्तं 'मनवोऽस्मिन् व्यतीताः षडि'त्यादिना । स्मृत्याशेषाशुभहर इति । स्मृत्या स्मरणमात्रेणैव ग्राहग्रस्तस्य गजेन्द्रस्याशुभं दुरितं हतवानित्यर्थः । स्मृत्याशेषेति पाठे व्यस्तमेवैकं नाम ज्ञेयम् । गजेन्द्रस्मृतिकारणमिति । कष्टं प्राप्तस्य गजेन्द्रस्य शरणगमनरूपोपायस्मृतौ भगवानेव हेतुरित्यर्थः । तदुक्तं 'यः कश्चनेशो बलिनोऽन्तकोरगा'दित्यादौ ॥ ११० ॥

जातिस्मरणहेत्वैकपूजाभक्तिस्वरूपदः ।
यज्ञो भयान्मनुत्राता विभुर्ब्रह्मव्रताश्रयः ॥ १११ ॥

जातिस्मरणहेत्वैकपूजाभक्तिस्वरूपद इति । पूर्वजन्मनि इन्द्रद्युम्ननामा क्षत्रियोऽहमासमित्येवंरूपा या स्मृतिः सा जातिस्मरणमुच्यते, तत्र हेतुभूता या एकस्य भगवतः पूजा सा जातिस्मरणहेत्वैव पूजा, तया या सञ्जाता भक्तिः, तयैव स्वरूपं दत्तवानित्यर्थः । तया भक्त्या स्वरूपं गजशरीरं ददातीति वा, 'प्राप्तो भगवतो रूप'मिति वचनात् । यज्ञ इति । इज्यत इति यज्ञो विष्णुः 'यज्ञो वै विष्णुरि'ति श्रुतेः । आद्यमन्वन्तरे यज्ञरूपो योऽवतीर्णः आकूत्यां रुचेः, तस्येदं नाम ज्ञेयम् । तदुक्तं 'आस्त्यास्ते भगवान् यज्ञो यच्चकार कुरूद्वहे'त्यादिना । भयान्मनुत्रातेति । जघुकामयातुधानकृतभयान्मनुं रक्षितवानित्यर्थः । तदुक्तं 'दृष्ट्वा सुरा यातुधाना' इत्यादौ, अत्र कतिपयनाम्नां विपर्यासो ज्ञेयः । द्वितीयमन्वन्तरीयनामनी आह विभुरिति । विभवतीति विभुरीश्वरः, व्यापको वा । तदुक्तं 'तस्यां जज्ञे तत'इत्यादिना । ब्रह्मव्रताश्रय इति । ब्रह्म वेदस्तदेव व्रतं येषां ते ब्रह्मव्रता ब्रह्मचारिणस्तैराश्रियते सेव्यत इति तथा । तदुक्तं 'अष्टाशीतिसहस्राणी'त्यादिना । तृतीयमन्वन्तरीयनामनी आह ॥ ११२ ॥

**सत्यसेनो दुष्टघाती हरिर्गजविमोचकः ।**
**वैकुण्ठो लोककर्ता च, अजितोऽमृतकारणम् ॥ ११२ ॥**

**सत्यसेन** इति । सत्या सत्यपरास्त एव सेना परिकरो यस्येति । **दुष्टघातीति** । दुष्टान् दुःशीलान् हन्तुं शीलमस्येति तथा । तदुक्तं 'धर्मस्य सूनृताया'मित्यादिना । चतुर्थमन्वन्तरीयनामनी आह **हरिरिति** । हरति सकलं दुःखं स्मृतिमात्रेणेति हरिः । तदुक्तं महाभारते 'हराम्यघं हि स्मर्तॄणां हविर्भागं क्रतुष्वहम् । वर्णश्च मे हरिः श्रेष्ठस्तस्माद्धरिरहं स्मृतः' इति । तदुक्तं 'तत्रापी'त्यादौ । **गजविमोचक** इति । ग्राहाद्गजस्य निर्मुक्तिदातेत्यर्थः । पञ्चममन्वन्तरीयनामनी आह । **वैकुण्ठ** इति । विकुण्ठाया अपत्यमिति । **लोककर्ता** चेति । लोकस्य वैकुण्ठाख्यस्य कर्ता नियामक इत्यर्थः । तदुक्तं 'पत्नी विकुण्ठा शुभ्रस्ये'त्यादौ । षष्ठस्य नामनी आह **अजित** इति । न केनापि कथमपि जित इति तथा । **अमृतकारणमिति** । अमृतस्य प्राप्तिं प्रति हेतुरित्यर्थः, अब्धिमथनोपायकरणादिति । तदुक्तं 'तत्रापि देवः सम्भूत्या'मित्यादिना ॥ ११२ ॥ सप्तमस्य नामनी आह—

**उरुक्रमो भूमिहर्ता सार्वभौमो बलिप्रियः ।**
**विभुः सर्वहितैकात्मा विष्वक्सेनः शिवप्रियः ॥ ११३ ॥**

**उरुक्रम** इति । उरुर्विस्तीर्णश्चरणविक्षेपो यस्येति । 'शं नो विष्णुरुरुक्रम' इति वचनात् । **भूमिहर्तेति** । बलेः सकाशादिन्द्रार्थं भूमिं हृतवानित्यर्थः । अष्टमस्याह **सार्वभौम** इति । सर्वभूमेरीश्वरः सार्वभौमः । **बलिप्रिय** इति । बलेः प्रियः, स प्रियो यस्येति वा । यद्वा, **सार्वभौमबलिप्रिय** इत्येकं नाम ज्ञेयम् । तदुक्तं 'देवगुह्यात् सरस्वत्या'मित्यादौ । नवमस्याह **विभुरिति** । विशेषेण भवति ऐश्वर्ययुक्तो भवतीति विभुः । तदुक्तं 'आयुष्मतोऽम्बुधाराया'मित्यादिना । दशमस्याह **सर्वहितैकात्मेति** । सर्वेषां हितरूपे एवैकस्मिन्नर्थे आत्मा चित्तं यस्येति । **विष्वक्सेन** इति । विष्वगञ्चन्ति पलायन्ते दैत्यसेना यस्मादिति तथा, विष्वक् सर्वव्यापिनी सेना यस्येति तथा । **शिवप्रिय** इति । शिवस्य प्रियः, सख्यकरणात् ॥ ११३ ॥ एकादशस्याह—

**धर्मसेतुर्लोकधृतिः सुधामान्तरपालकः ।**
**उपहर्ता योगपतिर्बृहद्भानुः क्रियापतिः ॥ ११४ ॥**

**धर्मसेतुरिति** । धर्मस्य सेतुर्मर्यादास्थापक इत्यर्थः । **लोकधृतिरिति** । लोकानां त्रयाणां धृतिर्धारणं यस्मिन्निति तथा । तदुक्तं 'आर्यकस्य सुत'इत्यादिना । द्वादशस्याह **सुधामान्तरपालक** इति । अन्तरस्य मन्वन्तरस्य पालकः, सुधामा चासावन्तरपालकश्चेति । मन्वन्तरस्य पालकः सुधामाख्यः, तस्य विशेषं नामेदं ज्ञेयम् । त्रयोदशस्याह **उपहर्तायोगपतिरिति** । उपहरति ददाति सुखं मर्त्येभ्य इत्युपहर्तेति, स चासौ योगपतिश्चेति । स

विशेषणं समस्तमेवैकं नाम, यथा शान्तिपर्वणि 'सङ्कर्षणोऽच्युत'इत्येकं नाम । चतुर्दशस्याह **बृंहद्भानुरिति** । बृहन्तो भानवः किरणा यस्येति, 'अहमग्निरहं हुत'मित्यादिवाक्यात् । **क्रियापतिरिति** । यज्ञक्रियायाः पतिः रक्षकः, प्रवर्तकत्वात्, तदुक्तं 'सत्रायणस्य तनय' इत्यादिना ॥ ११४ ॥

**चतुर्दशप्रमाणात्मा धर्मो मन्वादिबोधकः ।**
**लक्ष्मीभोगैकनिलयो देवमन्त्रप्रदायकः ॥ ११५ ॥**

**चतुर्दशप्रमाणात्मेति** । चतुर्दशमनवः प्रमाणप्रवर्तकाः आत्मनः अवतारा यस्येति, अत्र प्रमाणं स्मृतिरेव । **धर्म** इति । तत्तन्मनुप्रणीतधर्मरूप इत्यर्थः । **मन्वादिबोधक** इति । मन्वादीन् स्वमाहात्म्यं बोधयतीति तेषां माहात्म्यबोधक इति वा । तदुक्तं 'चतुर्दश-मनूना'मित्यादौ । **लक्ष्मीभोगैकनिलय** इति । लक्ष्म्याः स्वर्गसम्बन्धिन्या योगोऽनुभव-स्तस्यैकनिलयः स्थानभूत इत्यर्थः । **देवमन्त्रप्रदायक** इति । देवेभ्यो मन्त्रस्यामृतोत्पादन-यत्नरूपस्य प्रकर्षेण दायकः । तदुक्तं 'हन्त मन्त्र'मित्यादौ ॥ ११५ ॥

**दैत्यव्यामोहकः साक्षाद्गरुडस्कन्धसंश्रयः ।**
**लीलामन्दरधारी च दैत्यवासुकिपूजितः ॥ ११६ ॥**

**दैत्यव्यामोहक** इति । दैत्यानां देवैः सह सन्धिकरणद्वारा विशेषतः समन्तान्मोहकः वैचित्यकर्तेत्यर्थः । **साक्षाद्गरुडस्कन्धसंश्रय** इति । साक्षादव्यवहितो यो गरुडः, 'वैन-तेयश्च पक्षिणा'मिति वाक्यात्, स्वरूपभूतस्य तस्य स्कन्धे संश्रयः स्थितिर्यस्येति, गरुद्भिः पक्षैरुत्पतत इति । तदुक्तं 'गिरिं चारोप्य गरुडे'त्यादिना । **लीलामन्दरधारी चेति** । लीलयाऽनायासेनैव मन्दरपर्वतं धर्तुं शीलमस्येति तथा । **दैत्यवासुकिपूजित** इति । दैत्यार्थं दैत्यसामर्थ्यहननार्थं विषफूत्कारेण वासुकिः फलदानेन पूजितः सत्कृतो येनेति; तदुक्तं 'ते नागराजमामन्त्र्ये'त्यादिना ॥ ११६ ॥

**समुद्रोन्मथनायत्तोऽविघ्नकर्ता स्ववाक्यकृत् ।**
**आदिकूर्मः पवित्रात्मा मन्दराघर्षणोत्सुकः ॥ ११७ ॥**

**समुद्रोन्मथनायत्त** इति । समुद्रस्योन्मथनाय आयत्तः उद्यतः । **अविघ्नकर्तेति** । अविघ्नस्य विघ्नाभावस्य कर्तेति । तदुक्तं 'विलोक्य विघ्नेशे'त्यादौ । **स्ववाक्य-कृदिति** । विघ्नाभावसम्पादनेन स्ववाक्यं यथार्थं कृतवानित्यर्थः । **आदिकूर्म** इति । आदित्वं देशापेक्षया ज्ञेयम् । कूर्मस्य सर्वाधारत्वादत्रादित्वं, आदिश्चासौ कूर्मश्चेति, कुं पृथ्वीं रमयतीति कूर्मः, पृषोदरादित्वात् साधुः । **पवित्रात्मेति** । पवित्रो मेध्यो आत्मा देहो यस्येति, 'मेध्यो वा एष पशूनां यत्कूर्म' इति श्रुतेः । **मन्दराघर्षणोत्सुक** इति । मन्दरकृतं यत् आ ईषत् घर्षणं समन्ताद्वा कण्डूयनं 'भेनेङ्गकण्डूयन'मिति वाक्यात्, तत्रोत्सुकः सोत्साहः ॥ ११७ ॥

**श्वासैजदब्धिवार्वीचिः कल्पान्तावधिकार्यकृत् ।**
**चतुर्दशमहारत्नो लक्ष्मीसौभाग्यवर्धनः ॥ ११८ ॥**

श्वासैजदब्धिवार्वीचिरिति । श्वासेनैजदब्धिवार्षु कम्पमानसमुद्रजलेषु वीचयस्तरङ्गा यस्मादिति । कल्पान्तावधिकार्यकृदिति । कल्पस्यान्तः अवधिः समाप्तिर्यथास्यात्तथा कार्यं मन्दरधारणरूपं करोतीति तथा । चतुर्दशमहारत्नमिति । चतुर्दश संख्याकानि महान्ति रत्नानि जातानि यस्मादिति, यस्य वा, तानि विद्यन्ते यस्येति वा । चतुर्दशस्वपि लक्ष्म्यादीनि महारत्नानि यस्येति वा । सर्वं मूले स्पष्टम् । लक्ष्मीसौभाग्यवर्धन इति । लक्ष्म्याः सौभाग्यं सौन्दर्यादीनि वर्धयतीति तथा, लक्ष्म्यां वा, तदर्थं स्वस्मिन् वर्धयतीति वा । तदुक्तं 'ततश्चाविरभू'दित्यादिना ॥ ११८ ॥

**धन्वन्तरिः सुधाहस्तो यज्ञभोक्तार्तिनाशनः ।**
**आयुर्वेदप्रणेता च देवदैत्याखिलार्चितः ॥ ११९ ॥**

धन्वन्तरिरिति । धन्वनि मरुस्थानीये रोगे तरिर्नौकेत्यर्थः । सुधाहस्त इति । सुधा अमृतं हस्ते यस्येति, अमृतपूर्णकलशहस्तत्वात् । यज्ञभोक्तेति । यज्ञस्य भोक्ता, यज्ञे स्वीयभागस्य भोक्ता वा, यज्ञे भागस्वीकारात् । आर्तिनाशन इति । आर्तेः रोगजनितचिन्तायाः पीडाया वा नाशनः, तन्नाशोपायकरणात् । तदेवाह आयुर्वेदप्रणेता चेति । आयुर्वृद्धिकारकस्य वेदस्य ऋग्वेदोपवेदकस्य प्रवर्तक इत्यर्थः । देवदैत्याखिलार्चित इति । देवाश्च दैत्याश्च ते अखिलाश्च तैरमृतार्थमारोग्यार्थं वा पूजितः सत्कृतः ॥ ११९ ॥

**बुद्धिव्यामोहको देवकार्यसाधनतत्परः ।**
**स्त्रीरूपो मायया वक्ता दैत्यान्तःकरणप्रियः ॥ १२० ॥**

बुद्धिव्यामोहक इति । दैत्यानामिति शेषः । देवकार्यसाधनतत्पर इति । देवकार्यस्यामृतपानरूपस्य साधने सम्पादने तत्परः सावधान इत्यर्थः । तदेवाग्रिमनामभिः प्रपञ्च्यते । स्त्रीरूप इति । दैत्यव्यामोहनार्थं स्त्रीरूप इत्यर्थः । मायया वक्तेति । मायारूपेण स्त्रीरूपेण दैत्यान् प्रति वक्तीति तथा, माययैवान्यथा वदति, न तु स्वयम् । दैत्यान्तःकरणप्रिय इति । यतो मायारूपेणोक्तत्वात्, अत एव दैत्यानां मनसि प्रियत्वेन भातः, अन्तर्दैत्यानां भगवान् प्रियो न भवत्येव स्वभावतः ॥ १२० ॥

**पायितामृतदेवांशो युद्धहेतुस्मृतिप्रदः ।**
**सुमालिमालिवधकृन्माल्यवत्प्राणहारकः ॥ १२१ ॥**

पायितामृतदेवांश इति । देवेभ्यः पायितः अमृतरूपदेवांशो येनेति । युद्धहेतुस्मृतिप्रद इति । युद्धं प्रति हेतुभूता या स्मृतिः पूर्वं स्त्रीरूपेण वञ्चिता मोहिता जाताः, पश्चात्तदपगमे सति वयं वञ्चिता इति तेषां स्मृतिर्जाता सैव युद्धहेतुस्तां प्रकर्षेण ददा-

तीति तथा । **सुमालिमालिवधकृदिति** । सुमालिमालिनोर्वधं करोतीति तथा । **माल्यवत्प्राणहारक** इति । तद्भ्रातुर्माल्यवतः प्राणान् हरतीति तथा ॥ १२१ ॥

**कालनेमिशिरश्छेदी दैत्ययज्ञविनाशकः ।**
**इन्द्रसामर्थ्यदाता च दैत्यशेषस्थितिप्रियः ॥ १२२ ॥**

**कालनेमिशिरश्छेदीति** । कालनेमेः शिरः छेत्तुं शीलमस्येति तथा । अग्रे कंसदशायां तथा करिष्यमाणत्वाच्छीलत्वम् । **दैत्ययज्ञविनाशक** इति । वामनगमनात् पूर्वं केवलं दैत्ययज्ञ एवासीत्, पश्चात् साक्षाद्भगवत्प्रवेशात् यज्ञस्य सात्त्विकत्वं दैवत्वं जातं, अतो दैत्यसम्बन्धियज्ञस्य विशेषतो नाशकः । अत एवाचार्येण निषिद्धोपि बलिर्नान्यथाऽकरोदिति । **इन्द्रसामर्थ्यदाता** चेति । इन्द्राय दैत्यजये सामर्थ्यं दत्तवानित्यर्थः । **दैत्यशेषस्थितिप्रिय** इति । दैत्यानां शेषाः वधादुर्वरितास्तेषां स्थितिः प्रिया यस्येति । तदुक्तं 'ब्रह्मणा प्रेषितो देवा'नित्यादिना ॥ १२२ ॥

**शिवव्यामोहको मायी भृगुमन्त्रस्वशक्तिदः ।**
**बलिजीवनकर्ता च स्वर्गहेतुर्व्रतार्चितः ॥ १२३ ॥**

**शिवव्यामोहक** इति । स्त्रीरूपेण शिवस्य व्यामोहकः विशेषेण समन्तान्मोहकर्तेत्यर्थः । **मायीति** । मायारूपा दासी विधते यस्येति । व्रीह्यादित्वादिनिः । **भृगुमन्त्रस्वशक्तिद** इति । भृगूणां भृगुवंशोत्पन्नानां मन्त्रेषु जीवितकारकेषु स्वशक्तिं वैष्णवीं स्थापितवानित्यर्थः । अत एवैतज्जन्मना वैष्णव एव जात इति । शक्तिमेवाह **बलिजीवनकर्ता** च । बलेर्जीवनस्य कर्ता, तदुक्तं 'पराजिता श्री'रित्यादौ । **स्वर्गहेतुरिति** । इन्द्रस्य स्वर्गप्राप्तौ कारणमित्यर्थः । **व्रतार्चित** इति । अदित्या कश्यपोक्तपयोव्रतेनार्चित आराधितः । तदुक्तं 'फाल्गुनस्यामल' इत्यादौ ॥ १२३ ॥

**अदित्यानन्दकर्ता च कश्यपादितिसम्भवः ।**
**उपेन्द्र इन्द्रावरजो वामनब्रह्मरूपधृक् ॥ १२४ ॥**

**अदित्यानन्दकर्ता** चेति । स्वयं पुत्रो भूत्वा अदितेः कश्यपपत्न्याः आनन्दस्य कर्तेति । **कश्यपादितिसम्भव** इति । कश्यपश्चादितिश्च ताभ्यां निमित्तभूताभ्यां सम्भवः प्राकट्यं यस्येति । **उपेन्द्र** इति । इन्द्रमुपगतोऽनुजत्वादुपेन्द्रः । यद्वा । उपरि इन्द्रः उपेन्द्रः, तदुक्तं हरिवंशे 'ममोपरि यथेन्द्रस्त्वं स्थापितो गोभिरीश्वरः । उपेन्द्र इति कृष्ण त्वां गास्यन्ति भुवि देवता' इति । उपसमीपेऽनुचरत्वेनेन्द्रो यस्येति वा । **इन्द्रावरज** इति । इन्द्रस्यावरे जातः इन्द्रावरजः । **वामनब्रह्मरूपधृगिति** । वामनरूपमेव यत् ब्रह्म तद्रूपं धारयतीति तथा, न तु प्राकृतत्वं तदुक्तं 'यत्तद्वपु'रित्यादौ ॥ १२४ ॥

**ब्रह्मादिसेवितपदो यज्ञपावनतत्परः ।**
**धामोपदेशकर्ता च ज्ञापिताशेषसंस्थितिः ॥ १२५ ॥**

**ब्रह्मादिसेवितवपुरिति** । ब्रह्मादिभिः सेवितमाश्रितं वपुर्यस्येति, इदं सर्वमन्यच्च वामनपुराणे स्पष्टम् । **यज्ञपावनतत्पर** इति । बलियज्ञस्य पावनाय पवित्रीकरणाय तत्पर उद्युक्तः । यद्वा । यज्ञे यो बलिस्तस्यावने रक्षणे तत्पर इति । यद्वा, यज्ञपावनाद्धेतोस्तं बलिमनुग्रहेण प्रियार्थं पूरयतीति । **याञ्चोपदेशकर्ता** चेति । याञ्चया याचनरूपेण स्वर्गस्यार्पणरूपोपदेशस्य कर्ता कारक इत्यर्थः । प्रह्लादः पूर्वं निवेदितवान्, अतः सत्याद्बलिसम्बन्ध्यपि सर्वं स्वीकृतवानिति भावः । **ज्ञापिताशेषसंस्थितिरिति** । स्वप्राकट्येन ज्ञापिता अशेषाणां कर्मणां संस्थितिः समाप्तिर्येनेति, न हि फलप्राप्त्यनन्तरं कश्चन साधने प्रवर्तत इति ॥१२५॥

**सत्यार्थप्रेरकः सर्वहर्ता गर्वविनाशकः ।**
**त्रिविक्रमस्त्रिलोकात्मा विश्वमूर्तिः पृथुश्रवाः ॥ १२६ ॥**

**सत्यार्थप्रेरक** इति । सत्यस्यावितथस्यार्थस्य सङ्कल्परूपस्य प्रेरणकर्तेत्यर्थः । यतो निवारितोपि पुनः सङ्कल्पितवानेव । **सर्वहर्तेति** । पदत्रयव्याजेन सर्वत्रैलोक्यमपि हृतवानित्यर्थः । **गर्वविनाशक** इति । सर्वेश्वरोऽपि मां भुवं भिक्ष्यत इत्येवंरूपस्य गर्वस्य विनाशक इत्यर्थः । **त्रिविक्रम** इति । त्रयो विक्रमाः पादविक्षेपाः यस्येति । 'इदं विष्णुर्विचक्रमे त्रेधा निदधे पद'मित्यादिमन्त्रवर्णात् । **त्रिलोकात्मेति** । त्रीन् लोकानतति व्याप्नोतीत्युरुणेति त्रिलोकात्मा, 'यस्योरुषु त्रिषु विक्रमणेष्वधिक्षियन्ति भुवनानि विश्वे'ति श्रुतेः । अन्तर्यामित्वेन वा । **विश्वमूर्तिरिति** । विश्वं मूर्तिर्यस्य, विश्वस्मिन्निति वा । 'पुरुष एवेदꣳसर्व'मिति श्रुतेः । **पृथुश्रवा** इति । पृथु विस्तीर्णं श्रवः कीर्तिर्यस्येति, 'उरुगायस्य विष्णो'रिति श्रुतेः ॥ १२६ ॥

**पाशबद्धबलिः सर्वदैत्यपक्षोपमर्दकः ।**
**सुतलस्थापितबलिः स्वर्गाधिकसुखप्रदः ॥ १२७ ॥**

**पाशबद्धबलिरिति** । पाशैर्वारुणैर्बद्धो बलिर्येनेति । **सर्वदैत्यपक्षोपमर्दक** इति । सर्वेषां दैत्यपक्षाणां तत्पक्षीयाणामुपमर्दको नाशक इत्यर्थः । तदुक्तं 'इत्यायुधानि जगृहु'रित्यादिना । **सुतलस्थापितबलिरिति** । सुतलाख्ये तृतीयविवरे स्थापितो बलिर्येन, तदुक्तं 'तावत्सुतलमध्यास्ता'मित्यादिना **स्वर्गाधिकसुखप्रद** इति । तत्रैव स्वर्गादप्यधिकं सुखं प्रकर्षेण दत्तवानित्यर्थः । तदुक्तं 'सुतलं स्वर्गिभिः प्रार्थ्य'मित्यादिना ॥ १२७ ॥

**कर्मसम्पूर्तिकर्ता च स्वर्गसंस्थापितामरः ।**
**ज्ञातत्रिविधधर्मात्मा महामीनोऽङ्घिसंश्रयः ॥ १२८ ॥**

**कर्मसम्पूर्तिकर्ता** चेति । पूर्वमुपक्रान्तस्य कर्मणः सम्यक् पूर्तिं करोति, स्वसान्निध्येन यथोक्तादप्यधिकं फलं करोतीत्यर्थः । तदुक्तं 'कुतस्तत्कर्मवैषम्य'मित्यादिना । **स्वर्गसंस्थापितामर** इति । स्वर्गेषु तत्तदधिष्ठितेषु पुनः संस्थापिता अमरा देवा येन ।

**ज्ञातत्रिविधधर्मात्मेति** । उपासत्वेन ज्ञातः सात्विकादिभिस्त्रिविधैर्धर्मैरात्मा यस्येति । 'येप्यन्यदेवताभक्ता' इति वाक्यात् । **महामीन** इति । महांश्चासौ मीनश्चेति, महत्त्वमलौकिकत्वेन, मीयते हिंस्यते सर्वैरिति मीनः 'तमशयद्धियावध्यासु'रिति श्रुतेः । **अब्धिसंश्रय** इति । आपो धीयन्तेऽस्मिन्निति अब्धिः समुद्रः प्रलयकालीनः स संश्रयः संस्थानं यस्येति, तदुक्तं 'आसीदतीतकल्पान्त' इत्यादिना ॥ १२८ ॥

**सत्यव्रतप्रियो गोप्ता मत्स्यमूर्तिधृतश्रुतिः ।**
**शृङ्गबद्धधृतक्षोणिः सर्वार्थज्ञापको गुरुः ॥ १२९ ॥**

**सत्यव्रतप्रिय** इति । सत्यं व्रतं यस्येति तथा, सत्यव्रतरूपिस्तस्य प्रियः, तदर्थं प्रकटितत्वात्, स प्रियो यस्येति वा । **गोप्तेति** । जलेनाप्लूयमानं सत्यव्रतं सप्तऋषिसहितं रक्षितवानित्यर्थः । 'अहं त्वामृषिभिः सार्ध'मित्यादिना । **मत्स्यमूर्तिधृतश्रुतिरिति** । मत्स्यमूर्त्या मत्स्यरूपेण धृताः हयग्रीवासुरवधपूर्वकमानीय स्ववशे स्थापिताः श्रुतयो येन, **'मत्स्यमूर्त्युद्धृतश्रुति'**रित्यपि पाठान्तरं ज्ञेयम् । अर्थः स्पष्ट एव । **शृङ्गबद्धधृतक्षोणिरिति** । शृङ्गबद्धया नावा धृता मज्जनादुद्धृता स्तम्भिता वा क्षोणी पृथ्वी येन, तदुक्तं 'दोधूयमाना'मित्यादिना । **सर्वार्थज्ञापक** इति । सर्वानर्थान् धर्मादिपुमर्थान् मत्स्यपुराणकथनेन सत्यव्रताय ज्ञापयतीति तथा । तदुक्तं 'पुराणसंहिता'मित्यादौ । अत एव, **गुरुरिति** । गृह्णाति उपदिशति तत्त्वमिति गुरुः ॥ १२९ ॥

॥ इत्यष्टमस्कन्धनामानि ॥

---

## ॥ अथ नवमस्कन्धनामानि ॥

**ईशसेवकलीलात्मा सूर्यवंशप्रवर्तकः ।**
**सोमवंशोद्भवकरो मनुपुत्रगतिप्रदः ॥ १३० ॥**

**ईशसेवकलीलात्मेति** । ईशः प्रभुः, सेवको भक्तः, उभयसम्बन्धिनी या लीला सेव्यसेवकलक्षणसम्बन्धरूपा तद्रूप इत्यर्थः । तत्र आत्मा चित्तं यस्येति वा । **सूर्यवंशप्रवर्तक** इति । सूर्यसम्बन्धिवंशस्यापत्यपरम्परायाः प्रवर्तकः प्रवृत्तिकर्तेत्यर्थः । प्रकर्षेण वर्तकः निर्वाहक उत्पादकः स्थापको वा । तदुक्तं 'परावरेषां भूताना'मित्यादौ । **सोमवंशोद्भवकर** इति । सोमाद्यो वंशः पुरूरवसमारभ्य तस्योद्भवमुत्पत्तिस्थानं इलां कृतवानित्यर्थः । सोमवंशार्थमेव होतारं हरिः प्रेरितवानिति भावः । **मनुपुत्रगतिप्रद** इति । पृषध्राख्याय मनुपुत्राय गतिं सद्गतिं प्रकर्षेण दत्तवानित्यर्थः ॥ १३० ॥

**अम्बरीषप्रियः साधुर्दुर्वासोगर्वनाशकः ।**
**ब्रह्मशापोपसंहर्ता भक्तकीर्तिविवर्धनः ॥ १३१ ॥**

**अम्बरीषप्रिय** इति । अम्बरीषः प्रियो यस्य, तस्य प्रियो वा । **साधुरिति** । साधयति भक्तकार्यं सर्वप्रकारेणेति साधुः, तदुक्तं 'तस्मा अदाद्धरिश्चक्र'मित्यादिना । **दुर्वासागर्वनाशक** इति । तपोगर्वेण नियमभङ्गार्थं प्रवृत्तस्य दुर्वाससो गर्वस्य नाशकः नाशकर्तेत्यर्थः, तत्सर्वं मूले स्पष्टम् । **ब्रह्मशापोपसंहर्तेति** । ब्रह्मणो दुर्वाससः शापस्य अम्बरीषं प्रति अत्याक्रोशस्य उप समीपे तत्कालमेव चक्रेण संहारक इत्यर्थः । **भक्तकीर्तिविवर्धन** इति । भक्तस्य राज्ञः कीर्तिः भागवतेष्वेतत्सदृशः कोऽपि नास्तीत्येवंरूपाया विशेषेण वर्धनः ॥ १३१ ॥

**इक्ष्वाकुवंशजनकः सगराद्यखिलार्थदः ।**
**भगीरथमहायत्नो गङ्गाधौताङ्घ्रिपङ्कजः ॥ १३२ ॥**

**इक्ष्वाकुवंशजनकेति** । मनोर्ज्येष्ठपुत्रस्येक्ष्वाकोर्वंशस्य स्वप्राकट्यार्थं जनक उत्पादकः इक्ष्वाकुवंशस्य जनकः, अस्य रघुवंशस्य स्वीयत्वादिति भावः **सगराद्यखिलार्थद** इति । सगरादिभ्योऽखिलार्थान् और्वोपदेशद्वारा दत्तवानित्यर्थः, तदुक्तं 'राज्यमंशुमति न्यस्ये'त्यादिना । **भगीरथमहायत्न** इति । भगीरथस्य गङ्गानयनार्थं यो महान् यत्नस्तद्रूप इत्यर्थः, यस्मादिति वा, अत एवास्य प्रयत्नः सफलः पितृपितामहयोरफलः । **गङ्गाधौताङ्घ्रिपङ्कज** इति । गङ्गया धौते क्षालिते चरणकमले यस्येति, गङ्गा धौताङ्घ्रिपङ्कजाद्यस्येति वा ॥ १३२ ॥

**ब्रह्मस्वामी शिवस्वामी सगरात्मजमुक्तिदः ।**
**खट्वाङ्गमोक्षहेतुश्च रघुवंशविवर्धनः ॥ १३३ ॥**

**ब्रह्मस्वामीति** । ब्रह्मणो ब्रह्मर्षीणां वा स्वामी प्रभुः । **शिवस्वामीति** । शिवस्य निर्मलस्य स्वामी उपास्यः, अत एव चरणकमलजलं मस्तके धृतवानिति । **सगरात्मजमुक्तिद** इति । षष्टिसहस्रेभ्यः सगरपुत्रेभ्यो गङ्गारूपेण मुक्तिं दत्तवानित्यर्थः । 'स्रोतसामस्मि जाह्नवी'ति वाक्यात् । **खट्वाङ्गमोक्षहेतुश्चेति** । खट्वाङ्गस्य राज्ञो मोक्षं प्रति हेतुः, यतः, देवैर्वरार्थं प्रलोभितोऽपि न वृतवानिति भावः, तदुक्तं 'यो देवैरर्थित' इत्यादिना । **रघुवंशविवर्धन** इति । रघोर्वंशस्य शौर्यैश्वर्यधर्मादिभिरन्यापेक्षया विशेषेण वृद्धिकर्तेत्यर्थः, अत एव सर्वोत्तमत्वात् स्वयं तत्र पुरुषोत्तम एव प्रकटितो नत्वेकदेशेनेति, 'तस्यापि भगवानेष साक्षात् ब्रह्ममयो हरि'रित्यादिना । अत्र कतिपयनाम्नां पुराणान्तरीयत्वं ज्ञेयम् ॥ १३३ ॥

**रघुनाथो रामचन्द्रो रामभद्रो रघुप्रियः ।**
**अनन्तकीर्तिः पुण्यात्मा पुण्यश्लोकैकभास्करः ॥ १३४ ॥**

**रघुनाथ** इति । रघूणां नाथः ईश्वरो रघुनाथः । नाथृ नाधृ याच्ञोपतापैश्वर्याशीःष्विति धातुपाठात्, रघवो नाथाः आशीश्वर्या यस्मादिति वा । **रामचन्द्र** इति । रमन्ते स्वरूपानन्देन क्रीडन्त्यस्मिन्निति रामः परं ब्रह्म, तदुक्तं रामोपनिषदि 'रमन्ते योगिनोऽनन्ते सदानन्दे

चिदात्मनि' इति । रामपदेनासौ परब्रह्माभिधीयत इति । स एव सर्वाह्लादकत्वात् चन्द्र इत्युच्यते । रामश्चासौ चन्द्रश्चेति, यद्वा, अयं तु नक्षत्रेशः सकलङ्कः चन्द्रस्तथा न आनन्दकरः, भगवांस्तु रामपदार्थयोगान्निष्कलङ्क इति भावः । परमाह्लादकत्वादेव श्रीमहादेवेनोक्तं 'रकारादीनि नामानि शृण्वतो मम पार्वति । मनः प्रसन्नतामेति रामनामाभिशङ्कये'ति । **रामभद्र** इति । राम एव भद्रः मङ्गलरूपः, अत एव तदभिज्ञा आहुः 'कल्याणानां निधान'मिति । भद्रमस्मिन्निति व्युत्पत्त्या अच्प्रत्ययान्तत्वात् पुंलिङ्गत्वम् । **रघुप्रिय** इति । रघूणां प्रियः, ते प्रिया यस्येति वा । **अनन्तकीर्त्तिरिति** । नास्त्यन्तो देशतः कालतश्च यस्यास्तादृशी कीर्तिर्यस्येति, कीर्तिप्रतापस्वरूपं यादृशं तादृशं हनुमद्वाल्मीकिप्रभृतिभिर्बहुधोक्तम् । **पुण्यात्मेति** । पुण्याः कृतपुण्यपुञ्जास्तेषु आत्मा ध्येयस्वरूपं यस्येति, अत एवोक्तं पुराणान्तरे ' रामं दूर्वादलश्यामं पद्माक्षं पीतवाससं । ये स्मरन्ति नरा नित्यं न ते संसारिणो भुवि' । अन्यदप्युक्तं 'ध्यायेदाजानुबाहुं धृतशरधनुषं बद्धपद्मासनस्थं । पीतं वासो वसानं नवकमलदलस्पर्धिनेत्रं प्रसन्नम् । वामाङ्कारूढसीतामुखकमलमिलल्लोचनं नीरदाभम् । नानालङ्कारदीप्तं दधत पुरुजटामण्डलं रामभद्रम् । वामे कोदण्डदण्डं निजकरकमले दक्षिणे बाणमेकं । पश्चाद्भागे च नित्यं दधतमभिमतं सासितूणीरभारम् । वामेवामे वसद्भ्यां सहमिलिततनुं जानकीलक्ष्मणाभ्यां । श्यामं रामं भजेहं प्रणतजनमनःखेदविच्छेददक्षम्' । **पुण्यश्लोकैकभास्कर** इति । पुण्यश्चासौ श्लोकश्चेति, श्लोकः कीर्तिः स चासावेकश्च पुण्यश्लोकैकः, तेनैव सर्वत्र भास्करः प्रकाशक इत्यर्थः । स्वरूपस्यायोध्यास्थलेऽपि कीर्तेरतिशुभ्रत्वात् तयैव प्रकाशितस्वरूप इत्यर्थः । यद्वा । पुण्यश्लोकाः सन्तः तेष्वेकमाः अद्वैतप्रकाशस्तत्कर इत्यर्थः । अत एवागस्त्यसंहितायाम् 'रामादन्यन्न विद्यत'इति ॥ १३४ ॥

**कोशलेन्द्रः प्रमाणात्मा सेव्यो दशरथात्मजः ।**
**लक्ष्मणो भरतश्चैव शत्रुघ्नो व्यूहविग्रहः ॥ १३५ ॥**

**कोशलेन्द्र** इति । कोशलनामुत्तरकोशलानामिन्द्रः ईश्वरः, सर्वेश्वरत्वेपि तेषां मातृपक्षत्वाद्विशेषोक्तिः । **प्रमाणात्मेति** । प्रमाणं वेदस्तत्र आत्मा चित्तं यस्येति, वेदमार्गाविरोधेन कार्यकरणात् क्वचिदन्यथापि ऐश्वर्यवशात् । यद्वा । प्रमाणानां श्रुत्यादीनामात्मा तत्प्रतिपाद्यसारभूत इत्यर्थः । प्रमारूप इति वा । **सेव्य** इति । सेवितुं योग्यः सेव्यः, सेवा भक्तिमार्गीयं भजनमेव । अत एव, यदि प्रमाणानुसारित्वमेव स्यात् तदा सेव्य इति न ब्रूयुराचार्याः, किन्तु पूज्य आराध्य इत्यादि । न हि प्रमाणानुसारिण्यविच्छिन्नसेवा सम्भवति अतः प्रमेयरूपमेवेति पदार्थः । अत एव, स्वनीतगर्दभश्चादिरिति नाम सिद्धम्, न हीदृशं सामर्थ्यं प्रमाणानुसारी भवति । **दशरथात्मज** इति । दशरथस्यात्मजः । न हि प्रमाणबलेनैव ईश्वरः कस्याप्यात्मजो भवितुमर्हति, प्रमाणोच्छेदापत्तेः । अतः प्रमेयबलादेवेति इति ज्ञेयम् । **लक्ष्मण** इति । लक्ष्म पापं नयत्यपनयतीति लक्ष्मणः सङ्कर्षणस्तद्रूप इत्यर्थः । **भरत** इति । भरणं

मर पोषण तेन त्रायते रक्षति प्रजामिति भरत , पृषोदरादि । भर युद्ध तनोतीति वा । शत्रुघ्न इति । शत्रु हन्तीति तच्छील शत्रुघ्न । व्यूहविग्रह इति । व्यूहा वासुदेवादय श्वत्वारो विग्रहास्तत्कार्यार्थं देहा यस्येति । तदाहुर्व्यासा 'व्यूह्यात्मान चतुर्धा वै वासुदेवादिमूर्तिभि । सृष्ट्यादीन् प्रकरोत्येष विश्रुतात्मा जनार्दन'इति । मूलेपि 'रामलक्ष्मणशत्रुघ्नभरता इति सञ्ज्ञये'त्यादिना ॥ १३५ ॥

**विश्वामित्रप्रियो दान्तस्ताडकावधमोक्षदः ।**
**वायव्यास्त्राब्धिनिक्षिप्तमारीचश्च सुबाहुहा ॥ १३६ ॥**

**विश्वामित्रप्रिय** इति । विश्वामित्रस्यापि प्रियो यस्य, तस्य वा प्रिय , तस्य प्रिय यज्ञे रक्षोवधादिक यस्मादिति, विश्वामित्रान्निमित्तभूतात् प्रिय सीतास्वयवररूप यस्येति वा । **दान्त** इति । दमयति राक्षसानिति दान्त । **ताडकावधमोक्षद** इति । ताडकाख्यायै राक्षस्यै नि साधन वधेनैव मोक्ष दत्तवानित्यर्थ । **वायव्यास्त्राब्धिनिक्षिप्तमारीच** इति । वायुदैवत्येनास्त्रेणाब्धौ सागरे निक्षिप्तो मारीचो येनेति, तथा चेद चान्यदपि सर्वं रामायणे स्पष्टम् । **सुबाहुहे**ति । तत्प्रसङ्गेनेव सुबाहुनामानमपि राक्षस हतवानित्यर्थ ।

**वृषध्वजधनुर्भङ्गप्राप्तसीतामहोत्सवः ।**
**सीतापतिर्भृगुपतिगर्वपर्वतनाशकः ॥ १३७ ॥**

**वृषध्वजधनुर्भङ्गप्राप्तसीतामहोत्सव** इति । जनकगृहे पणीकृतरुद्रधनुर्भङ्गेन प्राप्तो लब्ध सीतासम्बन्धी महोत्सव आनन्दो येनेति, धनुर्भङ्गाद्यजात तदाहु **सीतापति**रिति । सीताया पति स्वामी । **भृगुपतिगर्वपर्वतनाशक** इति । भृगूणा पति भृगुपति परशुराम , तस्यैकविंशतिकृत्व क्षत्रक्षयकरणेन गर्वितस्य, सीतया सह गृह गच्छतो भगवतो मार्गमवरुध्यावद्य स्वबल नोदनाय सर्वदा गर्वपर्वतो गर्वराशिरासीत्, त धनुराकर्षणेन नाशक इत्यर्थ ॥ १३७ ॥

**अयोध्यास्थमहाभोगयुक्तलक्ष्मीविनोदवान् ।**
**कैकेयीवाक्यकर्ता च पितृवाक्यपरिपालक ॥ १३८ ॥**

**अयोध्यास्थमहाभोगयुक्तलक्ष्मीविनोदवानि**ति । अयोध्याराजधानी तस्यो यो भोग महाराजोपचारस्तत्सहभूतो यो लक्ष्म्या सीताया विनोद क्रीडा तद्वानित्यर्थ । तदेवाह **पितृवाक्यपरिपालक कैकेयीवाक्यकर्ता** चेति । ताभिर्यदुक्त तत्कर्तेत्यर्थ । इति । पितुर्दशरथस्य वनवासार्था या वाक् तस्या परित सर्वत पालक निर्वाहक इत्यर्थ । अत एव धर्मज्ञैर्निवारितोऽपि नान्यथाकरोत् ॥ १३८ ॥

**वैराग्यबोधकोनन्यसात्त्विकस्यानबोधकः ।**
**अहल्यादुःखहारी च गुरुस्वामी सलक्ष्मणः ॥ १३९ ॥**

**वैराग्यबोधक** इति । सर्वपरित्यागेन अन्येषु वैराग्यबुद्धिमुत्पादितवानित्यर्थ ।

**अनन्यसात्विकस्थानबोधक** इति । नास्त्यन्यो यस्मिन्नित्यनन्यं निर्जनं यत् सात्विकं सत्वप्रधानस्थानं अरण्यवासः, तस्य बोधको ज्ञापक इत्यर्थः । वैराग्ये जाते अरण्यस्थितिरुचितेति भावः । **अहल्यादुःखहारी** चेति । अहल्या गौतमभार्या तस्या भर्तृशापात् यद् दुःखं दृषद्रूपत्वं तद्धरणशील इत्यर्थः । **गुहस्वामीति** । गुहनाम्नो निषादाधिपतेः स्वामी प्रभुरित्यर्थः । **सलक्ष्मण** इति । लक्ष्मणेन सह वर्तत इति तथा, उक्तं च 'गुहेन सहितो रामो लक्ष्मणेन च सीतये'ति ॥ १३९ ॥

**चित्रकूटप्रियस्थानो दण्डकारण्यपावनः ।**
**शरभङ्गसुतीक्ष्णादिपूजितोऽगस्त्यभाग्यभूः ॥ १४० ॥**

**चित्रकूटप्रियस्थान** इति । चित्रकूटपर्वतः स एव प्रियमभिमतं स्थानं यस्येति । **दण्डकारण्यपावन** इति । दण्डकाख्यस्यारण्यस्य पावनः पवित्रकर्ता स्वचरणसञ्चरणेनेति । यद्वा । दण्डकारण्य यान्ति रक्षन्ति ये स्वस्वाश्रमसमीपमिति ते दण्डकारण्यपाः ऋषयः, तान् अवतीति तथा । **शरभङ्गसुतीक्ष्णादिपूजित** इति । शरभङ्गश्च सुतीक्ष्णश्च तदादिभिः पूजितः सत्कृतः आतिथ्यादिभिरित्यर्थः । **अगस्त्यभाग्यभूरि**ति । अगस्त्यस्य भाग्याद्भवति दर्शनदानाय तदाश्रम गच्छतीति तथा । यद्वा । अगस्त्यस्य भाग्यात् परमतपसः फलरूपेण आविर्भवतीति तद्भाग्यभूः स्थानं वा ॥ १४० ॥

**ऋषिसम्प्रार्थितकृतिर्विराधवधपण्डितः ।**
**छिन्नशूर्पणखानासः खरदूषणघातकः ॥ १४१ ॥**

**ऋषिसम्प्रार्थितकृतिरि**ति । ऋषिभिररण्यवासिभिः सम्यक् प्रार्थिता कृतिरसुररक्षोवधरूपा यस्मिन्निति । **विराधवधपण्डित** इति । विराधस्य राक्षसस्य वधे पण्डितः प्रवीण इत्यर्थः । **छिन्नशूर्पणखानासः** इति । छिन्ना द्विधाकृता शूर्पणखायाः नासा नासिका येनेति । **खरदूषणघातक** इति । खराख्यस्य दूषणाख्यस्य च राक्षसस्य घातकः हन्तेत्यर्थः ॥

**एकबाणहतानेकसहस्रबलराक्षसः ।**
**मारीचघाती नियतसीतासम्बन्धशोभितः ॥ १४२ ॥**

**एकबाणहतानेकसहस्रबलराक्षस** इति । सहस्रं सहस्रगुणितं बलं येषु, सहस्राणां वा, ते सहस्रबलाः, ते च ते राक्षसाश्च सहस्रबलराक्षसाः, अनेके च ते पूर्वोक्ताश्च एकश्चासौ बाणश्च एकबाणः, एकबाणेन हता अनेकसहस्रबलराक्षसा येनेति । **मारीचघातीति** । मारीचं राक्षस हन्ति तच्छीलः । **नियतसीतासम्बन्धशोभित** इति । मायिकसीताहरणेपि नियतो यः सीताया लक्ष्म्याः सम्बन्धस्तेनैव शोभते इति तथा ॥१४२॥

**सीतावियोगनाट्यश्च जटायुर्वधमोक्षदः ।**
**शबरीपूजितो भक्तहनुमत्प्रमुखावृतः ॥ १४३ ॥**

**सीतावियोगनाट्य** श्चेति । सीताया वियोगरूप नाट्य नटन नटनकृत्य यस्येति । **जटायुर्वधमोक्षद** इति । जटायुषो गृध्रस्य वधात् मृत्यो मोक्ष दत्तवानित्यर्थ , यथा पुनर्न म्रियेतेति भाव । क्वचित् 'जटायुवधमोक्षद' इत्यपि पाठ श्रूयते सोपि साधुरेव ज्ञेय , उकारान्तस्यापि सद्भावात् । **शबरीपूजित** इति । शबर्या स्त्रिया पूजित सत्कृत । भक्त- **हनुमत्प्रमुखावृत** इति । भक्ताश्च ते हनुमत्प्रमुखाश्च तैरावृतो वेष्टित इति, हनुमान् प्रमुख श्रेष्ठो येषा सुग्रीवादीना ते तादृशा ॥ १४३ ॥

**दुन्दुभ्यस्थिप्रहरणः सप्ततालविभेदनः ।**
**सुग्रीवराज्यदो वालीघाती सागरशोषणः ॥ १४४ ॥**

**दुन्दुभ्यस्थिप्रहरण** इति । दुन्दुभिनाम्नोऽसुरस्य मृतदेहस्यास्थीन् प्रकर्षेण हरण पादाङ्गुष्ठेन क्षेपक इत्यर्थ । तदुक्त रामायणे 'पादाङ्गुष्ठेन चिक्षेप सम्पूर्ण दशयोजन'मिति । **सप्ततालविभेदन** इति । सप्तसख्याकान् तालवृक्षान् एकेनैव बाणेन भिनत्तीति तथा, उक्त च 'निभेद च पुनस्तालान् सप्तैकेन महेषुणे'ति । **सुग्रीवराज्यद** इति । वानरराजाय सुग्रीवाय किष्किन्धाराज्य दत्तवानित्यर्थ । **वालीघातीति** । वालिन सुग्रीवज्येष्ठभ्रातर हन्तु शीलमस्येति । **सागरशोषण** इति । सागरस्य समुद्रस्य शोषण शुष्ककरणसमर्थ , तदुक्त 'चद्रोपविश्रमे'त्यादो ॥ १४४ ॥

**सेतुबन्धनकर्ता च विभीषणहितप्रदः ।**
**रावणादिशिरश्छेदी राक्षसाघौघनाशकः ॥ १४५ ॥**

**सेतुबन्धनकर्ता** चेति । सेतुर्जलमार्गस्तस्य बन्धन पर्वतवृक्षादिभिस्तत्कर्तेत्यर्थ । **विभीषणहितप्रद** इति । विभीषणाय हित भक्तिस्वरूप प्रर्पण ददातीति । **रावणादिशिरश्छेदीति** । रावण आदिर्येषा कुम्भकर्णादीना तेषा शिरासि छेत्तु शीलमस्येति । **राक्षसाघौघनाशक** इति । राक्षसानामघस्य पापस्य ओघ प्रवाहानिच्छेद , तस्य नाशक भगवत्सान्निध्ये मृतत्वात् । यद्वा । राक्षसा एव अघोघास्तेषा, राक्षसस्य रावणस्य वा ॥१४५

**सीताऽभयप्रदाता च पुष्पकागमनोत्सुकः ।**
**अयोध्यापतिरत्यन्तसर्वलोकसुखप्रदः ॥ १४६ ॥**

**सीताऽभयप्रदाता** चेति । सीतायै अभय रक्ष कृतभयाभाव प्रर्पण दत्तवानि त्यर्थ । **पुष्पकागमनोत्सुक** इति । पुष्पकाख्येन विमानेन अयोध्या प्रति गमनायोत्सुक उत्कण्ठित । **अयोध्यापतिरिति** । अयोध्याया पति स्वामी रक्षक इति यावत् । **अत्यन्तसर्वलोकसुखप्रद** इति । अत्यन्तमतिशयित सर्वलोकेभ्य सुख तत्प्रददाति सानुकम्पामृतनिरीक्षणेनेति तथा ॥ १४६ ॥

**मथुरापुरनिर्माता सुकृतज्ञस्वरूपदः ।**
**जनकज्ञानगम्यश्च ऐलान्तप्रकटश्रुतिः ॥ १४७ ॥**

**मधुरापुरनिर्मातेति** । शत्रुघ्नरूपेण मधुवने मथुरानामकस्य पुरस्य निर्माता रचनकर्तेत्यर्थ । **सुकृतज्ञस्वरूपद इति** । सुकृत पुण्य जानन्तीति सुकृतज्ञा , तेषु स्वरूप ददाति । यद्वा । सुष्ठु कृतज्ञ स चासौ स्वरूपदश्चेति । **जनकज्ञानगम्यश्चेति** । जनक पिता तद्वत् यत् ज्ञान प्रजानामयमस्मत्पितेत्येवरूप तद्गम्य ज्ञानविषय इत्यर्थ । तदुक्त 'जुगोप पितृवद्रामो मेनिरे पितर च त'मित्यादिना । **ऐलान्तप्रकटश्रुतिरिति** । इला पृथ्वी तत्सम्बन्धी योन्त अथ प्रदेश तत्पर्यन्त प्रकटा प्रसृता श्रुति श्रवण चरित्रकथन यस्येति, कीर्तिश्रवण वा, एतेनाब्रह्माण्ड प्रतापप्रचारो दर्शित , अत एवोक्त 'कूर्म पादोस्य यष्टिर्भुजगपति'रित्यादिना । यद्वा । श्रीभागवताभिप्रायेण ऐल पुरूरवा तदन्त तदुपदेशपर्यन्त यस्मिन्नैलादयो भूपा इत्यन्त प्रकटा श्रुति श्रवण यस्येति ॥ १४७ ॥

हैहयान्तकरो रामो दुष्टक्षत्रविनाशकः ।
सोमवंशहितैकात्मा यदुवंशविवर्धनः ॥ १४८ ॥

**हैहयान्तकर इति** । हैहयाना श्रेष्ठस्य कार्तवीर्यार्जुनस्यान्त विनाश करोतीति तथा । तदुक्त 'हैहयानामधिपति'रित्यादौ । **राम इति** । रमते स्वरूपानन्देन महेन्द्राद्राविति राम , रमयति युयुत्सून् सङ्ग्रामे इति । **दुष्टक्षत्रविनाशक इति** । दुष्टस्याब्रह्मण्यस्य क्षत्रस्य क्षत्रियजातिमात्रस्य विशेषतो नाशक । **सोमवंशहितैकात्मेति** । सोमवंशस्य हित एवैकस्मिन्नर्थे आत्मा चित्त यस्येति । हित तु ब्रह्मण्यत्वधर्मज्ञत्वसम्पादनपूर्वक सर्वतो रक्षणमिति । **यदुवंशविवर्धन इति** । यदोर्ययातेज्र्येष्ठपुत्रस्य यो वंश क्रोष्टुसंज्ञकमारभ्य तस्य विशेषेण वृद्धिकर्तेत्यर्थ । एव स्वप्राकट्यकरणेन तन्माहात्म्यमप्यत्यन्तमेवाविष्कृतवान् । अत एवोक्त विष्णुपुराणे 'यदोर्वंश नर श्रुत्वा सर्वपापै प्रमुच्यते । यत्रावतीर्ण निष्णवाख्य पर ब्रह्म नराकृती'ति ॥ १४८ ॥

इति नवमस्कन्धनामानि ॥

---

## अथ दशमस्कन्धनामानि ॥

परब्रह्मावतरणः केशवः क्लेशनाशनः ।
भूमिभारावतरणो भक्तार्थाखिलमानसः ॥ १४९ ॥

**परब्रह्मावतरण इति** । अक्षरब्रह्मण परमुत्कृष्ट यत्पुरुषोत्तमाख्य तत्परब्रह्मेत्युच्यते । तदुक्त भगवता 'यस्मात् क्षरमतीतोहमक्षरादपि चोत्तम । अतोस्मि लोके वेदे च प्रथित पुरुषोत्तम' इति । तच्च परब्रह्म श्रीकृष्णाख्यमिति ज्ञेयम् । कृष्णपदेन पर ब्रह्म निर्वचनीयम् 'कृषिर्भूवाचक शब्द'इत्यादिना । साक्षात् श्रीकृष्णमुद्दिश्य पार्थोप्याह 'पर ब्रह्म पर धाम पवित्र परम भवान् । पुरुष शाश्वत दिव्यमादिदेवमज विभु'मित्यादिना । अवतरत्याविर्भवतीत्यवतरण अवतारकर्ता अवतारीति, परब्रह्मैवावतरण परब्रह्म

वतरण । केशव इति । प्रशस्ता केशा सन्त्यस्य केशव, केशाद्वान्यतरस्यामिति वा । कश्च ईशश्च तयोर्वमृत यस्मादिति वा, कश्च अश्च ईशश्च त्रिमूर्तय केशास्ते वशे यस्येति वा, केशिवधाद्वा, तदुक्त विष्णुपुराणे श्रीकृष्ण प्रति नारदेन 'यस्मात्त्वयैव दुष्टात्मा हत केशी जनार्दन । तस्मात् केशवनाम्ना त्व लोके ज्ञेयो भविष्यसी'ति । पृषोदरादित्वात् साधुत्वम् । यद्वा । सूर्यादिसक्रान्तास्तेजोंऽशव केशसज्ञिता, तद्वत्तया वा केशव । अत एव महाभारतेऽप्युक्त 'अशवो ये प्रकाशन्ते मम ते केशसज्ञिता' इति । यद्वा । केशवशब्देन शक्तिरुच्यते । शक्तिरूपत्व तु ब्रह्मशिवयोरस्तीति तादृशशक्तिमत्त्वात् केशव' । तदुक्त हरिवशे 'को ब्रह्मेति समाख्यात ईशोऽह सर्वदेहिनाम् । आवा तवाङ्गे सम्भूतौ तस्मात् केशवनामवान्' इति । क्लेशनाशन इति । भूम्यादीना भक्ताना त्रिविधमपि क्लेश नाशयतीति तथा, 'क्लेशव्ययाय कलये'त्युक्तत्वात् । भूमे क्लेशनिवृत्तिस्त्ववतारश्रवणमात्रेणैव, तदुक्त 'पुरैव पुसावधृतो धराज्वर'इत्यादिना । भूमिभारावतरण इति । भूमे भार दुष्टराजकरूप तमवतारयति दूरीकरोतीति तथा, भूमिभारे तन्निमित्तीकृत्यावतरण यस्येति वा, भूमेर्भारावतरण पृथग्भावो यस्मादिति वा । भक्तार्थाखिलमानस इति । भक्तानामर्थेषु उद्देश्यप्रयोजनेष्वखिलमन्यून पूर्ण मानस यस्येति । यस्य भक्तस्य यो यो मनोरथो येन येन प्रकारेण तस्य तस्य तथा पूरणे मनो यस्येति भाव । यद्वा । भक्तार्थे अखिलभक्तविरोधिना मागधदुर्योधनादीना मान गर्व सति हन्तीति तथा ॥ १४९ ॥

**सर्वभक्तनिरोधात्मा लीलानन्तनिरोधकृत् ।**
**भूमिष्ठपरमानन्दो देवकीशुद्धिकारणम् ॥ १५० ॥**

सर्वभक्तनिरोधात्मेति । सर्वेषा भक्ताना श्रीगोकुलवासिप्रभृतीना यो निरोध प्रपञ्चास्मृतिपूर्वक तेषु रमण तत्र आत्मा यस्येति, तदुक्तमाचार्यै 'निरोधोऽस्यानुशयन प्रपञ्चे क्रीडन हरे रिति, स्कन्धार्थरूप एव वा । लीलानन्तनिरोधकृदिति । लीला एवानन्ता स्ताभि पूर्वोक्तनिरोध करोतीति तथा, लीलया अनन्तानामिति वा । यद्वा । लीला शक्ति अनन्त शेष, ताभ्या निरोध दुष्टहनन करोतीति । भूमिष्ठपरमानन्द इति । भूमौ तिष्ठन्ति भूमिष्ठा भक्ता व्रजवासिनस्तेषा परमश्चासावानन्दश्चेति, स यस्मादिति वा । यद्वा । भूमिष्ठा मथुरा तस्या सन्निहितो य परमानन्द स तथा 'मथुरा भगवान् यत्र नित्य सन्निहितो हरि'रिति वाक्यात् । देवकीशुद्धिकारणमिति । देवक्या शुद्धि सस्कारो विवाहरूप स एव कारण प्रादुर्भावकारण यस्येति । अत्र सज्ञाशब्दात्र लिङ्गनियम । अत्राय भाव । भक्ताना बहुदु खेन भगवत्प्राकट्यम्, तच्च विवाहाङ्गगृहप्रवेशसमय एवाकाशवाणीनिमित्तककर्मकृतमिति परम्परया कारणम् । यद्वा, 'देवक्या विष्णुरूपिण्या'-मिति वाक्यात् स्वस्वरूपत्वेन शुद्धौ कारणम् ॥ १५० ॥

**वसुदेवज्ञाननिष्ठसमजीवनिवारकः ।**
**सर्ववैराग्यकरणस्वलीलाधारशोधकः ॥ १५१ ॥**

**वसुदेवज्ञाननिष्ठसमजीवनिवारक** इति । वसति वस्ते सदा सर्वमिति वा 'वसुर्विष्णुर्विष्णुर्वसु'रिति श्रुतेः । तं दीव्यति तेन दीव्यत इति वा वसुदेवः, शुद्धसत्त्वात्मको वसुदेवपदेनोच्यते । 'सत्त्वं विशुद्धं वसुदेवसंज्ञित'मिति वचनात् । वसुदेवे ज्ञानरूपेण निष्ठा नितरां स्थितिर्यस्येति वसुदेवज्ञाननिष्ठः, मया सह वर्तत इति समः, भगवान् तत्सम्बन्धिनो ये जीवा वसुदेवस्य पद्पुत्रास्तेषां निवारकः, कंसत्यक्तानामपि नारदद्वारा जीवितान्निवृत्तिकर्तेत्यर्थः, वसुदेवज्ञाननिष्ठश्चासौ समजीवनिवारकश्चेति । यद्वा । वसुदेवज्ञानविषयीभूतं यत्समं साम्यं तेन कृत्वा यज्जीवनं पुत्राणां तदेव जीव इत्युच्यते, तस्य निवारकः । तदुक्तं 'दृष्ट्वा समत्वं तच्छौरे'रित्यादिना । **सर्ववैराग्यकरणस्वलीलाधारशोधक** इति । सर्वेषां विषयेभ्यो वैराग्यकरणीभूता या स्वलीला स्वप्राकट्यरूपा तदाधारो देवकी तस्याः शुद्धिर्दोषाभावसम्पत्तिस्तत्कर्तेत्यर्थः । यद्वा । मायाज्ञापनेन स्वलीलाधारो व्रजभूमिः, तस्यां स्वोपयोगिवस्तुसम्पादनं शुद्धिस्तत्कर्तेत्यर्थः । स्त्रीणां तु कुक्षिगता दोषा मृतापत्यत्ववन्ध्यात्वादयः । प्रकृते तु देवक्यां स्वयं प्रकटितो मृतापत्यत्वदोषनिवारकः पूर्वं मृतानामप्यग्रे-दर्शनादिति ॥ १५१ ॥

**मायाज्ञापनकर्ता च शेषसम्भारसम्भृतिः ।**
**भक्तक्लेशपरिज्ञाता तन्निवारणतत्परः ॥ १५२ ॥**

**मायाज्ञापनकर्ता** चेति । माया योगमाया, तस्यै यदाज्ञापनं 'गच्छ देवि व्रज'मित्यादिनोक्तं तत्कर्तेत्यर्थः । **शेषसम्भारसम्भृति**रिति । शेषस्य अवशिष्टस्य सम्भारस्य सामग्र्याः सम्भृतिः सम्पूर्तिर्यस्मादिति, यस्येति वा, । यद्वा । शेषस्यानन्तस्य सम्भारेण सङ्कर्षेण सम्भृतिः सामग्रीसम्पत्तिर्जन्मार्थं यस्येति, गर्भसङ्कर्षणेऽपि सम्भृतिर्गर्भसम्पूर्तिर्यस्मादिति वा । आचार्यैस्तथैवाम्नातं टीकायाम् । **भक्तक्लेशपरिज्ञाते**ति । स्वप्राकट्येन भक्तानां क्लेश एव निमित्तं तस्य परितः सर्वप्रकारेण ज्ञातेत्यर्थः । **तन्निवारणतत्पर** इति । तस्य भक्तक्लेशस्य निवारणे दूरीकरणे तत्परः उद्युक्तः । यद्वा । तन्निवारणेन तान् पिपर्तीति तत्परः ॥ १५२ ॥

**आविष्टवसुदेवांशो देवकीगर्भभूषणम् ।**
**पूर्णतेजोमयः पूर्णः कंसाधृष्यप्रतापवान् ॥ १५३ ॥**

**आविष्टवसुदेवांश** इति । आविष्टः समन्तात् प्रविष्टो वसुदेवे वसुदेवमनसि अंशः प्रद्युम्नांशो यस्य, अंशपदार्थस्तु टीकातोवगन्तव्यः । तदुक्तं 'आविवेशांशभागेने'ति । **देवकीगर्भभूषण**मिति । देवक्या गर्भरूपेण भूषणं अलङ्काररूप इत्यर्थः, अत एव शोभातिशयं वक्ष्यति 'तां वीक्ष्य कंसः प्रभये'त्यादिना । **पूर्णतेजोमय** इति । पूर्ण सर्वा-

त्मकं यत्तेजो धर्मिरूपं तन्मयस्तत्प्रचुर इत्यर्थः, प्राचुर्ये मयट् । अनेन तेजःपुञ्जत्वमुक्तम् । 'पूर्ण' इति । पूर्यते स्वयमेवैश्वर्यादिभिरिति पूर्णः अखण्डितः इत्यर्थः । तदुक्तमाचार्यैः 'काष्ठा यथानन्दकरं मनस्त' इत्यत्र । कंसाधृष्यप्रतापवानिति । कंसेनाधृष्यः धर्षितुमशक्यो यः प्रतापः अनिर्वाच्यमहिमाविशेषस्तद्वानिति, तदुक्तं 'किमद्य तस्मिन् करणीय'मित्यादौ ॥१५३

**विवेकज्ञानदाता च ब्रह्माद्यखिलसंस्तुतः ।**
**सत्यो जगत्कल्पतरुर्नानारूपविमोहनः ॥ १५४ ॥**

विवेकज्ञानदाता चेति । कंसे विवेकज्ञानस्य सदसद्विवेचनरूपस्य दाता, महासुरेपि भगवत्प्रतापमहिम्नैव विवेकः समजनीति भावः । ब्रह्माद्यखिलसंस्तुत इति । ब्रह्मा आदिर्येषां भवादीनाम्, अत एवाखिलाः, सर्वैः तैः सम्यक् स्वकार्यनिवेदनपूर्वकं स्तुतः । यद्वा । ब्रह्मादिभिरखिलमन्यूनं यथा स्यात् तथा स्तुतः अखिलत्वेन पूर्णपुरुषोत्तमत्वेन स्तुत इति वा । तदुक्तं 'ब्रह्मा भवश्च तत्रै'त्यादिना, स्तुतेराद्यश्लोकार्थरूपत्वमाहुः सत्य इति । 'सत्यव्रत'मित्यस्यार्थः सर्वोप्यत्रानुसन्धेयः । धर्मिसत्यत्व[illegible]या सत्यमिति, तदुक्तं 'सत्यात्मकं त्वां शरणं प्रपन्न'इति । द्वितीयश्लोकार्थत्वमाहुः । जगत्कल्पतरुरिति । जगत्स्थावरजङ्गमात्मकं तद्रूपः कल्पतरुः कल्पवृक्षः, देवेष्वेव फलदानात् सुरतरुत्वम्, तदुक्तं 'एकायनोऽसौ द्विफल' इत्यादिना । तृतीयार्थत्वमाहुः नानारूपविमोहन इति । रजःसत्त्वतमःप्रकृतिकानि यानि ब्रह्मादिरूपाणि तैर्विशेषेण मोहनः मोहकर्तेत्यर्थः, अत एवोक्तं 'त्वन्मायया संवृतचेतस' इति ॥ १५४ ॥ चतुर्थपञ्चमषष्ठार्थमाहुः—

**भक्तिमार्गप्रतिष्ठाता विद्वन्मोहप्रवर्तकः ॥**
**मूलकालगुणद्रष्टा नयनानन्दभाजनम् ॥ १५५ ॥**

भक्तिमार्गप्रतिष्ठातेति । कर्मज्ञानादिभ्यो भक्तिमार्गे एव प्रकर्षेण स्वस्थितिकारक इति, भक्तिमार्गस्य प्रकर्षेण स्थितिकारक इति वा, तदुक्तं 'बिभर्षि रूपाण्यवबोध' इत्यादिना । विद्वन्मोहप्रवर्तक इति । भक्तिराहित्येन केवलज्ञाननिष्ठा ये विद्वांसः तेषु मोहस्य मुक्तत्वाभिमानेन तत्त्वास्फूर्तेः प्रवृत्तिकर्तेत्यर्थः । तदुक्तं 'येऽन्येरविन्दाक्षविमुक्तमानिन' इत्यादिना । मूलकालगुणद्रष्टेति । मूले सर्वाधारीभूते काले स्थित्याद्यर्थं गुणानां सत्त्वादीनां द्रष्टा ईक्षणकर्तेत्यर्थः । यद्वा । सर्वमूलस्य श्रीकृष्णस्य यो जन्मकालस्तस्य ये गुणाः 'अथ सर्वगुणोपेत' इत्यादिना वक्ष्यमाणास्तेषां द्रष्टा प्रेरक इति । नयनानन्दभाजनमिति । प्रादुर्भूतस्य भगवतो दर्शनेन वसुदेवस्य नयनयोर्य आनन्दः तं भाजयति प्रापयति, तस्य भाजनं स्थानमिति वा, तदुक्तं 'स विस्मयोत्फुल्लविलोचन'इत्यादिना ॥ १५५ ॥

**वसुदेवसुखाब्धिश्च देवकीनयनामृतम् ।**
**पितृमातृस्तुतः पूर्वसर्ववृत्तान्तबोधकः ॥ १५६ ॥**

**वसुदेवसुखाब्धिश्चेति** । वसुदेवस्य सुखं हर्षं तद्रूपा एवाप ता धीयन्ते यस्मिन्निति वा, वसुदेवस्य स्नानार्थं हर्षजलधिर्यस्मादिति वा, अत एवोक्त 'मुदा स्तुत' इति । **देवकीनयनामृतमिति** । देवक्या नयनयोश्चातिदुःखतप्तयोरतिशीतलकरणात् अमृत सुधारूप इत्यर्थ , देवकीनयनयोरमृत यस्मादिति वा, तदुक्त 'अथैनमात्मज वीक्ष्ये'त्यादिना । **पितृमातृस्तुत** इति । पिता च माता च ताभ्या पितृमातृभ्या स्तुत । अत्र पिता मानेत्येकशेषत्वाभावो मातु प्राधान्यद्योतनाय, पितृसहिता माता पितृमाता तया स्तुत इति वा । सहभाव उपलक्षणीभूतस्तेन पूर्वं पित्रा स्तुत पश्चान्मात्रेति भाव । **पूर्वसर्गवृत्तान्तबोधक** इति । पूर्वसर्गकालीनो य सर्वोऽखिलो वृत्तान्त 'त्वमेव पूर्वसर्गेऽभू'रित्यादिनोक्त , तस्य बोधक पित्रोरित्यर्थ । यद्वा । पूर्वं यदाचरित सर्वं वृत्त तपश्चर्यादिक तस्मान्तस्य समासेर्बोधक । अनाय भाव । पूर्वमवतारद्वयेपि पुनस्त्वयो साधने प्रवृत्तिरेवासीन्तुल्यफलाप्राप्तेस्तदानीं साक्षात् स्वप्राकट्येनेतोधिकफलाभावात् साधनसमाप्तिबोधन युक्तमेव । तदुक्त 'तृतीयेस्मिन्भव' इत्यादिना ॥ १५६ ॥

**गोकुलागतिलीलाप्तवसुदेवकरस्थितिः ।**
**सर्वेशत्वप्रकटनो मायाव्यत्ययकारकः ॥ १५७ ॥**

**गोकुलागतिलीलाप्तवसुदेवकरस्थितिरिति** । गोकुल प्रति या आगति लीला आगमनरूपा, तदर्थं आप्ता प्राप्ता वसुदेवस्य करयो स्थितिरेव स्थान येन । यद्वा । गोकुलागतिलीलार्थं आप्तस्य वसुदेवस्य करयो स्थितिर्यस्येति, तदुक्त 'ततश्च शौरि'रित्यादिना । **सर्वेशत्वप्रकटन** इति । सर्वेशत्व सर्वनियमनसामर्थ्यं तस्य प्राकट्यकर्तेत्यर्थ , सर्वैश्वर्येति वा तदैश्वर्यं 'ता कृष्णवाह'इत्यादिनोक्तम् । **मायाव्यत्ययकारक** इति । माया योगमाया तस्या व्यत्यय स्थानविनिमय तत्कर्तेत्यर्थ । तदुक्त 'नन्दव्रज शौरिरुपे'त्यादिना ॥ १५७ ॥

**ज्ञानमोहितदुष्टेशः प्रपञ्चास्मृतिकारणम् ।**
**यशोदानन्दनो नन्दभाग्यभूगोकुलोत्सव ॥ १५८ ॥**

**ज्ञानमोहितदुष्टेश** इति । देवकीगर्भजन्मश्रवणानन्तर कालोयमिति ज्ञानेन मोहित विह्वलीकृतो दुष्टेश कसो येनेति, यस्मादिति वा । 'स तल्पपूर्णमुत्थाये'त्यादिना । **प्रपञ्चास्मृतिकारणमिति** । यशोदाया प्रपञ्चस्य स्त्रीपुत्यक्तिविशेषस्यास्मरणे अपरिज्ञाने कारण हेतुरित्यर्थ, यत स्वादेशादेव मायया तथा करणात् । तदुक्त 'यशोदा नन्दपत्नी चे'त्यादिना । **यशोदानन्दन** इति । सर्वान् मनोरथान् पूरयित्वा यशोदामानन्दय तीति तथा । **नन्दभाग्यभूगोकुलोत्सव** इति । नन्दस्य भाग्यभूभाग्यभूमिरूप यद्गोकुल तस्मिन्नुत्सव आनन्दरूप , तस्योत्सवो यस्मादिति वा । यद्वा । नन्दभाग्यान्निमित्तभूताद्गोकुलयोरप्युत्सवो यस्मादिति ॥ १५८ ॥

**नन्दप्रियो नन्दसूनुर्यशोदायाः स्तनन्धयः ।**
**पूतनासुपयःपाता मुग्धभावातिसुन्दरः ॥ १५९ ॥**

**नन्दप्रिय** इति । नन्दस्य प्रियः, नन्दं प्रीणाति सर्वकामैरिति वा, अत एव वक्ष्यति 'तत आरभ्य नन्दस्ये'त्यादिना । **नन्दसूनुरि**ति । सूयते इति सूनुः पुत्रः, नन्दस्य सूनुः नन्दसूनुः । 'नन्दस्त्वात्मज उत्पन्न' इत्यादिना । **यशोदायाः स्तनन्धय** इति । यशोदायाः स्तनं धयतीति पिबतीति, संज्ञाशब्दत्वादलुक्समासः । **पूतनासुपयःपा**तेति । पूतनायाः असून् प्राणान् पयः स्तन्यं तद्द्वयं पिबतीति तथा, असुसहितं पयोऽसुपय इति वा, तदुक्तं 'तत्प्राणैः समं रोपसमन्वितोऽपिब'दिति । **मुग्धभावातिसुन्दर** इति । मुग्धभावेनात्यन्तं सुन्दरः शोभातिशययुक्त इत्यर्थः । भीत्यभावपूर्वकं मौग्ध्यमाश्रित्य राक्षस्युरस्येव क्रीडनेन तदानीं शोभातिशयः कश्चन समजनीति भावः ॥ १५९ ॥

**सुन्दरीहृदयानन्दो गोपीमन्त्राभिमन्त्रितः ।**
**गोपालाश्चर्यरसकृत् शकटासुरखण्डनः ॥ १६० ॥**

**सुन्दरीहृदयानन्द** इति । सुन्दर्यो व्रजसुन्दर्यः, तासां हृदये आनन्दरूपः स यस्मादिति वा । त्वरितं भगवद्ग्रहणसमये तास्वनिर्वाच्यसुखविशेषं दत्तवानिति भावः । तदुक्तं 'गोप्यस्तूर्णं समभ्येत्ये'त्यादिना । **गोपीमन्त्राभिमन्त्रित** इति । गोपीसम्बन्धिनो ये मन्त्राः । 'अव्यादजोङ्घ्रिमणिमा'नित्यादयः, तैरभितः सर्वतो मन्त्रितो रक्षितः । एतेषु गोपीसम्बन्धात् तदर्पिका एवैते मन्त्रा इति ज्ञायते । **गोपालाश्चर्यरसकृ**दिति । गोपाला नन्दादयः तेषु आश्चर्यरसं शकटविपर्ययकरणेन करोतीति तथा । सर्वरसदानार्थं प्रवृत्तस्य तादृशरसदानमप्युचितमेव । **शकटासुरखण्डन** इति । शकटमधिष्ठितस्य मायाविनः कस्यचिदसुरस्य शकटविपर्ययकरणेन खण्डनः, खण्डयत्यवयवशः पृथक् करोतीति । मूले अनुक्तावपि पुराणान्तरप्रसिद्धिबलादसुरोपि तत्रावात्सीदिति ज्ञायते । ब्रह्माण्डपुराणे धरणीशेषसंवादे प्रसिद्धम् । अन्यथा नन्दगृहसमृद्धिकर्ता भगवान् कथं शकटस्थितं तद्वस्तु वृथा नाशयेदतो ज्ञायते, तदावेशिवधेनोपकृतवानेव नन्दायेति ॥ १६० ॥

**नन्दव्रजजनानन्दी नन्दभाग्यमहोदयः ।**
**तृणावर्तवधोत्साहो यशोदाज्ञानविग्रहः ॥ १६१ ॥**

**नन्दव्रजजनानन्दी**ति । नन्दश्च व्रजश्च जनाश्च नन्दव्रजजनाः, तानानन्दयति तच्छीलः । **नन्दभाग्यमहोदय** इति । नन्दभाग्यस्य महानुदयः उद्बोधस्तद्रूपः, स यस्मादिति वा । न हि भगवत्सम्बन्धं विना एतादृशभाग्योदयः कस्यचित्सम्भवति यादृशो व्रजेशस्य । **तृणावर्तवधोत्साह** इति । वातरूपस्य तृणावर्तस्य वधे उत्साह औत्सुक्यं यस्येति, व्रजवासिनां तृणावर्तवधसम्बन्ध्युत्सवो यस्मादिति वा । **यशोदाज्ञानविग्रह**

इति । यशोदाया ज्ञानाय ईश्वरत्वज्ञानाय मुखे विग्रहो विराड्देहो यस्येति । तदुक्तं 'एकदात्मजमादाये'त्यादिना ॥ १६१ ॥

**बलभद्रप्रियः कृष्णः सङ्कर्षणसहायवान् ।**
**रामानुजो वासुदेवो गोष्ठाङ्गणगतिप्रियः ॥ १६२ ॥**

**बलभद्रप्रिय** इति । बलेनैव भद्रं कुशलं मङ्गलरूपो वा बलभद्रः, तस्य प्रियः अनुजत्वात्, स प्रियो यस्येति वा । **कृष्ण** इति । व्याख्यातमिदम् । यद्वा, कर्षत्यरीन् रणभूमौ, पुच्छेन वत्सान् वा गोष्ठे, श्यामत्वाद्वा । **सङ्कर्षणसहायवानिति** । *सम्यक् कर्षत्यरीनिति* सङ्कर्षणः, स सहायो विद्यते यस्येति तथा । **रामानुज** इति । रमयति लोकानिति रामो बलभद्रः 'रामेति लोकरमणा'दित्युक्तत्वात्, तमनु जातो रामानुजः । **वासुदेव** इति । 'प्रागयं वसुदेवस्ये'त्युक्तत्वात् वसुदेवस्यापत्यं वासुदेवः । यद्वा । वसति सर्वत्र वासयत्याच्छादयति स्वयमिति, वासुः दीव्यति क्रीडति, विजिगीषते, व्यवहरति, द्योतते, स्तूयते, दृश्यते, गच्छतीति, वासुश्चासौ देवश्च वासुदेवः । तदुक्तं मोक्षधर्मे 'छादयामि जगद्विश्वं भूत्वा सूर्य इवांशुभिः । सर्वभूताधिवासश्च वासुदेवस्ततः स्मृत' इति । उद्योगेपि 'वसनात् सर्वभूतानां वसुत्वाद्देव योनितः । ततो वासुदेवो ज्ञेय' इति । श्रीविष्णुपुराणेपि 'सर्वत्रासौ समस्तं च वसत्यत्रेति वै यतः । ततः स वासुदेवेति विद्वद्भिः परिपठ्यते । सर्वाणि तत्र भूतानि वसन्ति परमात्मनि । भूतेषु च स सर्वात्मा वासुदेव इति स्मृत ' इति । **गोष्ठाङ्गणगतिप्रिय** इति । गावस्तिष्ठन्त्यत्रेति गोष्ठं तत्सम्बन्धि यदङ्गणं अजिरं, तत्र गतिः जानुभ्यां रिङ्गणं सा प्रिया यस्येति । तथा गत्वा सर्वेषां व्रजस्थानां प्रिय इति वा, तदुक्तं 'कालेन व्रजते'त्यादिना ॥ १६२ ॥

**किङ्किणीरवभावज्ञो वत्सपुच्छावलम्बनः ।**
**नवनीतप्रियो गोपीमोहसंसारनाशकः ॥ १६३ ॥**

**किङ्किणीरवभावज्ञ** इति । किङ्किणी क्षुद्रघण्टिका कट्याभरणं, तस्या यो रवो ध्वनिः तस्य भावं जानातीति तथा । अत्रायं भावः । यथा वाद्यमनुसृत्य नृत्यति नर्तकः तथा किङ्किणीरवमनुसृत्य नृत्यमिव रिङ्गणमप्यकरोदिति । तदुक्तं च 'तावङ्घ्रियुग्ममनुसृत्ये'त्यादिना । **वत्सपुच्छावलम्बन** इति । वत्सानां पुच्छान्यवलम्बते गृह्णाति इतस्ततोऽनुकृष्य धावनार्थमिति । तदुक्तं '*यर्ह्यङ्गनादर्शनीयकुमारलीला*'*वित्यादिना* । ***नवनीतप्रिय*** *इति* । नवनीतं प्रियं प्रीतिजनकं यस्येति । **गोपीमोहसंसारनाशक** इति । गोपीनां बाललीलादर्शनेन यो मोहो वैचित्यं तेनैव संसारस्य नाशकः । अन्यत्र मोहः स्मृतिनाशकः । अयं त्वलौकिको भक्तिमार्गीय इति तन्नाशकः ॥ १६३ ॥

**गोपबालकभावज्ञश्चौर्यविद्याविशारदः ।**
**मृत्स्नाभक्षणलीलास्यमाहात्म्यज्ञानदायकः ॥ १६४ ॥**

**गोपबालकभावज्ञ** इति । गोपबालकाना भावमस्य गृहे अद्य चौर्यार्थं गम्यते चेत्सम्यक् इत्येवरूप जानाति तथा । **चौर्यविद्याविशारद** इति । चौर्यविद्याया उपायकरणे विशारदो निपुण. । तदुक्त 'हन्ताग्राह्य'इत्यादिना । **मृत्स्नाभक्षणलीलास्य-माहात्म्यज्ञानदायक** इति । 'कृष्णो मृद भक्षितवा'नित्याद्युक्ता या मृत्स्नाभक्षणरूपा लीला तद्युक्त यदास्य मुख तेनैव व्याजेन स्वमाहात्म्यस्य महिम्नो ज्ञानस्य दातेत्यर्थ. । तदुक्त 'इत्थ विदिततत्त्वाया'मित्यादौ ॥ १६४ ॥

**धराद्रोणप्रीतिकर्ता दधिभाण्डविभेदनः ।**
**दामोदरो भक्तवश्यो यमलार्जुनभञ्जनः ॥ १६५ ॥**

**धराद्रोणप्रीतिकर्तेति** । धरा यशोदा द्रोणो वसुश्रेष्ठो नन्द , तयो प्रीतिं स्नेह करोतीत्युत्पादयतीति तथा । तदुक्त 'द्रोणो वसूना प्रवर' इत्यादिना । **दधिभाण्डवि-भेदन** इति । मथ्यमानदधिभाजनस्य विशेषेण भेदनो द्विधाकर्तेत्यर्थ । तदुक्त 'सञ्जात-कोप'इत्यादिना । **दामोदर** इति । दाम उदरे यस्य, मात्रा दाम्ना उदरे बद्धत्वात् । तदुक्त ब्रह्मपुराणे 'तयोर्मध्यगत बद्ध दाम्ना गाढ तयोदरे । ततश्च दामोदरता स ययौ दामबन्धनात्' इति । व्यासोप्याह प्रकारान्तरेण 'दामानि लोकनामानि तानि यस्योदरान्तरे । तेन दामोदरो देव श्रीधरस्त्व समाश्रित' इति । 'दामाद्दामोदर विदु'रिति वचनात् । दमादिसाधनेन उदरा उत्कृष्टा या मतिस्तया गम्यत इति । तदुक्त 'त्यक्त्वा यष्टि'मित्यादि । **भक्तवश्य** इति । भक्ताया परिश्रान्ताया मातु वश्य बन्धनाय वश प्राप्त । तदुक्त 'स्वमातु स्विन्नगात्राया' इत्यादिना । भक्तमानवश्यत्वसूचिकेय लीलेति ज्ञेयम् । **यमलार्जुनभञ्जन** इति । यमलौ सहोत्पन्नौ यौ अर्जुनसञ्ज्ञकौ वृक्षौ तयोर्भञ्जन समन्तात् मर्दक इत्यर्थ । तदुक्त 'बालेन निष्कर्षयते'त्यादिना ॥ १६५ ॥

**बृहद्वनमहाश्चर्यो वृन्दावनगतिप्रियः ।**
**वत्सघाती बालकेलिर्बकासुरनिषूदनः ॥ १६६ ॥**

**बृहद्वनमहाश्चर्य** इति । बृहदाख्ये वने महदत्यन्तमाश्चर्यजनक पूतनादिदुष्टवध-रूप कर्म यस्येति । तथा । पूतनादिदुष्टवधजनित व्रजजनेष्वाश्चर्य यस्मादिति वा, 'गोपवृद्धा महोत्पातानसुभूये'त्यादिना । **वृन्दावनगतिप्रिय** इति । वृन्दावन प्रति गतिर्गमन सा प्रिया यस्येति, वृन्दावने या गति क्रीडासञ्चार सा प्रीतिजनिका यस्येति वा, तदुक्त 'वृन्दावन गोवर्धन यमुने'त्यादि । **वत्सघातीति** । वत्सरूपिण दैत्य बलदेवेन घातयतीति । तदुक्त 'दर्शयन् बलदेवाये'त्यादि । **बालकेलिरिति** । बालै सह केलि क्रीडा यस्येति, अद्भुत-बालकस्यापि लौकिकबालकवत् केलिर्यस्येति वा । **बकासुरनिषूदन** इति । बकनाम्नोऽ-सुरस्य नितरा सूदनो हिंसक तदुक्त 'तमापतन्त'मित्यादिना ॥ १६६ ॥

**अरण्यभोक्ताप्यथवा बाललीलापरायणः ।**
**प्रोत्साहजनकश्चैवमघासुरनिषूदनः ॥ १६७ ॥**

अरण्यभोक्तेति । अथवा पक्षान्तरे प्रक्षिप्ताध्यायानुसारेणैतानि वक्ष्यमाणान्यपि नामानि ज्ञेयानि । अरण्ये गोचारणप्रदेशे भुङ्क्ते इति तथा । **बाललीलापरायण** इति । क्वचिद्वनाशयेत्याद्युक्ता या बाललीला तत्परायणः तत्पर इत्यर्थः । यद्वा । बाललीलापराय पूर्वार्थं वनगमनं यस्येति, बाललीलैव परमुत्कृष्टमयनं यस्येति वा । **प्रोत्साहजनकश्चेति** । प्रकृष्टो य उत्साहो गोपालेष्वह पूर्वमह पूर्वमित्यादिलीलाकरणाय, तस्य जनक उत्पादकः । **एवमघासुरनिषूदन** इति । एवमिति पूर्वोक्तारण्यभोक्तृनामवदिदमपि ज्ञेयमिति ज्ञापनार्थं, न तु नामान्तःपातीवशब्द इति । अजगरदेहस्याघनाम्नोऽसुरस्य नितरां सूदनः ॥१६७॥

**व्यालमोक्षप्रदः पुष्टो ब्रह्ममोहप्रवर्धनः ।**
**अनन्तमूर्तिः सर्वात्मा जङ्गमस्थावराकृतिः ॥ १६८ ॥**

**व्यालमोक्षप्रद** इति । व्यालायाघासुराय मोक्षं प्रकर्षेण दत्तवानिति । तदुक्तं 'पीनाहिभोगोत्थित'मित्यादिना । **पुष्ट** इति । व्यालगले प्रवृद्ध इत्यर्थः । **ब्रह्ममोहप्रवर्धन** इति । ब्रह्मणश्चतुर्मुखस्य तावतां सर्वगोपवत्सानां सम्पत्तिकारणेन मोहस्य प्रकर्षेण वृद्धिकर्तेत्यर्थः । 'एव विमोहय'न्नित्यादिना । मोहहेतुलीलानामान्याहुः **अनन्तमूर्तिरि**ति । अनन्ताः गोपालवत्सरूपा मूर्तयो यस्येति । तदुक्तं 'ततः कृष्णो मुदं कर्तुं'मित्यादिना । **सर्वात्मेति** । पूर्वं याद्यसर्वस्वरूपत्वमुक्तमिदानीं सर्वान्तर्यामित्वमुच्यत इत्यर्थः, भेदः पूर्वस्मात् ज्ञेयः । सर्वेष्वात्मा, सर्वेषामिति वा । **जङ्गमस्थावराकृतिरि**ति । जङ्गमस्य गोपवत्सादेः स्थावरस्य तत्तद्वस्त्राभरणादेराकृतिः संस्थानविशेषरूप इत्यर्थः ॥ १६८ ॥

**ब्रह्ममोहनकर्ता च स्तुत्य आत्मा सदाप्रियः ।**
**पौगण्डलीलाभिरतिर्गोचारणपरायणः ॥ १६९ ॥**

**ब्रह्ममोहनकर्ता** चेति । मा लक्ष्मीस्तस्या उहनं वितर्कः, भगवदचिन्त्यैश्वर्यमेवं भवितुमर्हतीत्येवंरूपो वितर्को मोहनं ब्रह्मणि तत्कारक इत्यर्थः । पूर्वं मोहोपक्रमकर्तृत्वमुक्तमिदानीं फलितमुच्यत इत्यपौनरुक्त्यम् । **स्तुत्य** इति । ब्रह्मणा कथंचित् स्तोतुमर्ह इत्यर्थः । **आत्मेति** । सर्वदेहिनामिति शेषः, तदुक्तं 'नारायणस्त्वं नहि सर्वदेहिनामात्मासी'त्यादिना । **सदाप्रिय** इति । सर्वकाले सर्वेषां प्रिय इति । **पौगण्डलीलाभिरति**रिति । सप्तमवर्षादारभ्य एकादशावधि पौगण्डवयः, तत्सम्बन्धिनी या लीला तया तस्यां वा अभितः सर्वतः रतिः रमणं सुरतविशेषो वा यस्येति तया । तदुक्तं 'ततश्च पौगण्डवयःश्रितौ' वित्यादिना । **गोचारणपरायण** इति । गवां चारणमभीष्टतृणजलादिभिः पोषणं तदेव परमुत्कृष्टमयनं स्थानं यस्मिन्निति वा ॥ १६९ ॥

**वृन्दावनलतागुल्मवृक्षरूपनिरूपकः ।**
**नादब्रह्मप्रकटनो वयःप्रतिकृतिस्वनः ॥ १७० ॥**

वृन्दावनलतागुल्मवृक्षरूपनिरूपक इति । वृन्दावनसम्बन्धिनो ये लतागुल्मवृक्षास्तेषां पुष्पफलभारेणाधःस्पृशां यादृशं रूपं तादृशं सोत्प्रेक्षं निरूपयति वर्णयतीति तथा, लता वल्लयः, गुल्मः प्रकाण्डरहितो वृक्षः । तदुक्तं 'अहो अमी देववरे'त्यादिना । नादब्रह्मप्रकटन इति । नादो गानं तदेव शब्दमहत्वात् ब्रह्मेत्युच्यते, तस्य प्रकटनः प्राकट्यकर्तेत्यर्थः । वयःप्रतिकृतिस्वन इति । वयसां पक्षिणां तदुक्तं 'क्वचिद्गायति गायत्सि'त्यादिना । कूजितस्यानुकृतिः प्रतिकृतिः वयःप्रतिकृतिः यया स्यात्तथा स्वनतीति । तदुक्तं 'क्वचिच्च कलहंसाना'मित्यादौ ॥ १७० ॥

**बर्हिनृत्यानुकरणो गोपालानुकृतिस्वनः ।**
**सदाचारप्रतिष्ठाता बलश्रमनिराकृतिः ॥ १७१ ॥**

बर्हिनृत्यानुकरण इति । बर्हिणां मयूराणां नृत्यमनुकरोतीति तथा । गोपालानुकृतिस्वन इति । गोपालानुकरणं गोपालानुकृतिः, तद्यथा स्यात्तथा स्वनः ध्वनिर्यस्येति तथा, स्वनतीति वा । सदाचारप्रतिष्ठातेति । सतामाचारो ज्येष्ठस्य पादसंवाहनरूपः तस्य स्थापक इत्यर्थः । तदुक्तं 'क्वचित्क्रीडापरिश्रान्त'मित्यादिना । बलश्रमनिराकृतिरिति । बलस्य श्रमापनयनं यस्मादिति तथा ॥ १७१ ॥

**तरुमूलकृताशेपतल्पशायी सखिस्तुतः ।**
**गोपालसेवितपदः श्रीलालितपदाम्बुजः ॥ १७२ ॥**

तरुमूलकृताशेपतल्पशायीति । तरुमूलेषु वृक्षमूलेषु कृता गोपालै रचिताः ये अशेपाणां मृदुसर्वपल्लवप्रसूनानां तल्पः शय्या तत्र शयनीयशील इति । 'क्वचित् पल्लवतल्पे'त्यादिना । सखिस्तुत इति । सखिभिः समानशीलव्यसनैः स्तुतः गीतकीर्तिरिति । गोपालसेवितपद इति । गोपालैः पादसंवाहनादिभिः सेविते पदे चरणकमले यस्येति । श्रीलालितपदाम्बुज इति । श्रिया लालिते सस्नेहं सेविते पदे चरणकमले यस्येति । तदुक्तं 'रेमे रमालालित' इति ॥ १७२ ॥

**गोपसम्प्रार्थितफलदाननाशितधेनुकः ।**
**कालीयफणिमाणिक्यरञ्जितश्रीपदाम्बुजः ॥ १७३ ॥**

गोपसम्प्रार्थितफलदाननाशितधेनुक इति । गोपालैः श्रीदामसुबलाद्यैः सम्प्रार्थितानि भक्षणाय याचितानि यानि यानि तालफलानि तद्दानेन तद्दानपूर्वकं नाशितो हिंसितः धेनुकः खरकायो दैत्यो येनेति । कालीयफणिमाणिक्यरञ्जितश्रीपदाम्बुज इति । कालीयो नागः स चासौ फणा, तत्फणोपरि नर्तनेन तन्मूर्ध्नि स्थितानि यानि माणिक्यानि

मणिविशेषास्तैः कृत्वा यद्रञ्जितं रागः तेन या श्रीः शोभा तद्युक्ते पदाम्बुजे यस्येति. रञ्जिते रक्ते लक्ष्मीसम्बन्धिपदाम्बुजे यस्येति वा ॥ १७३ ॥

**दृष्टिसञ्जीविताशेषगोपगोगोपिकाप्रियः ।**
**लीलासम्पीतदावाग्निः प्रलम्बवधपण्डितः ॥ १७४ ॥**

**दृष्टिसञ्जीविताशेषगोपगोगोपिकाप्रिय** इति । दृष्ट्या अमृतदृष्ट्या सञ्जीविता गावश्च गोपाश्च गोपिकाश्च अशेषाश्च ताः दृष्टिसञ्जीविताश्चाशेषगोपगोपिकाश्च तासां प्रियः प्राणभूत इत्यर्थः । **लीलासम्पीतदावाग्निरिति** । लीलया अनायासेनैव सम्यक् पीतो दावाग्निस्तृणवह्निर्येनेति, लीलार्थमिति वा । तदुक्तं 'इत्थं स्वजनवैक्लव्य'मित्यादौ । **प्रलम्बवधपण्डित** इति । प्रलम्बाख्यासुरस्य वधे पण्डितः रामाय ज्ञापनचतुर इत्यर्थः ॥१७४॥

**दावाग्न्यावृतगोपालदृष्ट्याच्छादनवह्निपः ।**
**वर्षाशरद्विभूतिश्रीगोपीकामप्रबोधकः ॥ १७५ ॥**

**दावाग्न्यावृतगोपालदृष्ट्याच्छादनवह्निप** इति । दावाग्निना आवृता वेष्टिता ये गोपालास्तेषां दृष्ट्याच्छादनेन चक्षुर्मीलनकरणेन वह्निं पीतवानित्यर्थः । **वर्षाशरद्विभूतिश्रीरिति** । वर्षा प्रावृट्कालः शरच्च तयोर्या विभूतिः तत्तत्कालीनसामग्रीसम्पत्तिस्तया श्रीः शोभा यस्मै यस्मिन्निति वा, तत्तद्विभूतिश्रीरूप इति वा । 'यद्यद्विभूतिमत्सत्व'मिति वाक्यात् । **गोपीकामप्रबोधक** इति । गोपीषु कामस्य स्मरस्य प्रकर्षेण बोधकः उदयकर्तेत्यर्थः । तदुक्तं 'तद्व्रजस्त्रिय आश्रुत्ये'त्यादिना ॥ १७५ ॥

**गोपीरत्नस्तुताशेषवेणुवाद्यविशारदः ।**
**कात्यायनीव्रतव्याजसर्वभावाश्रिताङ्गनः ॥ १७६ ॥**

**गोपीरत्नस्तुताशेषवेणुवाद्यविशारद** इति । गोप्य एव रत्नानि तैः स्तुतं अशेषं सर्ववेणुवाद्यं यथा स्यात्तथा विशारदो गोपीषु विविधशारदां करोति वेणुवाद्यवर्णनार्थं प्रकटयतीति तथा । यद्वा । गोपीरत्नैः स्तुतं यदशेषवेणुवाद्यं तस्य विशारदः यथा स्तुतं भवति तथा प्रकटनकर्तेत्यर्थः । **कात्यायनीव्रतव्याजसर्वभावाश्रिताङ्गन** इति । 'हेमन्ते प्रथमे मासि' इत्युक्तं यत्कात्यायनीव्रतं तद्व्याजेन तन्मिषेण सर्वभावैः सर्वात्मभावैराश्रिता अङ्गना कुमारिका यस्मिन्निति वा, ता आश्रिता येनेति वा ॥ १७६ ॥

**सत्सङ्गतिस्तुतिव्याजस्तुतवृन्दावनाङ्घ्रिपः ।**
**गोपक्षुच्छान्तिसंव्याजविप्रभार्याप्रसादकृत् ॥ १७७ ॥**

**सत्सङ्गतिस्तुतिव्याजस्तुतवृन्दावनाङ्घ्रिप** इति । सन्तो भक्ताः, सन् भगवान् वा येषां सङ्गतिः सङ्गस्तस्याः स्तुतिव्याजेन स्तुतिमिषेण स्तुता वृन्दावनस्था अङ्घ्रिपा वृक्षा येनेति । तथा च्यं भावः । सन्तस्तु परदुःखासहिष्णुत्वात् परोपकारिणः स्वदुःखं सोढ्वापि भरन्ति, अत्रापि तद्व्रजस्थभक्तसम्बन्धात् वृक्षा अपि परातपदूरीकरणायातपे स्वयं स्थिता

अपि अम्लाना एव । तदुक्तं 'पश्यैतान् महाभागान्'इत्यादौ । **गोपक्षुच्छान्तिसंव्याज-विप्रभार्याप्रसादकृदि**ति । गोपानां या क्षुत् क्षुधा तस्याः शान्तिः शमनोपायस्तद्रूपो यः समीचीनः अविसंवादी व्याजः व्यपदेशः यज्ञवाट गत्वा स्वनाम्ना प्रार्थनरूपः, तेनैव विप्रस्य यजमानस्य भार्यायै प्रसाद अनुग्रह कृतवानित्यर्थः । गोपक्षुच्छान्त्यर्थमिति वा, तदुक्तं 'राम राम महावीर्ये'त्यादिना ॥ १७७ ॥

**हेतुमासेन्द्रयागस्वकार्यगोसवबोधकः ।**
**शैलरूपकृताशेषरसभोगसुखावहः ॥ १७८ ॥**

**हेतुमासेन्द्रयागस्वकार्यगोसवबोधक** इति । निवर्गहेतवे प्राप्तः कर्तव्यत्वेन यदिन्द्रोद्देशेन यागस्तदर्थं यत् स्व सामग्री तयैव कार्यः कर्तव्यत्वेन विहितो यो गोसवः गवार्थं सूयते सम्पाद्यत इति । गवामित्युपलक्षण तेन ब्राह्मणगोवर्धनधेनूनामप्यर्थे प्राप्तस्तस्य बोधकः । 'कर्मणा जायते जन्तु'रित्याद्युक्तप्रकारेण नन्दादिषु ज्ञापक इत्यर्थः । यद्वा । पूर्वोक्तेन्द्रयागस्य स्थाने स्वसम्बन्धिकार्ये गोसवस्य बोधक इति । **शैलरूपकृताशेषरस-भोगसुखावह** इति । 'शैलोस्मी'ति कर्तृरूपेण कृतानां नन्दादिभिः सम्पादितानामशेषाणां षण्णामपि रसानां यो भोगः स्वकृतस्तेन सर्वेषां व्रजवासिनां सुखमावहतीति प्रापयतीति तथा । अन्यदा नु परोक्षमिन्द्रादिरूपेण भुङ्क्ते देवः । अस्मिन् पर्याये तु स्वय समक्षमिति सुखावहत्व युक्तमेव ॥ १७८ ॥

**लीलागोवर्धनोद्धारपालितस्वव्रजप्रियः ।**
**गोपस्वच्छन्दलीलार्थगर्गवाक्यार्थबोधकः ॥ १७९ ॥**

**लीलागोवर्धनोद्धारपालितस्वव्रजप्रिय** इति । लीलया सुखेनैव यो गोवर्धनस्य गवां वृद्धिकर्तुः पर्वतस्य उद्धार उद्धरण ऊर्ध्व छत्राकारेण धारण पालिता आसाराद्रक्षिताः स्वव्रजसम्बन्धिनः प्रिया येन, लीलागोवर्धनोद्धारेण पालितस्य प्रिय इति वा, स्व नन्दधन व्रजपदेन व्रजस्थाः प्राणिन उच्यन्ते, प्रिया व्रजसुन्दर्यः लीलागोवर्धनोद्धारेण पालिताः स्वव्रजप्रिया येनेति । तदुक्तं 'तस्मान्मच्छरण गोष्ठ'मित्यादिना । **गोपस्वच्छन्द-लीलार्थगर्गवाक्यार्थबोधक** इति । गोपालाना स्वच्छन्द भयाभावपूर्वकं स्वच्छन्द लीलाकरणार्थं पूर्व नन्द प्रत्युक्तगर्गवाक्यानां नन्दमुखात् पुनस्तेषामर्थस्य बोधको ज्ञापको गोपेष्विति । तदुक्तं 'श्रूयता मे वच' इत्यादौ ॥ १७९ ॥

**इन्द्रधेनुस्तुतिप्राप्तगोविन्देन्द्राभिधानवान् ।**
**व्रतादिधर्मसंसक्तनन्दक्लेशविनाशकः ॥ १८० ॥**

**इन्द्रधेनुस्तुतिप्राप्तगोविन्देन्द्राभिधानवा**निति । इन्द्रस्य धेनु कामधेनुस्तत्कृतस्तुत्या प्राप्त अर्थवशादायात यत् गोविन्देति इन्द्रकृतमभिधान नाम तद्विद्यते यस्येति तथा, इन्द्रधेनुभ्या स्तुतिरिति वा । शुद्धसत्त्वज्ञापनाय निर्विभक्तिकनामनिर्देशः गवामिन्द्रो

गोविन्द इति । तदुक्तं हरिवंशे 'अहं किलेन्द्रो देवानां त्वं गवामिन्द्रतां गतः । गोविन्द इति लोकास्त्वां स्तोष्यन्ति भुवि शाश्वत'मिति । प्रकारान्तरेणापि निरुक्तिरुच्यते । गां भुवं वाणीं वा विन्दतीति गोविन्दः, तदुक्तं महाभारते 'नष्टां वै धरणीं पूर्वमविन्दं वै गुहां गताम् । गोविन्द इति मां देवैस्तुतो वाग्भिरभिष्टुतः' । हरिवंशेपि 'गौरीशानु तथा वाणीं तां वै वेदयते भवान् । गोविन्दस्तु ततो देवमुनिभि'रिति । मूलेपि 'कृष्ण कृष्ण महायोगिन्नि'त्यादिनोक्तम् । व्रतादिधर्मसंसक्तनन्दक्लेशविनाशक इति । व्रतमेकादश्युपवासः तदादिधर्मेषु सम्यक् सक्तः आसक्तो यो नन्दः तस्य व्रतादिजनितक्लेशस्य विशेषेण नाशकः, साक्षाद्भगवति विद्यमाने अन्यत्र प्रवृत्तिः क्लेशमात्रफलैवेति ज्ञापितम् । तदुक्तं 'एकादश्यां निराहार' इत्यादिना ॥ १८० ॥

नन्दादिगोपमात्रेष्टवैकुण्ठगतिदायकः ।
वेणुवादस्वरक्षोभमत्तगोपीविमुक्तिदः ॥ १८१ ॥

नन्दादिगोपमात्रेष्टवैकुण्ठगतिदायक इति । नन्दमारभ्य गोपमात्राणां बालवृद्धसाधारणानां इष्टा तेषु वाञ्छिता या वैकुण्ठगतिर्गमनं तद्दायक इत्यर्थः । तदुक्तं 'ते त्वौत्सुक्यधिय' इत्यादिना । वेणुवादस्वरक्षोभमत्तगोपीविमुक्तिद इति । 'जगौ कलं वामदृशां'मित्युक्तो यो वेणोर्वादो वादनं वेणुनैव वादः आकारणं वा, तच्छ्रवणेन यः स्वरक्षोभः चित्तोन्मथनं तत्कृतं तेन मत्ताः काममद प्राप्ता याः अन्तर्गृहगता गोप्यः तासां विशेषतः संस्मृतिमात्रान्मुक्तिं दत्तवानित्यर्थः । तदुक्तं 'अन्तर्गृहगताः काश्चि'दित्यादिना ॥ १८१ ॥

सर्वभावप्राप्तगोपीसुखसंवर्धनक्षमः ।
गोपीगर्वप्रणाशार्थतिरोधानसुखप्रदः ॥ १८२ ॥

सर्वभावप्राप्तगोपीसुखसंवर्धनक्षम इति । 'सन्त्यज्य सर्वविषया'नित्याद्युक्तसर्वात्मभावेन प्राप्ताः समीपं गता या गोप्यः तासां सुखस्य रासोत्सवसौख्यस्य सम्यक् वृद्धिकरणे क्षमः समर्थ इति । तदुक्तं 'इति विक्लवित'मित्यादिना । गोपीगर्वप्रणाशार्थतिरोधानसुखप्रद इति । 'एवं भगवतः कृष्णा'दित्याद्युक्तो यो गोपीनां गर्वस्तस्य प्रतिबन्धकत्वात् तत्प्रणाशार्थं यत्तिरोधानं गोपीष्वन्तःस्थितिविशेषेण ताभ्यः सुखं प्रकर्षेण ददातीति तथा ॥

कृष्णभावव्याप्तविश्वगोपीभावितवेषधृक् ।
राधाविशेषसम्भोगप्राप्तदोषनिवारकः ॥ १८३ ॥

कृष्णभावव्याप्तविश्वगोपीभावितवेषधृक् इति । कृष्णस्यायं कृष्णभावः, तेन कृष्णभावेन व्याप्तं विश्वं यासां ताः कृष्णभावव्याप्तविश्वाः, ताश्च ता गोप्यश्च कृष्णभावव्याप्तविश्वगोप्यः, ताभिर्भावितोऽन्तःकरणे स्फुरितो यादृशलीलासम्बन्धी वेषः तं धारयति तासु प्रकटयतीति तथा । अन्तःस्थितः स्वयमेव तथा करोतीति भावः । अत एव 'पन्त्युरास्वरूप'मित्यादिवचनम् । राधाविशेषसम्भोगप्राप्तदोषनिवारक इति । 'यां गोपीम

नय'दित्याद्युक्तो यो राधाया अन्यापेक्षया विशेषसम्भोगस्तेन प्राप्तो जनितो यो दोषो गर्वस्तस्यापि पूर्ववदन्तर्धानेन निवारक अपमार्जक इत्यर्थ ॥ १८३ ॥

**परमप्रीतिसङ्गीतसर्वाद्भुतमहागुणः ।**
**मानापनोदनाक्रन्दगोपीदृष्टिमहोत्सवः ॥ १८४ ॥**

**परमप्रीतिसङ्गीतसर्वाद्भुतमहागुण** इति । परमप्रीत्या सम्यक् गीता सर्वे ये उत्कृष्टा अद्भुता अन्ये कर्तुमशक्या आश्चर्यजनका महागुणा 'विषजलाप्यया'दित्याद्युक्ता यस्येति । तदुक्त 'जयति तेऽधिक जन्मने'त्यादिना । **मानापनोदनाक्रन्दगोपीदृष्टिमहोत्सव** इति । मानस्यापनोद अपनयन तज्जनितो य आक्रन्द रोदन तद्युक्ता या गोपीना दृष्टय नयननलिनानि तेषा महानुत्सवो यस्मात् तद्रूपो वा । तदुक्त 'इति गोप्य प्रगायन्त्य' इत्यादिना ॥ १८४ ॥

**गोपिकान्यासससर्वाङ्गः स्त्रीसम्भाषाविशारदः ।**
**रासोत्सवमहासौख्यगोपीसम्भोगसागरः ॥ १८५ ॥**

**गोपिकान्याससर्वाङ्ग** इति । गोपिकासु न्यातानि विशेषेण समन्तात् न्यस्तानि सर्वाण्यङ्गानि येन, ताभिर्न्यस्तानि सर्वाण्यङ्गानि यस्येति वा, तदुक्त 'काचित् कराम्बुज शौरे'रित्यादिना । **स्त्रीसम्भाषाविशारद** इति । स्त्री प्रति सम्यक् भाषण सम्भाषा तत्प्रश्नप्रश्नोत्तरदान तत्र विशारदश्चतुर इत्यर्थ । 'मिथो भजन्ति ये सख्य' इत्यादि । **रासोत्सवमहासौख्यगोपीसम्भोगसागर** इति । 'रासोत्सव सम्प्रवृत्त' इत्याद्युक्तो यो रासोत्सवो रासक्रीडा तत्र यन्महासौख्य तस्य गोपीषु सम्भोग सम्यगनुभव स्वरूपानन्दानुभवस्तद्रूप सागर परिपूर्णाक्षयो रस इत्यर्थ , सम्भोगार्थ वा सागर इति ॥ १८५ ॥

**जलस्थलरतिव्यासगोपीदृष्ट्यभिपूजितः ।**
**शास्त्रानपेक्षकामैकमुक्तिद्वारविवर्धनः ॥ १८६ ॥**

**जलस्थलरतिव्यासगोपीदृष्ट्यभिपूजित** इति । जल च स्थल च जलस्थल तत्र या रति रमण तया व्याप्ता पूर्णा या गोप्य तासा दृष्टिभि नयनकमलै सप्रेमकटाक्षैर्वाऽभित सर्वत पूजित अलङ्कृत इत्यर्थ । तदुक्त 'सोऽम्भस्य'मित्यादिना । **शास्त्रानपेक्षकामैकमुक्तिद्वारविवर्धन** इति । शास्त्र मर्यादा, तदनपेक्ष तदतिगामी य काम इच्छा अलौकिक कामो वा, स एवैकश्चासौ मुक्तिद्वार च तच्छास्त्रानपेक्षकामैकमुक्तिद्वार तस्य विशेषेण वृद्धिकर्तेत्यर्थ । यद्वा, शास्त्रानपेक्षमीश्वर कामयन्ते स्नेहेनैवेति शास्त्रानपेक्षकामा केवलस्वरूपमात्रनिष्ठा भक्ता तेषामिदमेकमेव रासोत्सवकथनरूप यन्मुक्तिद्वारमुपाय तस्य विशेषेण वृद्धिकर्तेति । तदुक्त 'विक्रीडित व्रजवधूभि'रित्यादिना ॥ १८६ ॥

**सुदर्शनमहासर्पग्रस्तनन्दविमोचकः ।**
**गीतमोहितगोपीधृक्शङ्खचूडविनाशकः ॥ १८७ ॥**

**सुदर्शनमहासर्पग्रस्तनन्दविमोचक** इति । सुदर्शनो विद्याधरः स एव ऋषिशापान्महासर्पो जातः, सुदर्शनश्चासौ महासर्पश्च तेन सरस्वतीतीरे ग्रस्तनन्दस्य विशेषेण मोचकः । तदुक्तं 'कश्चिन्महानहि'रित्यादि । **गीतमोहितगोपीधृक्शंखचूडविनाशक** इति । भगवद्गीतेन मोहिता मूर्च्छिता या गोप्यः ताः धृष्णातीति तासां शक्तिग्रहणेन प्रतिनभाति तासु प्रगल्भते इति गीतमोहितगोपीधृक्, स चासौ शंखचूडश्चेति तस्य विशेषेण नाशको हिंसकः इत्यर्थः । तदुक्तं 'गोप्यस्त्वद्गीतमाकर्ण्ये'त्यादिना ॥ १८७ ॥

**गुणसङ्गीतसन्तुष्टिर्गोपीसंसारविस्मृतिः ।**
**अरिष्टमथनो दैत्यबुद्धिव्यामोहकारकः ॥ १८८ ॥**

**गुणसङ्गीतसन्तुष्टिरिति** । 'वामबाहुकृतवामकपोल' इत्यत्र गुणानां सम्यक् गीत भक्तकृतं, तेनैव तेषां दिवा सन्तुष्टिः सन्तोषो यस्मादन्तःस्थितादिति तथा । **गोपीसंसारविस्मृतिरिति** । मानासक्तानां गोपीनां संसारस्य प्रपञ्चस्य विस्मृतिर्यस्मादन्तःस्थितादिति तथा । यद्वा । भगवतो गोपीषु सम्यक् सरणं संसारोऽन्तःप्रवेशस्तेनैव विविधा स्मृतिः गुणगान मात्रस्थितानामपि दूरस्थभगवत्सामग्रीस्फूर्तिर्यस्मादिति । न ह्यदृष्टमननुभूतं कश्चिद्वर्णयितुं शक्नोति । **अरिष्टमथन** इति । अरिष्टनाम्नोऽसुरस्य मथनो हिंसकः । तदुक्तं 'अथ तर्ह्यागत' इत्यादिना । **दैत्यबुद्धिव्यामोहकारक** इति । दैत्यस्य कंसस्य नारदवचनाद्बुद्धेर्व्यामोहो वसुदेवापराधबुद्धिस्तत्कारक इत्यर्थः । 'कंसायाप्याह भगवा'नित्यादि ॥१८८॥

**केशीघाती नारदेष्टो व्योमासुरविनाशकः ।**
**अक्रूरभक्तिसंराद्धपादरेणुमहानिधिः ॥ १८९ ॥**

**केशीघातीति** । केशीनामानमसुरं हतवानित्यर्थः । तदुक्तं 'प्रतियाते तु देवर्षा'वित्यादौ । **नारदेष्ट** इति । नारदस्येष्टं कंसवधादिकं यस्मादिति, तस्येष्टदेवरूपो वा । 'देवर्षिरुपसङ्गम्ये'त्यादिना । **व्योमासुरविनाशक** इति । मयपुत्रस्य व्योमनाम्नोऽसुरस्य विनाशको मारकः इत्यर्थः । तदुक्तं 'मयपुत्रो महामाय' इत्यादि । **अक्रूरभक्तिसंराद्धपादरेणुमहानिधिरिति** । अक्रूरेण भक्त्या स्नेहेन संराध्यः सम्यक् आराध्यत्वेन ज्ञातः पादरेणुरूपमहानिधिरक्षयकोशो यस्येति । यद्वा । अक्रूरस्य संराद्धपादरेणुना अग्रे भाविमहानिधिलीला यस्मादिति । तदुक्तं 'गच्छन् पथि महाभाग' इत्यादिना ॥ १८९ ॥

**रथावरोहशुद्धात्मा गोपीमानसहारकः ।**
**ह्रदसन्दर्शिताशेषवैकुण्ठाक्रूरसंस्तुतः ॥ १९० ॥**

**रथावरोहशुद्धात्मेति** । रथस्यावरोहे आरोहणसमये शुद्धः अविकृतः आत्मा चित्तं यस्येति । गोपीनां तथावस्थां दृष्ट्वा स्वयं तथाभूतोऽपि धैर्यमवलम्ब्य रथमारुरुक्षदिति भावः । तदुक्तं, 'तास्तथा तप्यतीर्वीक्ष्ये'त्यादिना । **गोपीमानसहारक** इति । प्रस्थितो भगवान् गोपीनां चित्तेन सहैवेति भावः । तदुक्तं 'अनुप्रस्थितात्मान' इति । **ह्रदे-**

सन्दर्शिताशेषवैकुण्ठाक्रूरसंस्तुत इति । ह्रदे ब्रह्मह्रदे सन्दर्शितः सम्यक् सन्दर्शनं प्रापितोऽशेषवैकुण्ठः समस्तवैकुण्ठलोको येन यस्मै वा, आद्ये स चासावक्रूरसंस्तुतश्च, द्वितीये स चासावक्रूरश्च तेन सम्यक् स्तुतः । तदुक्तं 'निमज्य तस्मिन् सलिल' इति । यद्वा, अः स्वयं शेषो बलश्च, अशेषवैकुण्ठाः ह्रदे सन्दर्शिताः अशेषवैकुण्ठा येन. अशेषाभ्यां सहिता वैकुण्ठा इति वा । शेषं पूर्ववत् ॥ १९० ॥

**मथुरागमनोत्साहो मथुराभाग्यभाजनम् ।**
**मथुरानगरीशोभादर्शनोत्सुकमानसः ॥ १९१ ॥**

मथुरागमनोत्साह इति । मथुरायां गमने उत्साहः औत्सुक्यं यस्येति, यद्वा मथुरागमनसमये अक्रूरस्योत्साहो यस्मादिति । तदुक्तं 'इत्युक्त्वा नोदयामासे'त्यादिना । मथुराभाग्यभाजनमिति । मथुराया भाग्यस्य सम्पत्तेः भाजनं भजते स्वीकरोतीति, स्थानभूत इति वा । मथुरानगरीशोभादर्शनोत्सुकमानस इति । मथुरानगर्याः शोभादर्शने उत्सुकं मानसं मनो यस्येति, मथुरानगर्यां पुण्यवतां सुशोभादर्शनायेति वा । तदुक्तं 'अथापराह्न'इत्यादि ॥ १९१ ॥

**दुष्टरञ्जकघाती च वायकार्चितविग्रहः ।**
**वस्त्रमालासुशोभाङ्गः कुब्जालेपनभूषितः ॥ १९२ ॥**

दुष्टरञ्जकघाती चेति । दुष्टानेव रञ्जयति वस्त्रदानेन प्रीतियुक्तान् करोतीति, दुष्टं कंसं वा, स दुष्टरञ्जको रङ्गकारः, अत्र तस्य शिल्पित्वेपि शिल्पित्वस्याविवक्षितत्वात् 'ण्वुल् ण्वुन् असि उसी'त्यादिना ण्वुनादेशस्यैवाकस्य ग्रहणादत्र नलोपो नेति ज्ञेयम् । दुष्टरञ्जकं हन्तुं शीलमस्येति तथा । यद्वा । अत्र नामपरायणे छन्दसो नियतत्वाद्दुष्टरञ्जकघाती चेत्यपि ज्ञेयम् । तदुक्तं 'एवं विकत्थमानस्ये'त्यादिना । वायकार्चितविग्रह इति । वायकेन तन्तुवायकेनार्चितो यथायोग्यवस्त्रैरलङ्कृतो देहो यस्येति तथा । 'अञ्चित' इति पाठे अञ्चेः पूजार्थत्वादपि स एवार्थः, तदुक्तं 'ततस्तु वायकः प्रीत' इत्यादिना । वस्त्रमालासुशोभाङ्ग इति । वस्त्रोपरि स्थिता माला वस्त्रमालाः ताभिर्वस्त्रमालाभ्यां वा, सुत्कृष्टा शोभा सा अङ्गेषु यस्येति तथा, 'ततः सुदाम्नो भवन'मित्यादिना । कुब्जालेपनभूषित इति । कुब्जासम्बन्धि यदालेपनं सुगन्धद्रव्यं तेन भूषितोऽलङ्कृतः ॥ १९२ ॥

**कुब्जासुरूपकर्ता च कुब्जारतिवरप्रदः ।**
**प्रसादरूपसन्तुष्टहरकोदण्डखण्डनः ॥ १९३ ॥**

कुब्जासुरूपकर्ता चेति । त्रिस्थानेषु वक्रायाः कुब्जायाः शोभनरूपस्य कर्तेत्यर्थः । कुब्जारतिवरप्रद इति । कुब्जायै रतिः रमणं तद्रूपं वरं प्रददातीति तथा 'एष्यामि ते गृह'मित्यादिना । प्रसादरूपसन्तुष्टहरकोदण्डखण्डन इति । यागस्थानस्थितः प्रसादरूपः प्रसादं प्रसन्नतां रूपयति ज्ञापयतीति प्रसादरूपः, कंसं प्रति सन्तुष्टस्य हरस्य कोदण्डो

धनुः, प्रसादरूपश्चासौ हरकोदण्डश्च तस्य खण्डनः भञ्जक इत्यर्थः, तदुक्तं 'तस्मिन् प्रविष्टो ददृश' इत्यादिना ॥ १९३ ॥

**शकलाहतकंसास्त्रधनूरक्षकसैनिकः ।**
**जाग्रत्स्वप्नभयव्याप्तमृत्युलक्षणबोधकः ॥ १९४ ॥**

**शकलाहतकंसास्त्रधनूरक्षकसैनिक** इति । शकलेन धनुःखण्डेनासमन्तात् हताः कंसस्यास्त्रधनूरक्षकाः सैनिका येनेति तथा 'अथ तान् दुरभिप्रायान्' इत्यादिना । **जाग्रत्स्वप्नभयव्याप्तमृत्युलक्षणबोधक** इति । जाग्रति स्वप्ने च एवमवस्थात्रयेऽपि भयेन मृत्युभयेन व्याप्तस्य कंसस्य यानि मृत्युलक्षणानि मृत्युसूचकानि तेषां बोधकः प्रेरक इत्यर्थः । तैः कंसाय ज्ञापकः सर्वथा मरणमेवेति । तदुक्तं 'दीर्घप्रजागरो भीत'इत्यादिना ॥ १९४ ॥

**मथुरामल्ल ओजस्वी मल्लयुद्धविशारदः ।**
**सद्यः कुवलयापीडघाती चाणूरमर्दनः ॥ १९५ ॥**

**मथुरामल्ल** इति । मथुरायां मल्ल इव स्वच्छन्दत्वात् मथुरामल्लः । **ओजस्वीति** । ओज उत्साहः प्रयत्नविशेषो वा, तद्विद्यते यस्येति तथा । **मल्लयुद्धविशारद** इति । मल्लैः सह युद्धे निपुण इत्यर्थः । **सद्यः कुवलयापीडघातीति** । सद्यस्तात्कालं रङ्गभूमिदर्शनसमय एव कुवलयापीडनामानं हस्तिनं हतवानित्यर्थः । तदुक्तं 'रङ्गद्वारं समासाद्य'त्यादि । **चाणूरमर्दन** इति । चाणूरनाम्नो मल्लस्य मर्दनो निःशेषक इति । तदुक्तं 'आससादाय चाणूर'मित्यादौ ॥ १९५ ॥

**लीलाहतमहामल्लः शलतोशलघातकः ।**
**कंसान्तको जितामित्रो वसुदेवविमोचकः ॥ १९६ ॥**

**लीलाहतमहामल्ल** इति । लीलयानायासेनैव भाविलीलार्थं वा, हतो महामल्लो मुष्टिको येनेति । **शलतोशलघातक** इति । शलं तोशलं चोभौ हतवानित्यर्थः । तदुक्तं 'चाणूरे मुष्टिके कूटे' इत्यादिना । **कंसान्तक** इति । कंसस्यान्तको हिंसकः 'प्रगृह्य केशेष्वि'त्यादिना । **जितामित्र** इति । जिता अमित्राः शत्रवो येनेति । कंसे जिते सर्वेऽपि जिता इति भावः । **वसुदेवविमोचक** इति । वसुदेवस्य बन्धनात् विशेषेण मोचकः, देवक्या अपीति ज्ञेयम् । यद्वा । नामैकदेशे नामग्रहणमिति न्यायात् वसुर्वसुदेवः देवो देवकी तयोर्विमोचक इत्यर्थः, तदुक्तं 'मातरं पितरं चैवे'त्यादि ॥ १९६ ॥

**ज्ञाततत्त्वपितृज्ञानमोहनामृतवाङ्मयः ।**
**उग्रसेनप्रतिष्ठाता यादवाधिविनाशकः ॥ १९७ ॥**

**ज्ञाततत्त्वपितृज्ञानमोहनामृतवाङ्मय** इति । ज्ञातं तत्त्वं भगवत्स्वरूपं येनेति ज्ञाततत्त्वः, स चासौ पिता चेति ज्ञाततत्त्वपिता, तस्य ज्ञानस्य मोहनाय तिरोधानाया-

मृतरूपा पुत्रस्नेहप्रवर्धिका या वाक् नासतो युवयोस्तातेत्येवरूपा तद्रूप इत्यर्थ । वचनरूपेण मोहजनक इति भाव । उग्रसेनप्रतिष्ठातेति । उग्रसेनस्य मातामहस्य राज्यासने प्रतिष्ठा स्थितिं कारितवानित्यर्थ । अत्र भाविकण्यर्थं ष्ठाधातु । यद्वा, उग्रसेन प्रति अभिमुख मर्यादारक्षार्थं तिष्ठतीति, अस्मिन् पक्षे आसने स्थितिमेव दत्तवान् न तु राजकार्यमिति भाव । तदुक्त 'मातामह तूग्रसेन'मित्यादिना । यादवाधिविनाशक इति । यादवस्य यदुवंशोत्पन्नस्य सर्वस्यापि समृद्धिपूर्वक स्थापनेनाधेर्मनोव्यथाया विशेषेण नाशक । तदुक्त 'सर्वान् स्वज्ञातिसम्बन्धा'नित्यादि ॥ १९७ ॥

**नन्दादिसान्त्वनकरो ब्रह्मचर्यव्रते स्थितः ।**
**गुरुशुश्रूषणपरो विद्यापारमितेश्वरः ॥ १९८ ॥**

नन्दादिसान्त्वनकर इति । नन्द आदिर्येषा गोपाना तेषा सान्त्वनमाश्वासन वचनै करोतीति तथा, तदुक्त 'अथ नन्द समासाद्ये'त्यादौ । ब्रह्मचर्यव्रते स्थित इति । ब्रह्मचर्य गायत्रीनतपूर्वक विद्याधिगमपर्यन्त तन्नानुतिष्ठतीति । यद्वा । ब्रह्मचर्योक्त यद्व्रत तत्र स्थित आस्थित इत्यर्थ । तदुक्त 'ततश्च लब्धसस्कारा'वित्यादिना । गुरुशुश्रूषणपर इति । गुरो सान्दीपने शुश्रूषणे परिचरणे पर सावधान , तत्परमस्येति वा । तदुक्त 'यथोपसाद्ये'त्यादिना । विद्यापारमितेश्वर इति । विद्याना चतुर्दशानामपि पार समाप्तिं यन्ति गच्छन्ति विद्यापारमिता अलुक्समास , तेषामीश्वर श्रेष्ठ , विद्यापार मित येनेति वा विद्यामित , स चासावीश्वरश्चेति ॥ १९८ ॥

**सान्दीपनिमृतापत्यदाता कालान्तकादिजित् ।**
**गोकुलाश्वासनपरो यशोदानन्दपोषकः ॥ १९९ ॥**

सान्दीपनिमृतापत्यदातेति । सान्दीपनये गुरवे समुद्रे मृतस्यापत्यस्य दातेत्यर्थ । कालान्तकादिजिदिति । कालो मृत्यु , अन्तको यम , तदादीन् विमानन्यानपि नितवानित्यर्थ । 'तथेत्यथारुह्ये'त्यादिना । गोकुलाश्वासनपर इति । गोकुलस्य तद्वासिसर्वजनस्याश्वासने चित्तसमाधानकरणे पर उद्युक्त , तत्पर सर्वोत्तम यस्येति वा, तान् पिपर्तीति वा, तदुक्त 'गच्छोद्धव व्रज'मित्यादिना । यशोदानन्दपोषक इति । उद्धवद्वारा सन्देशेन तयो पोषक प्राणपोषक इति ॥ १९९ ॥

**गोपिकाविरहव्याजमनोगतिरतिप्रदः ।**
**समोद्धवभ्रमरवाक् गोपिकामोहनाशकः ॥ २०० ॥**

गोपिकाविरहव्याजमनोगतिरतिप्रद इति । गोपिकाना बाह्यविरहमिषेण मनसैव तासा मनसि वा, गतिर्व्रजे गमन तेनैव तासु रतिमान्तररमण प्रीतिं वा, प्रकर्षेण ददातीति तथा । समोद्धवभ्रमरवागिति । भगवता सम सदृशो य उद्धव 'त्व तु भागवतेष्वहम्' 'नोद्धवोण्वपि मन्न्यून' इत्यादिना साम्यस्योक्तत्वात् समोद्धव , तस्मिन् सति

नियमाने गोपी प्रति भ्रमरवागेव वाग्यस्येति । मध्यमपदलोपी समास• । • तदुक्त 'काचि न्मधुकर दृष्ट्वे'त्यादिना । **गोपिकामोहनाशक** इति । गोपिकाना मोहो विरहेण वैचित्त्य 'अहो यूय स्म पूर्णार्था' इत्यादिवचनैस्तस्य नाशक इति ॥ २०० ॥

**कुब्जारतिप्रदोऽक्रूरपवित्रीकृतभूगृहः ।**
**पृथादुःखप्रणेता च पाण्डवानां सुखप्रदः ॥ २०१ ॥**

**कुब्जारतिप्रद** इति । पूर्व प्रतिज्ञाता रति कुब्जायै प्रकर्षेण दत्तवानित्यर्थ । तदुक्त 'अथ विज्ञाय भगवा'नित्यादिना । **अक्रूरपवित्रीकृतभूगृह** इति । अक्रूरस्य गृहगमनेन पवित्रीकृता भू आवासस्थान गृह परिग्रहो येनेति तथा । यद्वा । ग्रह इति पाठे भू अध स्थितप्रदेशा , ग्रहा उपरिप्रदेशास्ते पवित्रीकृता येनेति। तदुक्त 'अक्रूरभवन कृष्ण' इति । **पृथादुःखप्रणेता** चेति । पृथाया कुन्त्या दु खस्य गरदानादिजनितस्य प्रणेता अक्रूर प्रतिवक्तेत्यर्थ । यद्वा । सन्देशेनैव पृथादु खस्य प्रकर्षेण नेता दूरीकर्तेत्यर्थ । तदुक्त 'भगवान् सुहृदा'मित्यादिना । **पाण्डवानां सुखप्रद** इति । सन्देशेनैव युधिष्ठिरादीना पाण्डुपुत्राणा सुख प्रकर्षेण दत्तवानित्यर्थ ॥ २०१ ॥

**॥ इति दशमस्कन्धपूर्वार्धनामानि ॥**

## ॥ अथ दशमस्कन्धोत्तरार्धनामानि ॥

**जरासन्धसमानीतसैन्यघाती विचारकः ।**
**यवनव्यासमथुराजनदत्तकुशस्थलिः ॥ २०२ ॥**

**जरासन्धसमानीतसैन्यघाती**ति । जरासन्धो मागधस्तेन सम्मुखे आनीत त्रयोविंशत्यक्षौहिणीपरिमित सप्तदशवार यत्सैन्य सेनाङ्गयुक्ता सेना तद्धन्तु शीलमस्येति । तदुक्त 'अस्ति प्राप्तिश्चे'त्यादि । **विचारक** इति । अष्टादशे पर्याये सर्वान् कुशस्थलीं नेतु रामेण सह विचारयतीति तथा, तदुक्त 'तद्दृष्ट्वाचिन्तय'दित्यादि। **यवनव्यासमथुराजनदत्तकुशस्थलि**रिति । त्रिकोटिसैन्ययुक्तेन यवनेन व्याप्तो वेष्टितो यो मथुराजनस्तस्मै स्थिरर्थ दत्ता कुशस्थली येनेति तथा ॥ २०२ ॥

**द्वारकाद्भुतनिर्माणविस्मापितसुरासुरः ।**
**मनुष्यमात्रभोगार्थभूम्यानीतेन्द्रवैभवः ॥ २०३ ॥**

**द्वारकाद्भुतनिर्माणविस्मापितसुरासुर** इति । द्वारकाया अद्भुतमाश्चर्यजनक यन्निर्माण रचन तेन विस्मापिता आश्चर्य प्रापिता सुराश्चासुराश्च येनेति तथा, तदुक्त 'इति सम्मन्त्र्य भगवा'नित्यादौ । **मनुष्यमात्रभोगार्थभूम्यानीतेन्द्रवैभव** इति । मनुष्यमात्रस्य भोगार्थं स्वर्गसुखानुभूत्यै भूम्या द्वारवत्यामानीतमिन्द्रस्य वैभव पारिजातादिक येनेति तथा ॥ २०३ ॥

**यवनव्यासमथुरानिर्गमानन्दविग्रहः ।**
**मुचुकुन्दमहाबोधयवनप्राणदर्पहा ॥ २०४ ॥**

**यवनव्यासमथुरानिर्गमानन्दविग्रह** इति । यवनव्यासमथुरातो निर्गमे गमनसमये आयुधादिराहित्येनानन्द शुद्धसच्चिदानन्दरूपो विग्रहो यस्येति तथा । तदुक्त 'निर्जगाम पुरद्वारा'दित्यादिना । **मुचुकुन्दमहाबोधयवनप्राणदर्पहे**ति । मान्धातृपुत्रस्य मुचुकुन्दस्य यो महाबोधो बहुकाले गते निद्रात उत्थान तेनैव यवनस्य प्राणान् अन्येषा तत्पक्षीयाणा जरासन्धादीना दर्प गर्व तदुभय हतवानिति । तदुक्त 'स उत्थाय चिर सुप्त' इत्यादिना ॥ २०४ ॥

**मुचुकुन्दस्तुताशेषगुणकर्ममहोदयः ।**
**फलप्रदानसन्तुष्टिर्जन्मान्तरितमोक्षदः ॥ २०५ ॥**

**मुचुकुन्दस्तुताशेषगुणकर्ममहोदय** इति । मुचुकुन्देन स्तुत अशेषगुणकर्मणा महोदय आधिक्य यस्येति। तदुक्त 'विमोहितोऽय जन' इत्यादि । **फलप्रदानसन्तुष्टि**रिति । भक्तिरूपफलप्रदानेन मुचुकुन्दस्य समीचीना तुष्टिर्यस्मादिति । तदुक्त 'अस्त्येव नित्यदा तुभ्य'मित्यादिना । **जन्मान्तरितमोक्षद** इति । मध्ये ब्राह्मणजन्मना अन्तरित अन्तराय प्रापितो मोक्षस्त दत्तवानित्यर्थ । 'जन्मान्तर'इत्यादिना ॥ २०५ ॥

**शिवब्राह्मणवाक्यासजयभीतिविभावनः ।**
**प्रवर्षणप्रार्थिताग्निदानपुण्यमहोत्सवः ॥ २०६ ॥**

**शिवब्राह्मणवाक्याप्तजयभीतिविभावन** इति । शिवो रुद्रश्च ब्राह्मणाश्च तेषा वाक्यात् 'गच्छ त्व जयमाप्नुहि' इत्येवरूपात् आप्तो योद्धुमागतो यो जरासन्धस्तस्य जये देवब्राह्मणवाक्यान्यथाकरणेन स्वस्मिन् भीतिं विभावयति कल्पयतीति तथा । तदुक्त 'मनुष्यचेष्टामापन्ना'वित्यादि । **प्रवर्षणप्रार्थिताग्निदानपुण्यमहोत्सव** इति । प्रवर्षणपर्वतपर्यन्त यदग्निदान तेन जरासन्धस्य मिथ्यापुण्यमहोत्सवो यस्मादिति तथा 'सोपि दग्धाविति मृषे'त्यादिना ॥ २०६ ॥

**रुक्मिणीरमणः कामपिता प्रद्युम्नभावनः ।**
**स्यमन्तकमणिव्याजप्राप्तजाम्बवतीपतिः ॥ २०७ ॥**

**रुक्मिणीरमण** इति । रोचते इति रुक्म, तद्वर्णो विद्यते यस्या सा रुक्मिणी तस्या रमण , ता रमयतीति वा, तस्या लक्ष्मीरूपाया रमत इति वा । तदुक्त 'राजासीद्भीष्मक' इत्यादि । **कामपिते**ति । हरदृष्टिदहनदग्धस्य कामस्य कन्दर्पस्य पिता जनक इत्यर्थः। 'कामस्तु वासुदेवाश' इत्यादिना । **प्रद्युम्नभावन** इति । प्रद्युम्नाख्य ज्येष्ठ पुत्र भावयति उत्पादयतीति । **स्यमन्तकमणिव्याजप्राप्तजाम्यवतीपति**रिति । स्यमन्तकाख्यस्य मणे-

रानयनव्याजेन प्राप्ता या जाम्बवती ऋक्षराजजाम्बुवत पुत्री तस्या• पति भर्ता । तदुक्त 'मणिहेतोरिह प्राप्त'इत्यादिना ॥ २०७ ॥

**सत्यभामाप्राणपतिः कालिन्दीरतिवर्धनः ।**
**मित्रविन्दापतिः सत्यापतिर्वृषनिषूदनः ॥ २०८ ॥**

**सत्यभामाप्राणपतिरिति** । सत्य स्वकार्यकरणक्षमो यथार्थो भाम क्रोधो यस्या सा सत्यभामा, तस्या प्राणाना पति प्राणाना नाथ इत्यर्थ । प्राणतुल्य पतिर्वा । **कालिन्दीरतिवर्धन** इति । कालिन्द्या सूर्यदुहितु रतिं प्रीतिं वर्धयतीति, तस्या वर्ध यतीति वा, तदुक्त 'तत्रोपस्पृश्य विशद'मित्यादिना । **मित्रविन्दापतिरिति** । मित्रविन्दाया पति भर्तेत्यर्थ । तदुक्त 'विन्दानुविन्दा'वित्यादिना । **सत्यापतिरिति** । सत्याया नाग्नजित्या पति । **वृषनिषूदन** इति । पणीकृताना सप्ताना वृषाणा नितरा सूदनो नि सत्त्वकरण इत्यर्थ । तदुक्त 'एव समयमाकर्ण्ये'त्यादिना ॥ २०८ ॥

**भद्रावाञ्छितभर्ता च लक्ष्मणावरणक्षमः ।**
**इन्द्रादिप्रार्थितवधनरकासुरसूदनः ॥ २०९ ॥**

**भद्रावाञ्छितभर्ता** इति। भद्राया श्रुतकीर्तेः पुत्र्या वाञ्छितोभिलषितो भर्तेत्यर्थ । तदुक्त 'श्रुतकीर्ते'रित्यादिना । **लक्ष्मणावरणक्षम** इति । मद्राधिपते कन्याया लक्ष्मणाया वरणे स्वयवरे क्षम समर्थ । **इन्द्रादिप्रार्थितवधनरकासुरसूदन** इति । इन्द्रादिभि प्रार्थितो याचितो वधो यस्य, स चासौ नरकासुरश्च तस्य सूदनो हिंसक इत्यर्थ । तदुक्त 'इन्द्रेण हृतछत्रेणे'त्यादिना ॥ २०९ ॥

**मुरारिः पीठहन्ता च ताम्रादिप्राणहारकः ।**
**षोडशस्त्रीसहस्रेशः छत्रकुण्डलदानकृत् ॥ २१० ॥**

**मुरारिरिति** । मुरस्यारि शत्रु , तदुक्त 'तामापतन्ती'मित्यादिना । **पीठहन्ता** चेति । पीठाख्यभौमचमूपते हन्ता घातक इत्यर्थ । **ताम्रादिप्राणहारक** इति । ताम्राख्य आदिर्येषामन्तरीक्षप्रभृतीना मुरपुत्राणा तेषा प्राणाना हारको हर्तेत्यर्थ । तदुक्त 'तस्या- त्मजा सप्त'इत्यादिना । **षोडशस्त्रीसहस्रेश** इति । स्त्रीणा सहस्राणि तेषा समाहार स्त्रीसहस्र षोडश च तत्स्त्रीसहस्र च तस्येशो भर्तेत्यर्थ । 'स तत्र राजकन्याना'मित्यादिना । **छत्रकुण्डलदानकृदिति** । इन्द्राय छत्र अदित्यै कुण्डले उभाभ्यामुभयोर्दानकर्तेत्यर्थ । तदुक्त 'गत्वा सुरेन्द्रभवन'मित्यादिना ॥ २१० ॥

**पारिजातापहरणो देवेन्द्रमदनाशकः ।**
**रुक्मिणीसमसर्वस्त्रीसाध्यभोगरतिप्रदः ॥ २११ ॥**

**पारिजातापहरण** इति । सुरतरो पारिजातस्यापहरण बलादाकृष्य हर्तेत्यर्थ• ।

**देवेन्द्रमदनाशक** इति । देवानामिन्द्रस्येश्वरस्य रणे पराजयकरणेन मदस्यैश्वर्यगर्वस्य नाशकः । तदुक्तं 'चोदितो भार्यये'त्यादि । **रुक्मिणीसमसर्वस्त्रीसाध्यभोगरतिप्रद** इति । रुक्मिण्याः समास्तुल्याः लक्ष्म्यंशत्वाद्याः सर्वा अपि स्त्रियः ताभिः साध्यो यो भोगः तदर्थं तासु रतिं प्रीतिं प्रकर्षेण ददातीति तथा । तदुक्तं 'गृहेषु तासा'मित्यादिना ॥ २११ ॥

रुक्मिणीपरिहासोक्तिवाक्तिरोधानकारकः ।
पुत्रपौत्रमहाभाग्यगृहधर्मप्रवर्तकः ॥ २१२ ॥

**रुक्मिणीपरिहासोक्तियाक्तिरोधानकारक** इति । रुक्मिणीं प्रति परिहासोक्तिभिः नर्मवचनैः रुक्मिण्या वाचः स्तम्भनं करोतीति तथा । यद्वा । रुक्मिणीपरिहासोक्तिरूपया वाचा स्वतिरोधानमिव तासां मनस्यकरोदिति । तदुक्तं 'राजपुत्रीप्सिते'त्यादिना । **पुत्रपौत्रमहाभाग्यगृहधर्मप्रवर्त्तक** इति । पुत्राश्च पौत्राश्च तत्सम्बन्धि यन्महाभाग्यं तद्युक्तो यो गृहधर्मो गार्हस्थ्यधर्मस्तस्य प्रकर्षेण दर्शको ज्ञापकोऽन्येभ्य इत्यर्थः । तदुक्तं 'एकैकशस्ताः कृष्णस्ये'त्यादिना ॥ २१२ ॥

शम्बरान्तकसत्पुत्रविवाहहतरुक्मिकः ।
उषापहृतपौत्रश्रीर्बाणबाहुनिवारकः ॥ २१३ ॥

**शम्बरान्तकसत्पुत्रविवाहहतरुक्मिक** इति । शम्बरदैत्यस्यान्तकः प्रद्युम्नः तस्य यः सत्पुत्रः संश्चासौ पुत्रश्चेत्यनिरुद्धः, तस्य विवाहे घातितो बलेन रुक्मी श्यालो येनेति । तदुक्तं 'तस्मिन्नभ्युदये राज'न्नित्यादि । **उषापहृतपौत्रश्रीरि**ति । उषा बाणपुत्री तदर्थं चित्रलेखया अपहृतो गृहान्नीतो यः पौत्रोऽनिरुद्धस्तस्य श्रीः सम्पद्यस्मादिति तथा । यतो भगवद्गमन एव भार्यामन्यामपि सम्पदं लब्धवानिरुद्ध इति । तदुक्तं 'तस्योषा नाम दुहिते'त्यादिना । **बाणबाहुनिवारक** इति । शिववाक्यं सत्यं विधातुं बाणस्य चतुर्भ्यूनान् बाहून् निवारयति छिनत्तीति तथा । तदुक्तं 'बाहुषु छिद्यमाने'ष्वित्यादिना ॥२१३॥

शीतज्वरभयव्यासज्वरसंस्तुतषड्गुणः ।
शङ्करप्रतियोद्धा च द्वन्द्वयुद्धविशारदः ॥ २१४ ॥

**शीतज्वरभयव्यासज्वरसंस्तुतषड्गुण** इति । शीतज्वरो वैष्णवस्तत्कृतभयेन व्यासो यो ज्वरो रौद्रस्तेन सम्यक् स्तुताः षडैश्वर्यगुणा यस्य तथा । तदुक्तं 'माहेश्वरः समाक्रन्द'दित्यादिना । **शङ्करप्रतियोद्धा** चेति । शङ्करस्य प्रतिपक्षेण युद्ध्यतीति तथा । शङ्करं प्रतियोधको वा । **द्वन्द्वयुद्धविशारद** इति । द्वन्द्वं युग्मीभूय युद्धं तस्य विशारदो विस्तारकस्तत्र निपुणो वा, तदुक्तं 'प्रत्यस्त्रैः शमयामासे'त्यादिना ॥ २१४ ॥

नृगपापप्रभेत्ता च ब्रह्मस्वगुणदोषदृक् ।
विष्णुभक्तिविरोधैकब्रह्मस्वविनिवारकः ॥ २१५ ॥

**नृगपापप्रभेत्ता** चेति । ब्रह्मस्ववशात् कृकलासत्वं प्राप्तस्य नृगाख्यस्येक्ष्वाकुतनयस्य

पाप प्रकर्षेण भिनत्ति दूरीकरोतीति तथा, तदुक्त 'तत्रागते'त्यादिना । **ब्रह्मस्वगुणदोपदृगिति** । ब्रह्मपद न ब्राह्मणजातिमात्र गृह्यते, ब्रह्मणो यत्स्व वित्त तेन तस्मिन् वा, यौ गुणदोषो तो स्वय पश्यति तत्तदनुरूपफलदानार्थमन्यान् दर्शयतीति वा । ब्रह्मणि स्व दानेन यज्जात स्वदर्शनरूप फल नृगस्य अज्ञानादत्यादानेन यज्जात कृकलासत्व तदुभयमपि ब्रह्मस्वकृतमिति स्वकीयान् दर्शयतीति भाव । **विष्णुभक्तिविरोधैकब्रह्मस्वविनिवारक** इति । विष्णुभक्तौ विरोधाय प्रतिबन्धाय यदेकमसाधारण कारण ब्रह्मस्वमपहृत तस्य विशेषेण तस्माद्वा निवारको दूरीकर्तेत्यर्थ ॥ २१५ ॥

**बलभद्राहितगुणो गोकुलप्रीतिदायकः ।**
**गोपीस्नेहैकनिलयो गोपीप्राणस्थितिप्रदः ॥ २१६ ॥**

**बलभद्राहितगुण** इति । बलभद्रे आहिता समतया च स्थापिता गुणा शोकापनुदनादयो येनेति तथा । **गोकुलप्रीतिदायक** इति । गोकुले गोकुलवासिजने प्रीतिं हर्ष यल्द्वारा दत्तवानित्यर्थ । तदुक्त 'बलभद्र' कुरुश्रेष्ठे'त्यादिना । **गोपीस्नेहैकनिलय** इति । गोपीना स्नेहस्य एकोऽनन्यनिलय स्थानभूत इत्यर्थ । भगवदतिरिक्ते सर्वथा स्नेहाभाव इति भाव । तदुक्त 'गोप्यो हसन्त्य पप्रच्छु रित्यादिना । **गोपीप्राणस्थितिप्रद** इति । गोपीना प्राणाना स्थितिं सन्देशेन प्रददातीति तथा, गोपीना प्राणेषु स्वस्थितिं गोपीना स्थितिं स्वप्राणेष्विति, तदुक्त 'सङ्कर्षणस्ता कृष्णस्ये'त्यादिना ॥ २१६ ॥

**वाक्यातिगामियमुनाहलाकर्षणवैभवः ।**
**पौण्ड्रकत्याजितस्पर्धः काशीराजविभेदनः ॥ २१७ ॥**

**वाक्यातिगामियमुनाहलाकर्षणवैभव** इति । बलभद्रवाक्यमतिक्रम्य गच्छतीति वाक्यातिगामिनी, सा चासौ यमुना च तस्या हलेनाकर्षणे वैभव सामर्थ्य यस्येति तथा । अत्र सामर्थ्य भगवदीयमेवेति । तदुक्त 'स आजुहाव यमुना'मित्यादिना । **पौण्ड्रकत्याजितस्पर्ध** इति । पौण्ड्रकात् करुषाधिपते त्याजिता मोचिता स्पर्धा येनेति तथा । तदुक्त 'अथाह पौण्ड्रक'मित्यादिना । **काशीराजविभेदन** इति । पौण्ड्रकमित्रस्य काशीराजस्य विभेदनो मारक इत्यर्थ । तदुक्त 'तथा काशीपते काया'दित्यादिना ॥२१७॥

**काशीनिदाहकरणः शिवभस्मप्रदायकः ।**
**द्विविदप्राणघाती च कौरवाखर्वगर्वनुत् ॥ २१८ ॥**

**काशीनिदाहकरण** इति । चक्राज्ञापनेन काश्या नितरा दाहकरणो दाहक इत्यर्थ । 'विज्ञाय तद्वितार्थ मित्यादिना । **शिवभस्मप्रदायक** इति । शिवस्याङ्गभूषणार्थं काशीदाहेन भस्म यथेष्ट प्रददातीति तथा । **द्विविदप्राणघाती चे**ति । भौमसखस्य द्विविदस्य प्राणान् बलद्वारा घातितु शीलमस्येति तथा । तदुक्त 'यादवेन्द्रोपि त दोर्भ्या'मि

त्यादिना । कौरवाखर्वगर्वनुदिति । कौरवादीनां दुर्योधनादीनां अखर्वोऽनल्पो यो गर्वः श्रीमदस्तं नुदति नाशयतीति तथा । तदुक्तं 'दृष्ट्वा कुरूणां दौःशील्य'मित्यादिना ॥२१८॥

**लाङ्गलाकृष्टनगरीसंविग्नाखिलनागरः ।**

**प्रपन्नाभयदः साम्यप्राप्तसन्मानभाजनम् ॥ २१९ ॥**

**लाङ्गलाकृष्टनगरीसंविग्नाखिलनागर** इति । लाङ्गलेन हलेन गङ्गां प्रत्याकृष्टा या नगरी हस्तिनापुरं तस्यां संविग्ना अत्यन्तं विह्वलीकृताः नागरा नगरस्था येनेति तथा । तदुक्तं 'लाङ्गलाग्रेण नगर'मित्यादिना । **प्रपन्नाभयद** इति । प्रपन्नेभ्यः स्वशरणमागतेभ्यो नागरेभ्योऽभयं मृत्युभयाभाव ददातीति तथा । तदुक्तं 'एवं प्रपन्नैः संविग्नै'रित्यादिना । **साम्यप्राप्तसन्मानभाजनमिति** । साम्यायं प्राप्तो गतः साम्यप्राप्तः, सन्मानं सत्कारं भजते साम्यं भाजयति वा सन्मानभाजनं, साम्यप्राप्तश्चासौ सन्मानभाजनं चेति, तत्पुरुषत्वात् परपदवल्लिङ्गत्वम् । तदुक्तं 'दुर्योधनः पारिबर्ह'मित्यादिना ॥ २१९ ॥

**नारदान्विष्टचरणो भक्तविक्षेपनाशकः ।**

**सदाचारैकनिलयः सुधर्माध्यासितासनः ॥ २२० ॥**

**नारदान्विष्टचरण** इति । नारदेनान्विष्टौ प्रतिगृहं युगपत्कार्यं कर्तुं द्रष्टुं वाञ्छितौ चरणौ यस्येति, तदुक्तं 'नरकं निहतं श्रुत्वे'त्यादिना । **भक्तविक्षेपनाशक** इति । भक्तस्य नारदस्य भगवत्सामर्थ्याकलनासमर्थस्य विक्षेप चित्तविक्षेपं नाशयतीति तथा, तदुक्तं 'ब्रह्मन् धर्मस्य वक्ताह'मित्यादिना । **सदाचारैकनिलय** इति । सतां शिष्टानां य आचारस्तस्य एक एव निलयो मूलभूतस्थानमित्यर्थः । तदुक्तं 'ब्राह्मे मुहूर्ते उत्थाये'त्यादिना । **सुधर्माध्यासितासन** इति । सुधर्माख्यायां द्वारकास्थसभायामध्यासितमधिष्ठितमासनं सिंहासनं यस्येति तथा, तदुक्तं 'सुधर्माख्यां सभा'मित्यादिना ॥ २२० ॥

**जरासन्धावरुद्धेन विज्ञापितनिजक्रमः ।**

**मन्त्र्युद्धवादिवाक्योक्तप्रकारैकपरायणः ॥ २२१ ॥**

**जरासन्धावरुद्धेन विज्ञापितनिजक्रम** इति । जरासन्धेन दिग्विजये कृतं यद्राज्ञामवरुद्धमवरोधनं स्वगृहे निरुध्य स्थापनमिति यावत्, तेन कारणेन विशेषेण ज्ञापितो राजभिः निजः स्वकीयः क्रमोऽवरोधजनितग्लानिर्यस्य यस्मै वा स तथा । यद्वा । जात्यभिप्रायेण जरासन्धावरुद्धेन राज्ञेत्यपि । तदुक्तं 'तत्रैकः पुरुषो राज'न्नित्यादिना । **मन्त्र्युद्धवादिवाक्योक्तप्रकारैकपरायण** इति । 'वृष्णीनां प्रवरो मन्त्री'ति वाक्यान्मन्त्रिणो यदुद्धवादयस्तेषां वाक्येपूक्तो यः प्रकारः मनुबृहस्पत्यादिमतानुसारी तदेकपरायणः स एव एकं परमुत्कृष्टमयनमाश्रयणीयं कर्तव्यं यस्येति तथा । तदुक्तं 'यदुक्तमृषिणे'त्यादिना ॥

**राजसूयादिमखकृत् सम्प्रार्थितसहायकृत् ।**

**इन्द्रप्रस्थप्रयाणार्थमहत्सम्भारसम्भृतिः ॥ २२२ ॥**

राजसूयादिमखकृदिति । युधिष्ठिरेण क्रियमाणमपि राजसूयादिकं स्वयमेव सम्पादयतीति, राजसूयादिमखं यज्ञं करोतीति तथा, तदुक्तं 'श्रुत्वा जितं जरासन्ध'मित्यादिना । सम्प्रार्थितसहायकृदिति । भक्तैर्यया सम्प्रार्थितं सम्यग्याचितं तथैव सहायं करोतीति । इन्द्रप्रस्थप्रयाणार्थमहत्सम्भारसम्भृतिरिति । इन्द्रप्रस्थं युधिष्ठिरराजधानीं प्रति प्रयाणाय यो महत्सम्भारो महद्भिर्नेतुमुचितं सम्भारोऽन्नादिसामग्री तस्य समीचीनं भृतिर्भरणं सञ्चयो यस्येति । तदुक्तं 'नरोष्ट्रगोमहिषे'त्यादिना ॥ २२२ ॥

जरासन्धवधव्याजमोचिताशेषभूमिपः ।
सन्मार्गबोधको यज्ञक्षितिवारणतत्परः ॥ २२३ ॥

जरासन्धवधव्याजमोचिताशेषभूमिप इति । जरासन्धस्य वधमिषेणावरोधात् मोचिता अशेषाः सकला भूमिपा राजानो येनेति तथा । तदुक्तं 'अयुते द्वे शतान्यष्टा'वित्यादिना । सन्मार्गबोधक इति । मोचितराजेभ्यः सन्मार्गं भक्तिमार्गं बोधयतीति तथा, तदुक्तं 'अद्यप्रभृति वो भूपा'इत्यादि । यज्ञक्षितिवारणतत्पर इति । यज्ञक्षितौ देवयजने वारणे ऋत्विजां वरणकरणे तत्परः सावधान इत्यर्थः । यद्वा । यज्ञस्य क्षितिः क्षयः द्रव्याल्पत्वेन साधनादिवैगुण्येन यो विनाशस्तस्य द्रव्यपूरणेन तन्निवारणे तत्पर इति । तदुक्तं 'इत्युक्त्वा यज्ञिये काले' इत्यादिना ॥ २२३ ॥

शिशुपालहतिव्याजजयशापविमोचकः ।
दुर्योधनाभिमानाब्धिशोषबाणवृकोदरः ॥ २२४ ॥

शिशुपालहतिव्याजजयशापविमोचक इति । शिशुपालस्य हतिर्वधस्तद्व्याजेन जयनाम्नो दौवारिकस्य शापात् विशेषेण मोचको मुक्तिदातेत्यर्थः । लोके प्रसिद्धिर्दुर्वचननिमित्तकं मरणं, परमार्थस्तु भक्तमुक्त्यर्थमेवेति भावः । तदुक्तं 'चैद्यदेहोत्थितं ज्योति'रित्यादिना । दुर्योधनाभिमानाब्धिशोषबाणवृकोदर इति । दुर्योधनस्याभिमानरूपो योऽब्धिः समुद्रः, दुर्योधन एवाभिमानाब्धिर्वा, तस्य शोषणं शोषः शुष्ककरणं तदर्थं बाणरूपो वृकोदरो भीमो यस्येति तथा, भगवद्बाणस्य सागरशोषकत्वं रामायणे प्रसिद्धम् । तदुक्तं 'तत्र दुर्योधनो मानी'त्यादिना ॥ २२४ ॥

महादेववरप्राप्तपुरशाल्वविनाशकः ।
दन्तवक्त्रवधव्याजविजयाघौघनाशकः ॥ २२५ ॥

महादेववरप्राप्तपुरशाल्वविनाशक इति । महादेववरेण प्राप्तं पुरं विमानं येन स चासौ शाल्वश्च, महादेववरप्राप्तं पुरं शाल्वश्चेति वा, तस्य तयोर्वा विनाशक इत्यर्थः । तदुक्तं 'तं शम्भुं'रित्यादिना । दन्तवक्त्रवधव्याजविजयाघौघनाशक इति । दन्तवक्त्रस्य वधव्याजेन विजयनाम्नो दौवारिकस्य अघानां पापानां य ओघः प्रवाहस्तस्य नाशकः शोषक इत्यर्थः । तदुक्तं 'तत सूक्ष्मतरं ज्योति'रित्यादिना ॥ २२५ ॥

**विदूरथप्राणहर्ता न्यस्तशस्त्रास्त्रविग्रहः ।**
**उपधर्मविलिप्ताङ्गसूतघाती वरप्रदः ॥ २२६ ॥**

**विदूरथप्राणहर्तेति** । तस्यैव भ्रातुर्विदूरथस्य प्राणानां हारक इत्यर्थः । तदुक्तं 'विदूरथस्तु तद्भ्राते'त्यादिना । **न्यस्तशस्त्रास्त्रविग्रह** इति । न्यस्तानि स्थापितानि स्वस्वस्थाने त्यक्तानि वा शस्त्राण्यस्त्राणि येन तादृशो विग्रहो देहो यस्येति तथा । यद्वा । न्यस्तः त्यक्तः शस्त्रास्त्रैः विग्रहो युद्धं येनेति । अत ऊर्ध्वं भगवता सह कस्यापि युद्धस्याकथनादिति तथोक्तः । **उपधर्मविलिप्ताङ्गसूतघातीति** । स्वधर्मातिरिक्तो धर्मः उपधर्मो गौण इति यावत् । ब्रह्मासनरूपेणोपधर्मेण विलिप्तं तज्जनितमहदतिक्रमायत्तं पापं तेन व्याप्तमङ्गं यस्य, स चासौ सूतश्च, तं घातितुं शीलमस्येति तथा । तदुक्तं 'अप्रत्युत्थायिनं सूत'मित्यादिना । **वरप्रद** इति । सूतस्यायुरादीनां तत्पुत्रे स्थापनेन ऋषीणां सत्रसमापनं भवत्विति वरं दत्तवानित्यर्थः । तदुक्तं 'दीर्घमायुर्भवेतस्ये'त्यादिना ॥ २२६ ॥

**बल्वलप्राणहरणपालितर्षिश्रुतिक्रियः ।**
**सर्वतीर्थाघनाशार्थतीर्थयात्राविशारदः ॥ २२७ ॥**

**बल्वलप्राणहरणपालितर्षिश्रुतिक्रिय** इति । इल्वलपुत्रस्य बल्वलस्य प्राणानां हरणेन पालिता रक्षिता ऋषीणां श्रुत्युक्ता क्रिया येनेति तथा, बल्वलप्राणहरणश्चासौ पालितर्षिश्रुतिक्रियश्चेति वा, तदुक्तं 'ततः पर्वण्युपावृत्त' इत्यादि । **सर्वतीर्थाघनाशार्थतीर्थयात्राविशारद** इति । सर्वप्राणिनां पापप्रक्षालनपात्रायितत्वेनाविलत्वात् तीर्थसामर्थ्यं कुण्ठितमिति, सर्वेषां तीर्थानामघस्य पापस्य नाशार्थं या तीर्थयात्रा तीर्थाटनं तत्र विशारदश्चतुर इत्यर्थः, समर्थ इति वा । तदुक्तं 'अथ तैरभ्यनुज्ञात' इति ॥ २२७ ॥

**ज्ञानक्रियाविभेदेष्टफलसाधनतत्परः ।**
**सारथ्यादिक्रियाकर्ता भक्तवश्यत्वबोधकः ॥ २२८ ॥**

**ज्ञानक्रियाविभेदेष्टफलसाधनतत्पर** इति । ज्ञानं च क्रिया च ज्ञानक्रिये, क्रियापदेन कर्मोच्यते, ताभ्यां यो विभेदो मार्गविभेदस्तेन इष्टं प्राप्यं यत्फलं तत्तन्मार्गीयाणां तस्य साधने प्रापणे तत्पर इत्यर्थः । अत्रायं भावः । ज्ञानस्य सकलशुभाशुभकर्मनाशकत्वेन प्रसिद्धेर्ज्ञानं विहाय कर्मणि तीर्थाटनरूपे प्रवृत्तो बलदेव ऋषीणां कर्मनिष्ठानां ज्ञानानधिकारिणां कर्मण्येवातिशयत्वज्ञापनार्थं स्वयमपि तथा कृतवानिति । पाण्डवपक्षपातज्ञापनाय वृकोदरदुर्योधनयुद्धप्रसङ्गेन नामद्वयमाहुः **सारथ्यादिक्रियाकर्तेति** । अर्जुनस्येति शेषः । तदुक्तं 'गदापाणी उभौ दृष्ट्वे'त्यादिना । **भक्तवश्यत्वबोधक** इति । बलभद्राय स्वस्मिन् भक्तवश्यत्वं बोधितवानित्यर्थः । यतो बलाभिप्रायं विदित्वापि दुर्योधनं घातितवानेवेति ॥

**सुदामरङ्कभार्यार्थभूम्यानीतेन्द्रवैभवः ।**
**रविग्रहनिमित्ताप्तकुरुक्षेत्रैकपावनः ॥ २२९ ॥**

**सुदामरङ्कभार्यार्थभूम्यानीतेन्द्रवैभव** इति । सुदामनामा ब्राह्मणः सहाध्या-

यकः कश्चनासीत् परमदरिद्रः, सुदामा चासौ रङ्कश्च तस्य भार्या गृहिणी तदर्थमानीत भूमान्द्रस्य वैभवमैश्वर्यं येनेति तथा । तदुक्तं 'तं विलोक्याच्युतो दूरादि'त्यादिना । **रविग्रहनिमित्तासकुरुक्षेत्रैकपावन** इति । सूर्योपरागनिमित्तेनाप्त कुरुक्षेत्र तस्यैकश्चासौ पावनश्चेति तथा । रविग्रहनिमित्तेनाप्त कुरुक्षेत्रेण येन स चासावेकपावनश्चेति वा, तदुक्तं 'अथैकदा द्वारकाया' मित्यादिना ॥ २२९ ॥

**नृपगोपीसमस्तस्त्रीपावनार्थाखिलक्रियः ।**
**ऋषिमार्गप्रतिष्ठाता वसुदेवमखक्रियः ॥ २३० ॥**

**नृपगोपीसमस्तस्त्रीपावनार्थाखिलक्रिय** इति । नृपा युधिष्ठिरादयः गोप्यश्चान्याश्च समस्ताश्च ताः स्त्रियश्च तदर्थं पावनाय पवित्रीकरणायाखिला याः क्रिया स्नानदानादयो यस्येति, कुरुक्षेत्रस्नानादिमिषेण भक्तेभ्यो दर्शनदानार्थमेवोपगत इति भावः । **ऋषिमार्गप्रतिष्ठातेति** । ऋषयो द्वैपायनादयः, तदुक्तमार्गे सिद्धान्ते मार्गस्य वा प्रतिष्ठाता स्वसान्निध्यकल्पक इत्यर्थ, ऋषिमार्गे स्वयं प्रस्थित इति वा । तदुक्तं 'आययुर्मुनयस्तत्रे'त्यादिना । **वसुदेवमखक्रिय** इति । वसुदेवसम्बन्धिमखस्य यज्ञस्य क्रिया यस्य यस्माद्वा । तदुक्तं 'इति तद्वचनं श्रुत्वे'त्यादिना ॥ २३० ॥

**वसुदेवज्ञानदाता देवकीपुत्रदायकः ।**
**अर्जुनस्त्रीप्रदाता च बहुलाश्वस्वरूपदः ॥ २३१ ॥**

**वसुदेवज्ञानदातेति** । द्वैपायनादिभ्यो वसुदेवाय ज्ञानं स्वविषयकं दत्तवानित्यर्थः । 'अथैकदात्मजौ प्राप्ता'वित्यादिना । **देवकीपुत्रदायक** इति । देवक्यै कीर्तिमत्प्रभृतिपुत्रानानीय दत्तवानित्यर्थः । तदुक्तं 'अथ तत्र कुरुश्रेष्ठ' इत्यादिना । **अर्जुनस्त्रीप्रदाता** चेति । अर्जुनाय स्त्रियं सुभद्रां प्रकर्षेण बलभद्रादिसान्त्वनेन दत्तवानित्यर्थः । तदुक्तं 'अर्जुनस्तीर्थयात्राया'मित्यादिना । **बहुलाश्वस्वरूपद** इति । बहुलाश्वनामा मैथिलो भक्तः तस्मै तद्गृहगमनेन स्वरूपमग्रेऽपि दर्शनाय दत्तवानित्यर्थः । 'तथा तद्राष्ट्रपालोऽङ्गे'त्यादिना ॥ २३२ ॥

**श्रुतदेवेष्टदाता च सर्वश्रुतिनिरूपितः ।**
**महादेवाद्यतिश्रेष्ठो भक्तिलक्षणनिर्णयः ॥ २३२ ॥**

**श्रुतदेवेष्टदाता** चेति । श्रुतदेवनाम्ने ब्राह्मणाय स्वैकान्तभक्तायेष्टं स्वदर्शनमन्यदर्शितं महान्तिकं गतवानित्यर्थः, तदुक्तं 'कृष्णस्यासीद्द्विजश्रेष्ठे'त्यादिना । '**सर्वश्रुतिनिरूपित** इति । सर्वाभिः श्रुतिभिः निरूपितः स्वशक्त्यनुसारेण स्तुत इत्यर्थः । सर्वश्रुतिप्रतिपादित इति वा, 'वेदैश्च सर्वैरहमेव वेद्य' इति वाक्यात् । स्वशक्त्यनुसारेण स्तवनं तु श्रुतीनां सर्वांशेन भगवत्स्वरूपाज्ञानादेव । तथाच श्रुतिरेव वदति 'प्र तत्ते अद्य शिपिविष्ट नामार्यः शंसामि वयुनानि विद्वान् । तं त्वा गृणामि तवसमतव्यान् क्षयन्तमस्य रजसः पराके' इति । हे शिपिविष्ट विष्णो ! तत्प्रसिद्धं ते त्वदीयं नामाद्यास्मिन् काले

वयुनानि ज्ञानोपायान्
प्रशंसामि स्तौमि, त्वं कीदृशोसि? अर्यः मम स्वामी, पुनः कीदृक्? वयुनानि ज्ञानोपायान्
विद्वान् जानानः, तादृशं त्वां गृणामि स्तोत्रविशेषैः कीर्तयामीत्यर्थः । किंभूतं त्वां सर्वेभ्योपि
प्रवृद्धं गुणैर्महत्तमं, पुनः किं अस्य ब्रह्माण्डस्य रजसो रञ्जनात्मकस्य पराके ततोतिदूरप्रदेशे
वैकुण्ठे क्षयन्तं निवसन्तम् । अहं स्तुवानः कीदृशः अतव्यान् अतवीयान् त्वदपेक्षयातिक्षुद्रः,
अतस्त्वागणितगुणमहिमस्तुतौ प्रवृत्त इति । 'परोमात्रया तनुवा वृधान न ते महित्वमन्व-
श्नुवन्ति । उभे ते विद्म रजसी पृथिव्या विष्णो देव त्वं परमस्य वित्से' 'न तं विदाथ य
इदं जजान' 'यतो वाचो निवर्तन्ते' 'त्वमेव त्वां वेत्थयसी'त्येवमाद्या बहुशो ज्ञेयाः । मूले तु
'जय जय जह्यजा'मित्यादिना । महादेवाद्यतिश्रेष्ठ इति । महादेव आदिर्येषां ब्रह्मादीनां
तेभ्योत्यन्तं प्रशस्य इत्यर्थः । तदुक्तं 'देवासुरमनुष्येष्वित्या'दिना । भक्तिलक्षणनिर्णय
इति । अनुग्रहैकलभ्याया भक्तेः यानि लक्षणानि चिह्नानि तेषां निर्णयो निश्चयो यस्मा-
दिति, तदुक्तं 'यस्याहमनुगृह्णामी'त्यादिना ॥ २३२ ॥

वृकग्रस्तशिवत्राता नानावाक्यविशारदः ।
नरगर्वविनाशार्थहतब्राह्मणबालकः ॥ २३३ ॥

[१०११] वृकग्रस्तशिवत्रातेति । शकुनिपुत्रेण वृकनाम्नासुरेण ग्रस्तः सङ्कटं प्रापितो यः
शिवः तस्य त्राता तस्मात् सङ्कटाद्रक्षक इत्यर्थः । तदुक्तं 'अत्रैवोदाहरन्तीम'मित्यादिना ।
[१०१२] नानावाक्यविशारद इति । 'एवं चेत्तर्हि तद्वाच'मित्यादिना । नानावाक्येषु विशारद-
श्चतुर इत्यर्थः । [१०१३] नरगर्वविनाशार्थहतब्राह्मणबालक इति । नरस्यार्जुनस्य 'नाहं
सङ्कर्षण' इत्याद्युक्तवीर्यगर्वस्य विनाशार्थं हृताः सूतिगृहाद्ब्राह्मणबालका येनेति तथा ।
तदुक्तं 'एकदा द्वारवत्यां तु विप्रपत्न्या' इत्यादि ॥ २३३ ॥

लोकालोकपरस्थानस्थितबालकदायकः ।
द्वारकास्थमहाभोगनानास्त्रीरतिवर्धनः ॥ २३४ ॥

[१०१४] लोकालोकपरस्थानस्थितबालकदायक इति । भूलोकप्रान्तस्थितपर्वतो
लोकालोकसंज्ञकः ततोपि परस्थाने दूरस्थदेशे स्थिता ये बालकाः ताम् ब्राह्मणाय दत्तवानि-
त्यर्थः । तदुक्तं 'द्विजात्मजा मे युवयो'रित्यादिना । [१०१५] द्वारकास्थमहाभोगनानास्त्री-
रतिवर्धन इति । द्वारकायां स्थितो यः महाभोगस्तदर्थं नाना बहुप्रकारं स्त्रीषु रतिं प्रीतिं
वर्धयतीति तथा । द्वारकायां तिष्ठतीति द्वारकास्थः, स चासौ महाभोगश्च नानास्त्रीरतिवर्धन-
श्चेति । तदुक्तं 'सुखं स्वपुर्यां निवसन्नि'त्यादि ॥ २३४ ॥

मनस्तिरोधानकृतव्यग्रस्त्रीचित्तभावितः ।

मनसश्चित्तवृत्तेर्यत्तिरोधानं हरण तेन कृता या व्यग्राः विक्षिप्त-
चित्ताः स्त्रियः, ताभिः चित्तेषु स्वस्वमनस्सु भावितः यथास्फूर्तिकल्पित इत्यर्थः । यद्वा, मन-
स्तिरोधानकरणेन व्यग्राणि स्त्रीचित्तानि भावितानि येन, तदुक्तं 'कृष्णस्यैवं विहरत' इत्यादिना।
सुन्दरीणां नर्मादिभिः

॥ इति दशमस्कन्धनामानि ॥

## ॥ अथ एकादशस्कन्धनामानि ॥

**मुक्तिलीलाविहरणो मौशलव्याजसंहृतिः ॥ २३५ ॥**

**मुक्तिलीलाविहरणं** इति । मुक्तिरूपया स्वस्वरूपव्यवस्थितिरूपया लीलया विहरति क्रीडतीति विहरणः, मुक्तिलीलाकाले कुलं विशेषेण हरति संहरतीति वा, अत एवोक्तं 'मुक्तिर्हित्वान्यथा रूपं स्वरूपेण व्यवस्थिति'रिति । तदुक्तं 'कृत्वा दैत्यवधं कृष्ण' इत्यादिना । **मौशलव्याजसंहृतिरिति** । विप्रशापनिमित्तसाम्बोदरजनितमुशलसम्बन्धियुद्धं मौशलं, तद्व्याजेन तन्मिषेण संहृतिः कुलसंहरणं यस्येति तथा । तदुक्तं 'एवं व्यवसितो राजन्नि'त्यादिना ॥ २३५ ॥

**श्रीभागवतधर्मादिबोधको भक्तिनीतिकृत् ।**
**उद्धवज्ञानदाता च पञ्चविंशतिधा गुरुः ॥ २३६ ॥**

**श्रीभागवतधर्मादिबोधक** इति । श्रीभागवतप्रणीतधर्माः श्रीभागवतधर्माः, भगवत्क्रिया युक्तानां भागवतानां भगवद्भक्तानां कव्यादीनां ये धर्मास्तेषां वा वसुदेवाय नारदद्वारा बोधकः, नारदरूपेणैव वा । 'देवर्षीणां च नारद' इत्यादिवाक्यात् । 'तमेकदा तु देवर्षि'मित्यादि । **भक्तिनीतिकृदिति** । भक्तेर्नीतिं ज्ञानं प्राप्तिं वा, भक्तौ स्थितिं वा, जनकस्य योगेश्वरस्य वचनैः करोतीति तथा । तदुक्तं 'विदेहस्तानभिप्रेत्ये'त्यादिना । **उद्धवज्ञानदाता चेति** । उद्धवाय स्वैकान्तभक्ताय ज्ञानस्य शोकापमार्जकस्य दातेत्यर्थः । तदुक्तं 'देवदेवेश योगेशे'त्यादौ । **पञ्चविंशतिधा गुरुरिति** । अवधूतस्य पञ्चविंशतिप्रकारेण गुरुः गृणात्युपदिशति तत्वमिति । 'सन्ति मे गुरवो राजन्नि'त्यादिना ॥ २३६ ॥

**आचारभक्तिमुक्त्यादिवक्ता शब्दोद्भवस्थितिः ।**
**हंसो धर्मप्रवक्ता च सनकाद्युपदेशकृत् ॥ २३७ ॥**

**आचारमुक्तिभक्त्यादिवक्तेति** । आचारस्य कामरहितवर्णाश्रमकुलाचारस्य 'मयोदितेष्वि'त्यादिनोक्तस्य, मुक्तेः 'बद्धो मुक्त इति व्याख्ये'त्युक्तलक्षणायाः, भक्तेः 'कृपालुरकृतद्रोह' इत्याद्युक्तायाः, आदिपदेनोपधर्मा ज्ञेयाः तेषां ज्ञापक इत्यर्थः । **शब्दोद्भवस्थितिरिति** । शब्दस्य वाण्या उद्भवे उत्पत्तिस्थाने विवरादौ स्थितिः परापश्यन्तीमध्यमावैखर्यादिरूपेणाभिव्यक्तिर्यस्येति तथा । तदुक्तं 'स एष जीवो विवरप्रसूति'रित्यादिना । एतदर्थिका श्रुतिरपि 'चत्वारि वाक्परिमितानि पदानि तानि विदुर्ब्राह्मणा ये मनीषिणः । गुहा त्रीणि निहिता नेङ्गयन्ति तुरीयं वाचो मनुष्या वदन्ती'ति । अर्थस्तु । वाचः शब्दब्रह्मणश्चत्वारि हृत्कण्ठतालुजिह्वाख्यानि पदानि स्थानानि परिमितापरिमितानि गुप्तानीत्यर्थः । तानि च ये मनीषिणो विशेषाभिज्ञास्त एव विदुर्जानन्ति । किंच, गुहायां हृदादिषु त्रीणि परापश्यन्तीमध्यमाख्यानि निहितानि गुप्तानि नेङ्गयन्ति न स्पृशन्ति, किन्तु वाचः तुरीयं वैखर्याख्यं मनुष्या वदन्ति उच्चारयन्तीत्यर्थः । **हंस** इति । हन्ति संसारं, हन्यते ज्ञायते वा हंसः

परमात्मा । तदुक्तं 'स मामचिन्तयदेव' इत्यादिना । धर्मप्रवक्तेति । धर्मस्य मुमुक्षुधर्मस्य प्रकर्षेण संशयच्छेदपूर्वकं वक्तेत्यर्थः । तदुक्तं 'वस्तुनो यद्यनानात्व' मित्यादिना । सनका-द्युपदेशकृदिति । सनकादिषु उपदेशं ब्रह्मोपदेशं करोतीति तथा ॥ २३७ ॥

**भक्तिसाधनवक्ता च योगसिद्धिप्रदायकः ।**
**नानाविभूतिवक्ता च शुद्धधर्मावबोधकः ॥ २३८ ॥**

**भक्तिसाधनवक्ता** चेति । भक्तिरेव साधनं भक्तेर्वा, उद्धवाय स्वप्राप्तिमुख्यसा धनस्य भक्तेर्वक्तेत्यर्थः । तदुक्तं 'वदन्ति कृष्ण श्रेयांसी'त्यादि । **योगसिद्धिप्रदायक** इति । योगेन स्वस्मिन् रूपे चित्तधारणेन सिध्यन्त्याभिरिति सिद्धयोऽणिमादयस्तासां फलप्रदायक इत्यर्थः । तदुक्तं 'सिद्धयोऽष्टादश प्रोक्ता' इत्यादिना । **नानाविभूतिवक्ता** चेति । नाना तत्तज्जातीयेषु बहुविधा या विभूतयः ऐश्वर्यस्थानानि तासां वक्तेत्यर्थः । तदुक्तं 'एतदेवमहं पृष्ट'इत्यादिना । **शुद्धधर्मावबोधक** इति । शुद्धस्य स्वप्रापकस्य धर्मस्य श्रौतस्मार्तस्योद्धवायावबोधको वक्तेत्यर्थः । तदुक्तं 'धर्म एष तव प्रश्न' इत्यादिना ॥ २३८ ॥

**मार्गत्रयविभेदात्मा नानाशङ्कानिवारकः ।**
**भिक्षुगीताप्रवक्ता च शुद्धसांख्यप्रवर्तकः ॥ २३९ ॥**

**मार्गत्रयविभेदात्मेति** । कर्मज्ञानभक्तिभेदेन मार्गत्रयस्य विशेषतो यो भेदः फलभेदेन तत्रात्मा चित्तं यस्येति, तदुक्तं 'कर्मणा परिणामित्वा'दित्यादिना । **नानाशङ्कानि** वारक इति । 'यम कतिविध प्रोक्त'इत्याद्युक्ता या उद्धवस्य नानाशङ्का तासां निवारक निर्णेतेत्यर्थः । **भिक्षुगीताप्रवक्ता** चेति । आवन्त्येन भिक्षुणा यद्गीतं तद्भिक्षुगीतेत्यु च्यते, तस्याः प्रवक्ता सम्मतत्वेनोद्धवाय ज्ञापक इत्यर्थः । अत्र क्रमानियमेन कानिचिन्ना मानि 'कथयन्ति महत्पुण्य'मित्यादिना । **शुद्धसांख्यप्रवर्तक** इति । शुद्धस्य सेश्वरस्य सांख्यस्य आत्मानात्मविवेकस्य प्रवृत्तिकर्तेत्यर्थः । तदुक्तं 'कति तत्त्वानि विश्वेशे'त्यादिना २३९

**मनोगुणविशेषात्मा ज्ञापकोक्तपुरूरवाः ।**
**पूजाविधिप्रवक्ता च सर्वसिद्धान्तबोधकः ॥ २४० ॥**

**मनोगुणविशेषात्मेति** । मनसाधिष्ठिता ये गुणाः सत्त्वादयस्ते विशेषात्मानो देवादयो यस्मात्स इति वा, तदुक्तं 'मनः कर्ममयं नृणा'मित्यादिना । **ज्ञापकोक्तपुरूरवा** इति । गुणेषु न सज्जेतेत्यस्मिन्नर्थे ज्ञापकत्वेन उक्तः पुरूरवा ऐलो येनेति, तदुक्तं 'ऐलं सम्राडिमां गाथा'मित्यादि । **पूजाविधिप्रवक्ता** चेति । वैदिकतान्त्रिकमिश्रभेदेन यः पूजा विधिः प्रकारस्तस्य प्रवक्तेत्यर्थः । तदुक्तं 'न ह्यन्तोऽनन्तपारस्ये'त्यादिना । **सर्वसिद्धा**न्तबोधक इति । सर्वेषु सिद्धान्तेषु गुणदोषयोर्बोधक ज्ञापक इत्यर्थः । सर्वेष्वपि तेषु प्रस्तुतेषु सत्सु सिद्धान्तस्य निश्चितार्थस्य बोधक इति वा, तदुक्तं 'परस्वभावकर्माणी'त्यादिना ॥

**लघुस्वमार्गवक्ता च स्वस्थानगतिबोधकः ।**
**यादवाङ्गोपसंहर्ता सर्वाश्चर्यगतिक्रियः ॥ २४१ ॥**

**लघुस्वमार्गवक्ता** चेति । लघुः अल्पायाससाध्यो यः स्वमार्गः भक्तिमार्गस्तस्य वक्तेत्यर्थः । तदुक्तं 'हन्त ते वर्णयिष्यामी'त्यादि । **स्वस्थानगतिबोधक** इति । स्वस्य स्थानं वैकुण्ठं प्रति या गतिः तस्याः बोधकः ज्ञापकः । यद्वा, उद्धवस्य स्वस्थानं बदर्याख्यं प्रति गमनाय बोधकः आज्ञापक इत्यर्थः । तदुक्तं 'गच्छोद्धव मयादिष्ट' इति । **यादवाङ्गोपसंहर्ते**ति । यादवानामङ्गस्य देहस्य उपसंहारक इति, तदुक्तं 'युयुधुः क्रोधसंरब्धा वेलाया'मित्यादिना । **सर्वाश्चर्यगतिक्रिय** इति । सर्वेषामाश्चर्यजनिका वैकुण्ठं प्रति गमनक्रिया यस्येति । सर्वाश्चर्यज्ञानाय क्रिया असुरव्यामोहनरूपा यस्येति वा ॥

॥ इति एकादशस्कन्धनामानि ॥

॥ अथ द्वादशस्कन्धनामानि ॥

**कालधर्मविभेदार्थवर्णनाशनतत्परः ।**
**बुद्धो गुप्तार्थवक्ता च नानाशास्त्रविधायकः ॥ २४२ ॥**

**कालधर्मविभेदार्थवर्णनाशनतत्पर** इति । कालेन रौद्रेण कृत्वा यो धर्मस्य विभेदो लोपस्तदर्थं यद्वर्णानां ब्राह्मणादीनां नाशनमेकीभावः, तस्मिन् सति तस्य धर्मस्य परो रक्षकः, तत्रोद्युक्त इति वा । 'भक्तः सर्वं प्रवर्तते' इति वाक्यात्, तदुक्तं 'ततश्चानुदिनं धर्म'इत्यादिना । **बुद्ध** इति । बुध्यते स्वयमेव धर्माधर्माविति बुद्धः । **गुप्तार्थवक्ता** चेति । गुप्तो गूढः अर्थो धर्मरूपो यस्मिन् तत् गुप्तार्थं, तद्यथा स्यात् तथा पापण्डिभ्यो 'न हिंस्यात् सर्वभूतानि' इत्येवमादिधर्मस्य वक्तेत्यर्थः । **नानाशास्त्रविधायक** इति । सौगतचार्वाकादिभेदेन नानाशास्त्राणां कर्तेत्यर्थः ॥ २४२ ॥

**नष्टधर्ममनुष्यादिलक्षणज्ञापनोत्सुकः ।**
**आश्रयैकगतिज्ञाता कल्किः कलिमलापहः ॥ २४३ ॥**

**नष्टधर्ममनुष्यादिलक्षणज्ञापनोत्सुक** इति । नष्टस्तिरोहितो धर्मो येभ्यो मनुष्यादिभ्यस्तेषां लक्षणानां चिह्नानां ज्ञापने उत्सुक उत्कण्ठित इत्यर्थः । तदुक्तं 'वित्तमेव कलौ नृणा'मित्यादिना । **आश्रयैकगतिज्ञाते**ति । 'आभासश्च निरोधश्चाध्यवसीयते । स आश्रयः परब्रह्म परमात्मेति शब्द्यते' इत्युक्तरूपो य आश्रयः तदेकगतेः, स चासावेकगतिश्चेति तस्य ज्ञाता, आश्रयस्य स्वरूपत्वात् तज्ज्ञाता स्वयमेव नान्य इति भावः । अत्र पूर्वोदाहृता श्रुतिरनुसन्धेया । 'परोमात्रये'ति ज्ञापक इति वा । **कल्कि**रिति । कल्कते दभ्नोति शत्रूनिति कल्किः, कलिं कृन्तति वा । पृषोदरादिः । तदुक्तं 'इत्थं कलौ गतप्राय' इत्यादिना । **कलिमलापह** इति । कलेर्मलं पापं स्वप्राकट्येनापहन्तीति तथा, तदुक्तं 'अथ तेषां भविष्यन्ति मनांसी'त्यादिना ॥ २४३ ॥

**शास्त्रवैराग्यसम्बोधो नानाप्रलयबोधकः ।**
**विशेषतः शुकव्याजपरीक्षिज्ज्ञानबोधकः ॥ २४४ ॥**

**शास्त्रवैराग्यसम्बोध** इति । शास्त्रेण श्रीभागवतशास्त्रेण वैराग्यं सकलविषयनिवृत्तिः सम्यक् बोधश्च राज्ञो यस्मात् तथा । शास्त्रेण वैराग्यार्थं सम्यक् बोधयति राजानमिति वा, तदुक्तं 'कथा इमास्ते कथिता' इत्यादिना । **नानाप्रलयबोधक** इति । नाना नैमित्तिकप्राकृतिकनित्यात्यन्तिकभेदेन बहुप्रकारको यः प्रलयः प्रलीयन्तेऽस्मिन्सर्वे इति प्रलयः महाकालस्तस्य बोधकः । तदुक्तं 'कालस्ते परमाण्वादि'रित्यादिना । **विशेषतः शुकव्याजपरीक्षिज्ज्ञानबोधक** इति । विशेषतोऽसाधारण्येन शुकव्याजेन शुकरूपधारी स्वयमेव परीक्षिन्नाम्नो राज्ञो ज्ञानस्य ज्ञानसाधनश्रीभागवतस्य यथार्थबोधक इत्यर्थः । तदुक्तं 'अत्रानुवर्ण्यतेऽभीक्ष्ण'मित्यादिना ॥ २४४ ॥

**शुकेष्टगतिरूपात्मा परीक्षिद्देहमोक्षदः ।**
**शब्दरूपो नादरूपो वेदरूपो विभेदनः ॥ २४५ ॥**

**शुकेष्टगतिरूपात्मे**ति । शुकस्येष्टा इष्टतमा या गतिर्ज्ञानं तद्रूप आत्मा यस्य, शुकस्येष्टो राजा तस्य गतिरूपात्मेति वा । तदुक्तं 'एतं निशम्य मुनिने'त्यादिना । **परीक्षिद्देहमोक्षद** इति । परीक्षिते देहान्मोक्षं दत्तवानित्यर्थः । तदुक्तं 'परीक्षिदपि राजर्षिरि'त्यादिना । **शब्दरूप** इति । शब्दब्रह्मरूप इत्यर्थः । **नादरूप** इति । नादः प्रणवस्तद्रूप इत्यर्थः, 'प्रणवः सर्ववेदेष्वि'ति वचनात् । तदुक्तं 'समाहितात्मना ब्रह्मन्नि'त्यादिना । **वेदरूप** इति । वेदा ऋग्वेदादयो रूपं यस्य, तेषु रूपं यस्येति वा, सामवेदरूप इति वा, 'वेदानां सामवेदोऽस्मी'ति वाक्यात् । **विभेदन** इति । ऋग्यजुःसामाथर्वाख्यैर्विशिष्टस्य भेदस्य कर्तेत्यर्थः ॥ २४५ ॥

**व्यासः शाखाप्रवक्ता च पुराणार्थप्रवर्तकः ।**
**मार्कण्डेयप्रसन्नात्मा वटपत्रपुटेशयः ॥ २४६ ॥**

**व्यास** इति । विस्तारक इत्यर्थः । तदुक्तं 'पराशरात् सत्यवत्या'मित्यादिना । **शाखाप्रवक्ता** चेति । बह्वृचादिशाखानां शिष्येभ्यः प्रवक्ता प्रवचनकर्तेत्यर्थः । **पुराणार्थप्रवर्तक** इति । पुराणानां लक्ष्यलक्षणरूपस्यार्थस्य प्रवर्तको बोधक इत्यर्थः । तदुक्तं 'पुराणलक्षणं ब्रह्मन्नि'त्यादिना । **मार्कण्डेयप्रसन्नात्मे**ति । मार्कण्डेयाय प्रसादयुक्त आत्मा अन्तःकरणं यस्येति । तदुक्तं 'तस्यैव युञ्जतश्चित्त'मित्यादिना । **वटपत्रपुटेशय** इति । मार्कण्डेयाय मायादर्शने महार्णवे न्यग्रोधपोतस्य पर्णपुटके शयितवानित्यर्थः । शयवासवासिष्वकालादिसलुक् । तदुक्तं 'न्यग्रोधपोतं ददृशे'त्यादिना ॥ २४६ ॥

**मायाव्याप्तमहामोहदुःखशान्तिप्रवर्तकः ।**
**महादेवस्वरूपश्च भक्तिदाता कृपानिधिः ॥ २४७ ॥**

**मायाव्याप्तमहामोहदुःखशान्तिप्रवर्तक** इति । मायया व्याप्तो महामोहो-

ऽज्ञान तज्जनित यन्मार्कण्डेये दुःखं तस्य शान्ति निवृत्तिं स्वदर्शनेन प्रवर्तयतीति तथा। 'अथ तं बालकं वीक्ष्ये'त्यादिना। **महादेवस्वरूपश्चेति** । महादेवस्वरूपेण पुनर्मार्कण्डेयाय दर्शनं दत्तवानिति भावः। 'रुद्राणां शङ्करश्चास्मी'तिवाक्यान्महादेवस्वरूपत्वम्। तदुक्तं 'तमित्थं निभृतात्मान'मित्यादिना। **भक्तिदातेति** । मार्कण्डेयाय भक्तिरूपस्य वरस्य दाते त्यर्थः। तदुक्त 'वरमेकं वृणेथापी'त्यादिना। **कृपानिधिरिति** । अतिदुर्लभभक्तिदानात् कृपायाः निधिर्निधानमित्यर्थः ॥ २४७ ॥

**आदित्यान्तर्गतः कालः द्वादशात्मा सुपूजितः ।**
**श्रीभागवतरूपश्च सर्वार्थफलदायकः ॥ २४८ ॥**

**आदित्यान्तर्गत** इति । आदित्यस्य मण्डलरूपस्यान्तःस्थित इत्यर्थः। तदुक्तं 'शुको यदाह भगवा'नित्यादिना। **काल** इति । कलयति विश्वं क्षणलवादिभिरिति कालः, कालरूप इति वा। **द्वादशात्मेति** । धात्रर्यमप्रभृतयो द्वादशसूर्या आत्मानो मूर्तयो यस्य, द्वादशानामात्मेति वा। तदुक्तं 'मधादिद्वादशस्वि'त्यादिना। **सुपूजित** इति । तत्तदुपासकैस्तत्तन्मन्त्रैः सुष्ठु यथा स्यात् तथा पूजितोऽर्चित इत्यर्थः। **श्रीभागवतरूपश्चेति** । श्रीभागवतमनुक्रमणिकया रूपयतीति तथा, श्रीभागवते रूपं यस्येति वा, तद्रूप एवेति वा। तदुक्तं 'अत्र सङ्कीर्त्यते साक्षादि'त्यादिना। **सर्वार्थफलदायक** इति । श्रीभागवतरूपेण सर्वेषामप्यर्थानां धर्मादिपुमर्थानां सर्वार्थफलरूपां भक्तिं वा ददातीति तथा। सर्वपुरुषार्थरूपाणि यानि फलानि तेषां दातेति वा, सर्वार्थः स्वयमेव तद्रूप फलदायक इति वा। तदुक्तं 'य एतच्छ्रावये'दित्यादिना ॥ २४८ ॥

॥ इति द्वादशस्कन्धनामानि ॥

**इतीदं कीर्तनीयस्य हरेर्नामसहस्रकम् ।**
**पञ्चसप्ततिविस्तीर्णं पुराणान्तरभाषितम् ॥ २४९ ॥**

**इतीदमिति** । इतिशब्दः समाप्तौ, **इदं कीर्तनीयस्य** कीर्तनयोग्यस्य **हरेः** सकलदुःखहरणशीलस्य **नामसहस्रकं** नामसहस्रमेव नामसहस्रकं सुखरूपमिति तदेव विशेष्यते। **पञ्चसप्ततिविस्तीर्णमिति** । नाम्नां पञ्चाधिकसप्तत्या विस्तीर्णं विस्तारो यस्मिन्निति तत्पञ्चसप्ततिविस्तीर्णम्। अत्र विस्तीर्णपदं पृथक्कृत्य **पुराणान्तरभाषितमि**त्यनेन विशेषणीयम्। नो चेत् सर्वस्यापि पुराणान्तरीयत्वं स्यात्। तानि च पुराणान्तरप्रसिद्धानि यथाक्रमं प्रदर्श्यन्ते। १ शुकवागमृताब्धीन्दुः। २ कोटिसूर्यसमप्रभः। ३ ब्रह्मकोटिप्रजापतिः। ४ सुधाकोटिस्वास्थ्यहेतुः। ५ कामधुक्कोटिकामदः। ६ समुद्रकोटिगम्भीरः। ७ तीर्थकोटिसमाह्वयः। ८ सुमेरुकोटिनिष्कम्पः। ९ कोटिब्रह्माण्डविग्रहः। १० कोट्यश्वमेधपापघ्नः। ११ वायुकोटिमहाबलः। १२ कोटीन्दुजगदानन्दी। १३ शिवकोटिप्रसादकृत्। १४ अमानी। १५ मानदः। १६ जनार्दनः। १७ अधोक्षजः। १८ उपेन्द्रः।

१९ इन्द्रावरजः । २० त्रिलोकात्मा । २१ विश्वमूर्तिः । २२ पृथुश्रवाः । २३ रघुनाथः ।
२४ रामचन्द्रः । २५ रामभद्रः । २६ रघुप्रियः । २७ अनन्तकीर्तिः । २८ पुण्यात्मा ।
२९ पुण्यश्लोकैकभास्करः । ३० अहल्यादुःखहारी । ३१ गुहस्वामी । ३२ सलक्ष्मणः ।
३३ शरभङ्गसुतीक्ष्णादिपूजितः । ३४ अगस्त्यभाग्यभूः । ३५ जटायुर्वधमोक्षदः । ३६
शबरीपूजितः । ३७ दुन्दुभ्यस्थिप्रहरणः । ३८ सप्ततालनिभेदनः । ३९ चित्रकूटप्रियस्थानः ।
४० दण्डकारण्यपावनः । ४१ ऋषिसम्प्रार्थितकृतिः । ४२ विराधवधपण्डितः । ४३ सर्व-
साक्षी । ४४ केशवः । ४५ नन्दव्रजजनानन्दी । ४६ रामानुजः । ४७ वासुदेवः । ४८
अरण्यभोक्ता । ४९ बाललीलापरायणः । ५० प्रोत्साहजनकः । ५१ अघासुरनिषूदनः ।
५२ व्यालमोक्षप्रदः । ५३ पुष्ट । ५४ ब्रह्ममोहप्रवर्धनः । ५५ अनन्तमूर्तिः ५६
सर्वात्मा । ५७ जङ्गमस्थावराकृतिः । ५८ ब्रह्ममोहनकर्ता । ५९ स्तुत्यः । ६० आत्मा ।
६१ सदाप्रियः । ६२ कालीयफणिमाणिक्यरञ्जितश्रीपदाम्बुजः । ६३ वेणुवाद्यविशारदः ।
६४ वेणुवाद्यस्मरक्षोभमत्तगोपीविमुक्तिदः । ६५ सद्यः कुवलयापीडघाती । ६६ चाणूरम-
र्दनः । ६७ सान्दीपनिमृतापत्यदाता । ६८ कालान्तकादिजित् । ६९ सहस्रकवचच्छेदी ।
७० सुदामारङ्कभार्यार्थभूम्यानीतेन्द्रवैभवः । ७१ षोडशस्त्रीसहस्रेशः । ७२ बुद्धः । ७३
गुह्यार्थवक्ता । ७४ चतुर्मूर्तिः । ७५ साक्षी ॥ २४९ ॥

**य एतत्प्रातरुत्थाय श्रद्धावान् सुसमाहितः ।**
**जपेदर्थाहितमतिः स गोविन्दपदं लभेत् ॥ २५० ॥**

**य एतदिति** । यः पुरुषः एतत्प्रातरुत्थाय सुसमाहितोऽव्यग्रचित्तः सन् श्रद्धायुक्तो जपेत् स पुरुषो गोविन्दस्य गवेन्द्रस्य श्रीगोवर्धनोद्धरणस्य पदं स्थानं चरणस्य पदं स्थानं चरणं वा व्रजेदित्यन्वयः । कीदृक्पुरुषः **अर्थाहितमतिः** । अर्थेषु लौकिकेषु न हिता धृता मतिर्येन । यद्वा । अर्थेषु नाम्नां निर्वचनार्थेषु अर्थे भक्तिरूपे आहिता स्थापिता मतिर्येन वा ॥ २५० ॥

पूर्वं श्रद्धायुक्तः प्रातरुत्थाय जपित्वा व्यग्रत्वादिसाधनयुक्तस्यैव फलमुक्तमिदानीं तदशक्तस्यापि पाठमात्रपर्यवसायिनोपि फलं भवत्येवेति वदन्ति ।

**सर्वधर्मविनिर्मुक्तः सर्वसाधनवर्जितः ।**
**एतद्धारणमात्रेण कृष्णस्य पदवीं व्रजेत् ॥ २५१ ॥**
**हर्यावेशितचित्तेन श्रीभागवतसागरात् ।**
**समुद्धृतानि नामानि चिन्तामणिनिभानि हि ॥ २५२ ॥**
**कण्ठस्थितान्यर्थदीप्त्या बाधन्तेऽज्ञानजं तमः ।**
**भक्तिं श्रीकृष्णदेवस्य साधयन्ति विनिश्चितम् ॥ २५३ ॥**

**सर्वधर्मविनिर्मुक्त** इति । व्याख्यातप्रायम् । अर्थदीप्त्या अर्थप्रकाशकत्वेन भक्तिमपि श्रीकृष्णदेवस्य साधयन्ति । अर्थप्रकाशकत्वेन ज्ञानं तदनन्तरं भक्तिमिति ॥

माहात्म्यस्य परमकाष्ठामाहुः ।

**किम्बहूक्तेन भगवान् नामभिः स्तुतषड्गुणः ।**
**आत्मभावं नयत्याशु भक्तिं च कुरुते दृढाम् ॥ २५४ ॥**

**किं बहूक्तेनेति** । स्तुताः षडैश्वर्यादयो गुणा यस्येति ॥

बहूनां साधनानां समुच्चये प्राप्ते एकेनैव चारितार्थ्यमाहुः ।

**यः कृष्णभक्तिमिह वाञ्छति साधनौघै-**
**र्नामानि भासुरयशांसि जपेत्स नित्यम् ।**
**तं वै हरिः स्वपुरुषं कुरुतेतिशीघ्र-**
**मात्मार्पणं समधिगच्छति भावतुष्टः ॥ २५५ ॥**

**यः कृष्णभक्तिमिति** । भासुरं प्रकाशनस्वभावं यशो येषां, भासुरस्य भगवतो यशोरूपाणि वा । आत्मार्पणं तस्मै स्वात्मानमर्पयतीति । यद्वा । तत्कृतमात्मसमर्पणं सम्यगधिगच्छति जानातीति । भावेन भक्तिभावेन तुष्टः सन्तुष्टः ।

**श्रीकृष्ण कृष्णसख वृष्णिवृषावनिध्रुग्-**
**राजन्यवंशदहनानपवर्गवीर्य ।**
**गोविन्द गोपवनिताव्रजभृत्यगीत**
**तीर्थश्रवः श्रवणमङ्गल पाहि भृत्यान् ॥ २५६ ॥**

**श्रीमद्वल्लभाचार्यसमुद्धृतं श्रीपुरुषोत्तमनामसहस्रम् ।**

**श्रीकृष्णेति** । श्रीकृष्णेति श्रीकृष्णभक्तान् पाहीत्यन्वयः । **श्रीकृष्णेति** सम्बोधनं विशेष्यते विशेषणैः । कृष्णसार्जुनस्य सखा कृष्णसखः । **वृष्णिवृषावनिध्रुगिति** । वृष्णयो वसुदेवादयः, वृषो धर्मः, अवनिः पृथ्वी, ताः द्रुह्यन्तीति वृष्णिवृषावनिद्रुहः ते च ते राजन्याश्च तेषां वंशदहनायानपवर्गमनुपक्षीणं वीर्यं सामर्थ्यं यस्य, **गोविन्द** गवामिन्द्रस्त्वत्समुद्धौ गोपवनिताश्च व्रजश्च भृत्याश्च तैर्गीतः तैस्तैर्गुणैः कीर्तितः, **तीर्थश्रवः** । तीर्थरूपेण श्रवः कीर्तिर्यस्य, तीर्थानि श्रवांसि यस्येति वा । **श्रवणमङ्गल** श्रवणमात्रेणैव परमकल्याणरूप इत्यर्थः ।

*कृष्णनामसहस्राब्जमालेयं वाङ्मयीमयी । ग्रथिता श्रुतिसूत्रेण रचिता कृष्णपादयोः ॥ १ ॥*
श्रीविठ्ठलतनूजेन रुक्मिणीगर्भसम्भुवा । रघुनाथेन गायेयं नामसु व्यरचि स्फुटम् ॥ २ ॥

**॥ इति श्रीमद्वल्लभनन्दनचरणकमलपरागमात्रसनाथरघुनाथस्य कृतौ नामचन्द्रिका समाप्ता ॥**

श्रीमद्–वल्लभाचार्य–महाप्रभु–विरचिता

# त्रिविधनामावली

## विवृति संवलिता



श्रीमद् – वल्लभाचार्य – महाप्रभु – वंशावतंस –
गोस्वामी श्री १००८ श्रीकृष्ण जीवन जी–
महाराज श्री इत्येतेषां – करकमलयोः
अर्पिता — तदात्मजैः — गोस्वामि—
श्री १००८ श्रीव्रजाधीश – महोदयैः



श्रीवल्लभाब्दाः ५०३

वि. सं. २०३६



गोस्वामिश्री १००८ श्रीकृष्णजीवनजी महाराज

॥ श्रीकृष्णाय नमः ॥

॥ श्रीमदाचार्यचरणकमलेभ्यो नमः ॥

# ग्रन्थ-परिचय

परमात्मामें अनन्त गुण-धर्म हैं तथा अपने अनन्त रूपोंमें परमात्मा अनन्त लीलायें प्रकट करता है। इनमें कुछ गुण-धर्म रूप तथा लीलायें माहात्म्यज्ञान बढानेवाली होती और कुछ स्नेहको सुदृढ करनेवाली होती है। जैसे अहन्तास्पद देह और देहसे सम्बन्धित ममतास्पद वस्तुओंमें स्नेह हमें हमारी आत्मामें रहे स्नेहके कारण जुड जाता है, वैसे ही आत्मामें प्रियताकी अनुभूतिका स्रोत परमात्मा होता है। अतएव आत्मा प्रिय है तो परमात्मा परमप्रिय। जैसे देहमें आत्मा है वैसे ही आत्मा के भीतर परमात्माकी स्थिति है। अतएव वह आत्माकी भी आत्मा है। आत्माकी भी आत्मा होना उसका स्नेहको बढानेवाला रूप है। तत्तद् देहोंमें आत्मा भिन्न-भिन्न होती हैं किन्तु सभी आत्माओंमें स्थित परमात्मा एक-अभिन्न है। यही उसकी परमता-महत्ता है। यह उसका माहात्म्य है। अतएव विज्ञानमय आत्माके भीतर आनन्दमय परमात्माकी स्थिति उपनिषद् दिखलाते हैं।

उपनिषदोंमें जगतकी उत्पत्ति स्थिति एवम् प्रलय के कारणरूप परमात्माको 'ब्रह्म' कहा गया है। उक्त, त्रिविध लीलाओंका वर्णन श्रीमद्भागवतमें सर्ग-विसर्ग-स्थान-पोषण-ऊति-मन्वन्तर-ईशानुकथा निरोध-मुक्ति-आश्रयके रूपमें दशधा हुआ है। इनमें कुछ उत्पत्ति, कुछ स्थिति और कुछ प्रलय रूप श्रुतिवर्णित ब्रह्मकी लीलाओंका ही भागवत भगवान्‌की दशविध लीलाओंके रूपमें विवेचन करती है। उत्पत्ति एवम् प्रलय की लीलाये परब्रह्म परमात्मा भगवान् श्रीकृष्णके वास्तविक माहात्म्यका ज्ञान प्रदान करती हैं तथा स्थितिकी लीलाये श्रीकृष्णके प्रति हमारे स्नेहको सुदृढ बनाती है। स्थिति-लीलाका चरमोत्कर्ष (Climax) श्रीमद्भागवतके दशम स्कन्धमें निरोध

लीलाके रूपमें वर्णित हुआ है। अतएव परमात्मा और जीवात्मा के बीच रहे सहज स्नेहका दशमस्कन्धमें चरमोत्कर्ष वर्णित हुआ है।

श्रीपुरुषोत्तमनामसहस्रम्‌में श्रीमहाप्रभुने जैसे समग्र श्रीमद्‌भागवतमें से दशविध लीलाओंके निरूपण करनेवाले नामोंका संकलन किया है, वैसे ही त्रिविधनामावलीमें केवल दशमस्कन्धकी भगवल्लीलाओंका अवगाहन करानेवाले भगवन्नाम सकलित किये हैं। दशम स्कन्धमें भगवान् श्रीकृष्णकी बाललीला प्रौढलीला तथा राजलीला वर्णित हुई है। स्नेहात्मिका भक्तिकी भी श्रीमहाप्रभु तीन अवस्था स्वीकारते हैं: (१) प्रेम (२) आसक्ति और, (३) व्यसन।

इस त्रिविधनामावली, जिसमें परमात्माके भक्तोंके बीच निरुद्ध होनेकी लीलाओंका वर्णन है, के चिन्तन–पठनसे जीवात्मामें प्रेमासक्तिव्यसनके क्रमिक सोपानोंपर भक्ति आरूढ होती है और भक्त प्रपञ्चको भुला कर भगवान्‌में आसक्त हो जाता है– निरुद्ध हो जाता है।

बाललीलानामपाठात् श्रीकृष्णे प्रेम जायते ॥
आसक्तिः प्रौढलीलायाः नामपाठाद् भविष्यति ॥
व्यसनं कृष्णचरणे राजलीलाभिधानतः।
तस्मान्नामत्रयं जाप्यं भक्तिप्राप्तीच्छुभिस्सदा ॥

प्रस्तुत संस्करण वि. स. १९७७ में प्रकाशित संस्करणका ऑफसेट प्रोसेस द्वारा पुनर्मुद्रित रूप है। उक्त सस्करणके सम्पादक थे श्रीमूलचन्द तुलसीदास तेलीवाला तथा श्रीधीरजलाल व्रजदास साकलिया, प्रकाशक थे श्रीत्रिभुवनदास पीताम्बरदास शाह, इन सभी महानुभावोंका हम कृतज्ञतापूर्वक स्मरण करते हैं।

---

# प्रस्तावना ।



श्रीत्रिविधनामावल्या विवरणसमेतायाः प्राकट्यं 'श्रीनटपुरस्थ त्रिभुवनदास पीताम्बरदास शाहे'त्यस्य द्रव्यसाहाय्येन क्रियते । अत्र मुद्रितस्य विवरणस्य कर्तॄणां नाम नास्माभिर्ज्ञायते । भगवद्धर्मपरायणशास्त्रिकल्याणजीसूचनातः श्रीगोकुलोत्सवकृतेति कल्प्यते । अस्मद्दृष्टेषु आदर्शपुस्तकेषु कुत्रापि ग्रन्थकारैर्निजनाम न ज्ञापितम् । एतद्विवरणस्य शोधनं पञ्चपुस्तकाधारेण कृतम् । तत्र प्रथमं नित्यलीलास्थश्रीमद्गोस्वामिश्रीजीवनेशानाम्, द्वितीयं पण्डितभट्टबलभद्रशर्मणाम्, तृतीयं भारतमार्तण्डवेदान्तभट्टाचार्यपण्डितगट्टूलालानाम्, इदं केनचित् स्तम्भतीर्थस्थगुर्जरज्ञातीयमहेतालालदासजीसुतदलपतिरायेण स्वावलोकनार्थं संवत् १६९१ आश्विन कृष्ण ११-१२-बुधवासरे लिखितम् । शिष्टं पुस्तकद्वयं श्रीमन्मथुरेशमन्दिरपुस्तकसंग्रहस्थम्, कोटातः पण्डितगोकुलदासैः प्रेषितम् । एतेषां सर्वेषामुपकारं स्वीकुर्मः ।

| | |
|---|---|
| ज्येष्ठाभिषेकोत्सवः । १९७७ मुम्बई. | मूलचन्द्र तेलीवाला । धैर्यलाल सांकलीया । |

# प्रस्तावना :

શ્રીત્રિવિધનામાવલી ગ્રન્થ શ્રીમન્મહાપ્રભુચરણ શ્રીમદાચાર્યજીએ નિજ તનુજ શ્રીગોપીનાથજી કે શ્રીવિઠ્ઠલનાથજીને શ્રીમદ્‌ભાગવતપાઠ સહજમાં થઇ જાય એ હેતુથી પ્રકટ કર્યો એવી કિંવદન્તી સંપ્રદાયમાં કવચિત્ શ્રવણગોચર થાય છે. આ ગ્રન્થમાં શ્રીકૃષ્ણના લીલાબોધક નામો શ્રીમદાચાર્યજીએ શ્રીમદ્‌ભાગવતદશમસ્કંધમાંથી ઉદ્‌ધૃત કર્યાં છે. પ્રભુની બાલલીલા, પ્રૌઢલીલા અને રાજલીલા એમ ત્રિવિધલીલાનો બોધ થવાને પ્રભુના ત્રિવિધ નામ યોજ્યાં છે. બાલલીલાના નામના પાઠથી પ્રભુમાં પ્રેમ, પ્રૌઢલીલાના નામ પાઠથી આસક્તિ અને રાજલીલાના નામપાઠથી વ્યસન સિદ્ધ થશે એમ ગ્રન્થાન્તે ફલશ્રુતિ છે. દશમસ્કન્ધમાં પ્રતિપાદિત પ્રભુની સર્વવિધ લીલાનું અનુસંધાન ત્રિવિધનામાવલીથી સહજ થાય છે.

પ્રત્યેક વૈષ્ણવ આ ગ્રન્થનો પાઠ ભાવથી કરે છે. એ પાઠ શુદ્ધ રીતે થઇ શકે એ ઉદ્દેશથી આ ગ્રન્થનું મુદ્રણ થયું છે. શ્રીસુબોધિનીજીના આશયનો સંગ્રહ કરતી એક અતીવ સરલ અને સુંદર વિવૃતિ પણ સાથે મુદ્રિત કરી છે. આ વિવૃતિના કર્તા કોણ તે અમને નિશ્ચય થયો નથી શાસ્ત્રી કલ્યાણજીની સૂચના થી કે અન્ય કોઇની–યદૃચ્છાથી 'શ્રીગોકુલોત્સવજીકૃત' એમ મુદ્રિત થયું છે. પરન્તુ ટીકા બહુ પ્રાચીન છે એમાં તો સંશય નથી.

ટીકાનું તથા મૂલનું મુદ્રણ નીચે જણાવેલા પુસ્તકોના આધારે થયું છે.

૧. પંડિત ગટ્ટુલાલનું. આ પુસ્તક સંવત્ ૧૯૨૫ ના 'આશ્વિનવદિ ૧૧ ને બુધવારે કોઇ સ્થલતીર્થસ્થિત ગુર્જર જ્ઞાતીય 'लघुनागरायाम्' મહેતા લાલદાસજીસુત દલપતિરાયેણ સ્વાવલોકનાર્થ લખેલું છે. આરંભ અને 'सन्तमो श्रीगोकुलेन्दुः' એમ મંગલશબ્દોથી પ્રભુસ્વરૂપસ્મરણ કર્યું છે, તેથી લેખક પંચમ શ્રીરઘુનાથજીના ગૃહનો સેવક હોવો જોઇએ. પત્ર ૪૫. આ પુસ્તક બહુ સુંદર અક્ષર લખેલું છે. કવચિત્ વ્યાકરણદોષ જોવામાં આવે છે, પરંતુ પુસ્તક પ્રાયઃ શુદ્ધ છે.

૨.૩. આ બે પુસ્તકો કોટાસ્થ શ્રીમન્મથુરેશમંદિરના સંગ્રહમાંના છે. પુસ્તકનું મુદ્રણ અર્ધ થયું ત્યારે આ પુસ્તકો અમને મુખ્યાજી પંડિત ગોકુલદાસજીની કૃપાથી મળ્યા. આ પ્રતિ પ્રમાણે પ્રથમ શ્લોકાર્ધમાં महाशयम् બદલે ममाशयम् એમ વાચવું. આ પુસ્તકો પણ પ્રાચીન અને ઠીક છે.

૪. આ પુસ્તક નિત્યલીલાસ્થ શ્રીમદ્‌ગોસ્વામિશ્રીજીવનલાલજી મહારાજ તરફથી પ્રાપ્ત થયલું. નૂતન છે.

૫. પંડિત ભટ્ટ બલભદ્ર શર્માનું. [redacted] પણ નૂતન છે.

આ સર્વનો ઉપકાર અમે માનીએ છીએ.

| | | |
|---|---|---|
| मुम्बई.<br>ज्येष्ठाभिषेक,<br>१९९७, | } | मूळचन्द्र तेलीवाला.<br>धीरजलाल सांकलीया. |

श्रीकृष्णाय नमः ।

# त्रिविधनामावली ।

## श्रीगोकुलोत्सवकृतविवृतिसमेता ।

नमामि श्रीमदाचार्यपदाब्जं तन्महाशयम् । ऊषरं सरसीकृत्य सुरभीकृतवत्स्वयम् ॥१॥
भावये सततं श्रीमद्विठ्ठलेशपदाम्बुजम् । येन स्वकरुणासारैः सिञ्चितं हृदयं मम ॥ २ ॥
अतो नामावलीकल्पद्रुमभावफलानि हि । अद्भुतान्युदितान्यत्र भोग्यानि सुहृदां परम् ॥ ३ ॥

अथ साक्षाद्भगवान् परमकृपालुः स्वप्रादुर्भावसमये कलिकालदोषेण जीवानामुद्धारः कथं भविष्यतीति विचार्य प्रथमं स्वनामलीलात्मकं श्रीभागवतं प्रकटीचकार । ततः कलिदोषे सम्पूर्णश्रीभागवतस्यापि श्रवणपठनयोरशक्यत्वात्स्वकीयेषु करुणया महाकारुणिका श्रीमदाचार्याः श्रीभागवतादुद्धृत्य सारभूतानि सहस्रनामानि प्रकटितवन्तः । यत्पठने सम्पूर्णश्रीभागवतार्थज्ञानं भवति । तदुक्तं ' सहस्रं यैस्तु पठितैः पठितं स्याच्छुकामृत ' मिति । तत्रापि समुदायेन सकलावतारचरित्रधर्मसहितनामनिरूपणान्निरोधलीलात्मकनाम्नां भिन्नतया मुख्यत्वेन ज्ञानाभावात्सर्वत्र साधारणी प्रवृत्तिर्भवेदिति त्रिविधभक्तनिरोधार्थं त्रिविधा या लीला कृता तदात्मकानि यानि नामानि तानि ततोऽप्युद्धृत्य निरूपितवन्तः । तत्रापि कानिचिन्मूलरूपस्य नामानि नित्यलीलामध्यपातीनि कानिचिदवताररूपस्य तत्तच्चरित्रबोधकानि नामानि सन्तीति प्रथमं मूलरूपस्य नित्यलीलामध्यपातीनि नामानि निरूपयन्ति । तत्र चादौ नामनिरूपणं फलसहितं प्रतिजानते ।

**नामावलीं प्रवक्ष्यामि केशवस्यातिवल्लभाम् ।**
**यस्याः सङ्कीर्तनाद्विष्णुरात्मानं सम्प्रयच्छति ॥ १ ॥**

केशवस्य नामावलीं प्रवक्ष्यामीति सम्बन्धः । केशवपदेन ब्रह्मशिवयोरपि मोक्षदातेति माहात्म्यं सूचितम् । किञ्च । केशवपदेन केशकृतसौन्दर्यमपि व्यज्यते । तेन बाललीलात्मकस्य भगवतो नामावलीं प्रवक्ष्यामीति प्रतिज्ञा सूचिता । प्रकर्षकथनेन यथा यथा यया लीलया निरोधः कृतो भक्तानां तथा तथैव नाम्नां कथनमिति द्योतितम् । अत एवातिवल्लभामिति विशेषणम् । तादृशसौन्दर्यावलोकनेन प्रेमोद्गमे तद्रूपं तच्चरित्रं तन्नामापि परमप्रेमास्पदं भवतीति भावः । एवं सति माहात्म्यज्ञानपूर्वकस्नेहे जातेऽग्रे मुक्तिफलं भविष्यतीत्येतत्कथने को विशेष इति तस्याः फलमाहुः **यस्या** इति । यस्याः सम्यग्भावपूर्वकप्रेमोद्रेकेण कीर्तनाद्विष्णुः स्वयं रसेन व्याप्तः सन् आत्मानं सम्प्रयच्छति, स्वरूपानन्दं ददाति । दाने सम्यक्त्वकथनेन तदधीनत्वेन सदा

स्थिति सूचिता । यथा तैर्भगवति सर्वसमर्पण कृतम्, तथा भगवानपि तादृशेभ्य सर्वसमर्पणं करोतीति भाव । अत एवोक्त ' मदन्यत्ते न जानन्ति नाह तेभ्यो मनागपि ' इति ।

एव प्रतिज्ञाय नामान्याहु ।

**श्रीकृष्णाय नम** इति ॥ १ ॥

इद नित्यलीलास्थस्य मूलरूपस्य नाम ज्ञेयम् । तथा हि । कृष्णशब्देन परमवस्तूच्यते । तदेव यहि स्वरमणेच्छाया मूलरूपया श्रिया आधिदैविकया शक्त्या सह रमत इति श्रीकृष्ण पदेन सूचितम् । तथा चोक्त 'स्वधामनि ब्रह्मणि रंस्यते नम' इति । तदेव पुनस्तादृश भक्तनिरोधार्थं लोके प्रकट भवतीत्यवताररूपमपीति तादृशाय नम । अत्र सर्वत्र नमनकथने- नैतादृशो जीवस्य सर्वमेवाशक्यमिति असदैन्यं दृष्ट्वा स्वयमेव कृपा कुर्विति ज्ञापितम् । अत एव 'नि साधनफलात्मे' त्युक्तम् । किञ्च । नामसु चतुर्थ्यन्तकथनेन नमनस्य स्वरूप एव विनियोगो भवत्विति ज्ञापितम् । नन्वत्र बाललीलानाम्ना प्रतिज्ञातत्वात् मूलरूपनामसु बाल- लीलात्वं कथ सङ्गच्छत इति चेत् । सत्यम् । भगवत सर्वा एव लीला नित्या इति बाललीलापि नित्येति मूलरूपलीलारूपत्वमेवेति सर्वं सुस्थम् । अत एवोपक्रमे केशवपदेन बाललीलासौन्दर्य- मेव द्योतितमिति । यशोदोत्सङ्गलालितमेव मूलरूपमिति प्रथमं मूलरूपनामैवोक्तम् । एतेन तत्तत् स्वरूप सा सा लीला ते ते लीलान्त पातिनो भक्ता सर्वदा तथैव लीलासहिता एव तिष्ठन्तीति सर्वमवदातम् ॥ १ ॥

ननु कृष्णशब्देन परं वस्तूच्यते इत्युक्तम् । तद्वस्तुस्वरूप कीदृशमिति जिज्ञासोत्पद्यते । किञ्च । मूलरूप स्वलौकिकम्, भक्तास्तु जीवा, कथ तेषा मूलरूपनित्यलीलान्त पातित्वमित्या शङ्कानिरासायाग्रिमं नामाहु ।

**नराकृतये नम** इति ॥ २ ॥

नरवदाकृतिर्यस्येति । लौकिक एव दृष्टान्त, परन्तु कृष्णशब्देन सदानन्दरूपैव नराकृ- ति न तु लौकिकीति सूचितम् । किञ्च । नराकृतित्वकथनेन मूलभूत पुरुष स एवैक, अन्ये तु दृष्टान्तार्थं नैनैर पुरुषीकृता, न तु पुरुषा इति सूचितम् । अत एव सर्वेषा पतित्वेन तस्यैव भजनमुक्तम् । स्त्रिया पतिभजनवत् । अस्मिन्पक्षे नररूपा आकृतिर्यस्येति पदसम्बन्ध । द्वितीयाशंका परिहरन्ति **नराकृतय** इति । नरा नरणा समूहो नारं जीवसमूह इत्युक्तत्वान्नरपदेन भक्ताना जीवा आकृतिश्च तद्रूप । तेन भक्ताना देहप्राणेन्द्रियान्त करणजीवात्मादिरूप श्रीकृ- ष्ण एवेति । तेषामपि स्वरूपभूतत्वेनालौकिकत्वमेवेति ' तमद्भुतमि ' त्यस्य विवरणे ' आत्मा कार्यं च भूतानी ' त्यादिकारिकाभिर्निरूपितम् ॥ २ ॥

तर्हि परब्रह्मत्वेन यो भगवान् स कथ नान्यो भविष्यतीति तत्राहु ।

**परब्रह्मणे नम** इति ॥ ३ ॥

इदमेव परब्रह्म, न त्वन्य । अन्यत्रापि यद्ब्रह्मपदं तदक्षरम् । एतद्विभूतिरूपमेव ज्ञेयम् । अत एव परपदमुक्तम् । 'अक्षरादपि चोत्तम' पर पुरुषोत्तम इत्यर्थ । एतेन लोकवेदप्रथितोप्युक्त । श्रीकृष्णपदेन पूर्वं तदतीत उक्त ॥ ३ ॥

एवं सति उभयरूपोपि मूलभूत एव । अवतारलीलामपि स एव तत्तदंशेन करोतीत्यग्रे तत्तज्ज्ञापकं नामाहु ।

**यदुकुलचूडामणये नम** इति ॥ ४ ॥

मथुरालीला द्वारिकालीला च नित्यैवेति तत्सूचकं मूलरूपस्यैवेद नाम । अन्यथा साम्प्रत प्राकट्याभावादेतादृशं नामादावेव न निरूपयेयु । तेन यथा लोकवेदातीतस्वरूपे व्रजपतित्वं नन्दनन्दनत्वं यशोदोत्सङ्गलालितत्वमपि सर्वं नित्यलीलान्त पाति नित्यमेव, तथा लोकवेदप्रसिद्धेपि यदुकुलचूडामणित्ववसुदेवदेवकीनन्दनत्वादिकमपि नित्यमेवेति ज्ञेयम् । अत एव 'यदूना निजनाथाना' मित्युक्तं योगमायाज्ञापने भगवता । नोचेत् प्राकट्यानन्तर नाथत्वसम्भवे तथा न वदेदिति भाव । एतत्पुन श्रीमद्वसुदेवचरणै स्तुतौ स्फुटीकृत, 'स एव स्वप्रकृत्येद' मित्यत्र सुबोधिन्या द्रष्टव्यम् । तथा च पदसम्बन्ध । यदुकुलस्य चूडामणि शिरोमणिरित्यर्थ । तेन यदुकुलस्य शिरोभूषणत्वकथनेन राजसभक्तनिरोधात्मिका सर्वा राजलीला अपि नित्या एव ज्ञेया । अत एव 'जयति जननिवास' इत्यत्र सर्वासा लीलाना नित्यत्व जयतीति पदेन ज्ञापितम् । एव सति तस्यैव लोके प्राकट्यकरणे लोकेपि यदुकुलचूडामणित्व प्रथिते भवतीति भाव । मणिर्यथा तदुत्कर्षख्यापको भवति, तथा भगवानपि यदुकुलोत्कर्षख्यापक इत्यर्थ । एवमस्मिन्नाम्नि 'यदोश्च' त्यारम्य 'मायामनुष्यस्य वदस्व' त्यन्तप्रश्नस्य सर्वचरित्राणा प्रस्तावना कृतेति ज्ञेयम् । तेन पूर्णस्यैव तत्तद्व्यूहांशेन तत्तत्कार्यकरणात्तथातथा नामनिरूपणमिति भाव ॥ ४ ॥

अत परमावतारचरित्रोपक्रमज्ञापक नाम निरूपयन्ति ।

**वसुदेवनन्दनाय नम** इति ॥ ५ ॥

इदमपि नित्य मूलरूपमेव नाम । 'वसुदेवगृहे साक्षात् जनिष्यत इत्युक्तत्वात् । स एव मायाज्ञापनानन्तर 'माविवेशांशभागेने' त्युक्त्यनन्तरं तन्नन्दनोपि जात इति भाव्यर्थसूचकमुक्तम् । अत एव 'स बिभ्रत्पौरुषं धाम' इत्यत्र वसुदेवस्य परमानन्दकारिणी काप्यलौकिकी शोभोक्ता । नन्दन आनन्दकारक इति वा नामार्थो ज्ञेय । किञ्च । वसुदेवस्तु शुद्धसत्त्वात्मक । शुद्धसत्त्वं तु भगवत आधारभूतोऽलौकिको नित्यो गुणस्तदधिष्ठायैव प्रकटीभवतीति तन्नन्दनत्वमपि नित्यं मूलभूतमेवेति ज्ञापितम् । अन्यथा प्राकट्यात् पूर्वं तन्नन्दनत्वं न वदेयु ॥५॥

ततोऽग्रेऽवतारप्रयोजनसूचकं नामाहु ।

**भूमीहिंशभारहराय नम** इति ॥ ६ ॥

भूमिर्भक्ता तस्या क्लेश साक्षात्पूर्णप्राकट्ये तच्चरणसम्बन्धेन निवर्तेत इति रिङ्गणलीलाया स्फुटीभविष्यतीत्यवतारप्रयोजनमुक्तम् । भूमे क्लेशानिवृत्तिस्वरूपेण । भारहरणं सकर्षणाशेनेति विवेक । ' गौर्भूत्वे ' त्यारभ्य ' पुरैव पुंसे ' त्यन्तोद्यमसूचकं नामेति ज्ञेयम् ॥ ६ ॥

अत परं भगवदाज्ञापकं नामाहु ।

**पुण्यश्रवणकीर्तनाय नम** इति ॥ ७ ॥

पुण्य भाग्यरूपं पापनिवर्तकं वा श्रवण कीर्तनं च यस्येति । ' गा पौरुषीं मे श्रृणुतामरा ' इत्यारभ्य भगवद्वाक्यश्रवणानन्तरं कीर्तन ब्रह्मणो देवान्प्रति भूमिं प्रति च तत्कथनं, ततस्तेषा च तद्वाक्यश्रवणं, तत पुन कीर्तनं भूमिभाग्याभिनन्दनरूपं ज्ञेयम् । एतदेवोक्त विवरणे 'अनेन वृत्तान्तेन भूमि कृतार्था जाते ति । पूर्वं भगवदागमनं भूमाधसम्भावितमधुना जातमिति भाग्याभिनन्दनं युक्तमिति ॥ ७ ॥

ततो ब्रह्मद्वारा देवाज्ञापनानन्तरं भगवानपि साक्षाद्वसुदेवे प्राविशत्तद्द्वारा देवक्यामिति तज्ज्ञापकं नाम निरूपयन्ति ।

**कलिमलसंहृतिकलनयश पुञ्जाय नम** इति ॥ ८ ॥

अय भाव । भगवत्प्रवेशानन्तरमलौकिकी काचित्प्रभा जाता वसुदेवदेवक्यो , तत्प्रभा दर्शनमात्रेण कसस्य स्वहन्तृत्वज्ञाने जातेपि विवेको जात इति तदपराधान्निवृत्त इत्युक्तं ' इति घोरतमाद्भावादि ति मूले । य पूर्वं महादुष्टभाव स प्रकटज्ञानेपि ततो निवृत्त इति भगवदनुभाव एव जात । एवं सति पदसम्बन्ध । कलिरूप पापरूप कंस तस्य मल पाप रूपो दुष्टो भावस्तस्य संहृति सम्यक् हननं तत्कलयति करोति तादृशो यश पुञ्जो यस्य । पुञ्जपदेनेदं तु साधारणत प्रथममेव यश प्रकटीकृतमीदृग्विधान्यनन्तान्यसाधारणानि यशांसि पुञ्जीभूतानि सन्तीति ज्ञापितम् । अथवा । संहृति समूह तं कलयति दूरीकरोतीत्यपि सम्बन्धो ज्ञेय । अयमेव महानुभावो निरूपित । अथवा । पूर्वं वसुदेवदेवक्यो कंसकृतक्लेशेन महती चिन्ता स्थिता, भगवत्प्रवेशे सा सर्वापि निवृत्तेत्यपि एतन्नाम्ना सूचितम् । तथा चोक्तं ' दुरासदो दुर्विषद ' इत्यादिना मूले ॥ ८॥

अत परमावतारस्य मुख्यप्रयोजनज्ञापकं नामाहु —

**भक्तिमार्गप्रवर्तकाय नम** इति ॥ ९ ॥

भक्तिमार्गस्त्वत्र मधुराख्या पूर्वं कर्मनिष्ठितास्तत्प्रवर्तकास्तेषामपि भगवदीयत्वान्निरोधार्थं तदिच्छया निमित्तम् कंसद्वारा तं निवार्य कं सारयतीत्यनेन तेषा फलदानार्थं भक्तिमार्गं प्रवर्त्य सर्वागोचरे प्रादुर्भूय शुद्धसत्त्वात्मकमूतयोरानन्दं दत्वा भक्तिमार्ग प्रवर्तित , ततो मुदाप्लुतो गवामयुतं मनसा दत्वा माहात्म्यज्ञानपूर्वकस्नेहाकुलतयोक्तं ' समुद्विजे भवद्धेतो कंसादहमधीरधी रित्यत्र । अन्यथा न वदेदिति भाव । किञ्च । शुद्धसत्त्वात्मकभगवदाधारभूतस्य अन्यथा हेयत्व वृत्तिरेव न स्यात् , शारीरा मानसा दिव्या वैयासे ये च मानुषा । भौतिकाश्च कथं क्लेशा बाधन्ते हरि

संश्रयादित्यादिबाधशंकानिराकरणपूर्वकं भगवता अंगीकारार्थमेव तथा कृतम् । 'यस्याहमनुगृह्णामी' त्यादिवाक्यात्स्वननारपृथक्कृत्यागीकृतवानतो भगवदिच्छया सर्वं घटते इति भाव ५ अन्त प्रवेशानन्तरं वसुदेवदेवकीनिरोधस्तु जात इति भक्तिमार्गप्रवृत्तिर्जातेति तादृश नामोक्तमिति भाव ॥ ९ ॥

ननु भक्तिप्रवृत्तावपि सर्वेषा फलं कीदृशं भविष्यति, एकरूपमेव बहुरूपं वेत्याशंक्या मिमं नामाहु ।

**भक्तजनकल्पवृक्षाय नम** इति ॥ १० ॥

भक्तजनाना कल्पवृक्षरूप । कल्पवृक्षो यथा यस्याकाक्षा तथा ता पूरयति, तथा यादृशो भक्तो यया रीत्या भजते, तादृशमेव तस्मै फलं ददातीति भाव । एतत्सर्वं गर्भस्तुतौ स्फुटी कृतमिति तत्सूचक नाम ज्ञेयमिदम् ॥ १० ॥

अत परं साक्षादाविर्भूतस्य नामाहु ।

**देवकीनन्दनाय नम** इति ॥ ११ ॥

अकस्मात्साक्षात्परमानन्दस्वरूपप्राकट्ये तस्या परमानन्द एव जात इति तथैव नामोक्तम् । किञ्च । देवक्या सर्वदेवतासान्निध्यं 'देवक्या देवरूपिण्यामि' त्यनेनोक्तम् । तेन प्राकट्यसमये सर्वेषा देवाना स्वत एवानन्दाविर्भावो जात इति युक्तमेवेत्यप्येतन्नाम्ना सूच्यते । एवं सति 'अथ सर्वगुणोपेत' इत्यारभ्य 'प्राच्या दिशीन्दुरिवे' त्यन्तश्लोकतात्पर्यद्योतकमिदं नामेति ज्ञेयम् । तेन यथा प्राच्यामिन्दुप्राकट्य, तथा देवक्या पुरुषोत्तमस्य । स यथा रात्रा वेव तत्रापि ताराकाणामानन्ददायी, तथायमपि स्त्रीणामग्रे भविष्यतीति सूचितम् । अत एव स्त्रीवाचकत्वेन देवकीपदमुक्तम् । इद तु मूलरूपमेवेत्यस्यैवावतारत्वं चेति तत्तत्कार्यार्थे तत्तद्रूपेण सहावतार इति देवक्या प्रद्युम्नाश इति सूचकमिदं नामेति बाललीलान्त पातित्वमपि सूचितम् । अत एव पुत्रत्वद्योतकनन्दनपद दत्तम् । तथाचोक्त 'जायमाने जनार्दने' इत्यस्य विवरणे । एवं सन्दर्भेऽवतारत्रयमिति । धर्मरक्षकत्वेनानिरुद्ध । मुक्तिदानार्थमज्ञान निवृत्तिद्वारा संकर्षण । देवक्या प्रद्युम्न इति ॥ ११ ॥

एवं सकलकलापूर्ण सच्चिदानन्दविग्रहो भगवान् देवकीवसुदेवयोरग्रेऽकस्मात्प्रादुर्भूत इति अग्रे आश्चर्यवर्णनमिति द्योतकं नामाहु ।

**वसुदेवदेवकीपुण्यपुञ्जफलाय नम** इति ॥ १२ ॥

वसुदेवदेवक्यो पुण्याना पुञ्ज राशि । पुण्यपदेन भाग्यमपि सूचितम् । भाग्यव्यतिरेकेणैतादृशं फलं न भवति । तस्य फलरूप एवायं प्रकट । भाग्याना पुण्याना च तत्रापि चिर सञ्चिताना राशीभूताना फलरूप । न तु साधारणानामित्यर्थ । एतेन फलस्यालौकिकत्वात्तत्कारणभूतभाग्यानामप्यलौकिकत्वं सूचितम् । कार्यकारणयोरेकजातीयत्वनियमात् । यद्यपि पूर्वजन्मन्येताभ्या परमं तप कृतं, तथापि तपस्तु साधनं भवति । भगवांस्तु साधनासाध्य इति

मूलेच्छाया एव कारणत्वाद्वरदानेन तपसोप्यलौकिककरणत्वाद्भाग्यानामप्यलौकिकत्वं सम्पन्न मिति तत्फलरूपत्वमेवेति भाव । अथवा । वसुदेव शुद्धसत्त्वात्मक भगवदाविर्भावस्थान भूत । देवकी सर्वदेवतामयी विष्णुरूपा चेति सर्वेषा भाग्याना समुदायोत्र निरूपित । अत एव पुञ्जपदम् । तदा तत्फलरूपत्वेनाविर्भावो युक्त एवेति भाव । यद्यपि सर्वेषामर्थे प्रादुर्भावस्तथापि प्रादुर्भावस्थानरूपावेतावेवेत्येतद्भाग्यफलरूपत्वमेवोक्तम् । अत एवाग्रे बाललीलानुभवोऽप्यान्तरो मनोरथात्मको निरूपित ' एतावति दिनान्यासन्नि ' त्यादिकारिकाभि ॥ १२ ॥

यद्यपि भगवानखिलालौकिकधर्मप्राकट्यसहित एव प्रकटस्तथापि तत्तद्भक्ताना तत्तन्मनोरथपूरण कर्तव्यमिति सर्वदा लौकिकधर्मप्राकट्ये भक्ताना तन्माहात्म्यज्ञानेन मुक्तिरेवस्यान्न भक्तिमार्गरीत्या स्वरूपानुभव इति भक्तेषु माहात्म्यज्ञानेपि लौकिकभाव एव दृढीकृत इति तादृश नामाहु ।

## देवकीमनःप्रमोदजनकाय नम इति ॥ १३ ॥

एतावत्पर्यं तमलौकिकरूप दृष्ट्वा परमानन्देनाश्चर्यरसे मग्नैव स्थिता । अत पर तादृशे पुत्रबुद्धिरेवाभून्न तु माहात्म्यबुद्धि । एतादृशोय मम पुत्र इति स्नेहरस एवाविर्भूत । अत एव 'जन्म ते मय्यसौ पापो मा विद्यात्' ' उपसहर विश्वात्मन्' ' समुद्विजे भवद्धेतो 'रित्यादि प्रार्थना । ततो भगवाँस्तयो पश्यतोरेव प्राकृत शिशुर्बभूव । अच्छिन्ननाल बस्तिसहित । तदा देवकीमनसि प्रमोदो जात । अलौकिके धर्मे प्रकटे गोपयितु न शक्यते, रूपान्तरे त्वन्यत्रापि स्थापयितु शक्यत इति कंसकृतोपद्रवशंकाजनितोद्वेगस्य निवृत्ते पुत्रवात्सल्यरूपधर्मे प्रकटे प्रमोद सिद्ध इति देवक्या मनस प्रकृष्टो मोदस्तज्जनकाय ॥ १३ ॥

ननु साक्षाद्भगवति प्रकटे तु तत्त्वबुद्धि कथ भवेत्तत्राहु ।

## ब्रह्मादिभक्तवाक्यपरिपालकाय नम इति ॥ १४ ॥

अयं भाव । एतौ ब्रह्मणा प्रजोत्पादनार्थमाज्ञप्तौ, तदा पुन परमं तप कृतवन्तौ, भगवदात्मकतया तप कृतमिति भगवा प्रसन्नो जात ,तथापि प्रजासर्गार्थमाज्ञप्ताविति कामनया तप कृतमिति भगवत्स्वरूपाज्ञानेन परमसौन्दर्यातिशययुक्तं भगवन्तं दृष्ट्वापि तत्सदृशं सुतमेव वृतवन्तौ तन्मात्त्रयं भगवानेव पुत्ररूपत्वेन प्रकट पृश्निगर्भो वामनो देवकीनन्दनश्चेति । इदानीमपि प्रद्युम्नादीन सृष्टिमेव करिष्यतीति ब्रह्माज्ञापरिपालनं कृतम् । तथा च ब्रह्मादीना भक्ताना वाक्यं प्रजासर्गकरणरूपं तस्य परिपालक इति लौकिकभाव एवोत्पादितो, न तु भगवद्भाव । अत एव 'मोहितौ मम मायये'त्युक्तम् । अथवा । ब्रह्मादिप्रार्थनायामहं प्रादुर्भविष्यामीति पूर्वं यद्वा वयमुक्तं, तस्य परिपालकाय सत्यप्रतिज्ञायेत्यर्थ । अत एव 'विज्ञनसार्थित इत्यादि वचनम् । न केवलं ब्रह्मवाक्यमेव कृतं, किन्तु सर्वेषा भक्ताना यद्देयं प्रतिज्ञातं तस्य सर्वस्य पालक इति आदिशब्देन परीत्युपमर्गेण च ज्ञापितम् । एवं सति मुख्यतया निरुद्धभक्तेभ्य आनंददानार्थमाविर्भाव इति प्राकृतशिशुर्भूत्वा अलौकिकवेदातीतमदानंदस्वरूपीभूय व्रजे गमन

मिति निरूपितम् । यद्यप्यत्र साक्षात्पूर्णप्राकट्यानन्तरं तादृशानन्देन तत्स्वरूपावलोकनक्रमेण ' तमद्भुतं बालकं ' मित्यादिनाऽस्य कथनं युक्तम् । न तु तद्विहाय पूर्वमेव बभूव प्राकृत शिशुरित्येतत्सामयिकनामकथन, तथापि ' पुरुषोत्तमस्तु नंदगृह एवे ' ति वाक्याल्लीलास्थ भक्तानामर्थे मुख्यतया तत्रैव प्राकट्यं, परं तु मायावरणसहितं, राजससात्त्विकभक्तानामपि निरोध कर्तव्य । वंशसंबंधिकार्यं भूभारहरणादिकार्यं च कर्तव्यमिति वसुदेवदेवकीगृहे तदावरणं दूरीकृत्य प्रादुर्भूत । एतत्कार्यं त्वधुना न कर्तुं शक्यम् , 'उपसहर' । 'समुद्विजे' इत्यादिवच नानुपपत्ते । अतस्तत्स्वरूपमन्तर्भाव्य तद्रतीतं सदानन्दस्वरूपं प्रकटीकृत्य व्रजमागतवानिति तदकथनं स्वरूपकार्यकारणाभावात् । किंच । आदौ भगवान्मुग्धभावप्रदर्शनेन भक्ताना लौकिकभावस्थापनपूर्वकं लीला कृतवान्न तु माहात्म्यज्ञापनपूर्वकमन्यथा बाललीलानुकरण न स्यात् । यद्यपि पूतनादिमारणे माहात्म्यख्यापकानि नामानि बाललीलायामुक्तानि, प्रौढली लाया तु माहात्म्यज्ञानपूर्वक एव स्नेहो दृढीकर्तव्य इति तत्रोक्तानीति सर्वमवदातम् ॥ १९ ॥

अत परं मथुरातो निर्गमनसमये मायाकार्यं वृष्टिगर्जनादिकं जात तद्वसुदेवस्यापि खेदहेतुर्भवतीति तन्निवारणार्थं 'शेषोन्वगादि' ति तत्सूचक नामाहु ।

**शेषादिभक्तसेवितचरणाय नम** इति ॥ १९ ॥

आदिपदेन मायावृष्टिगर्जनादयो ज्ञेया । माया सर्वव्यामोहकर्त्री । वृष्टिर्गर्जनं च सर्वेषामनुत्थाने हेतु । तत्राप्युपांशुगर्जनम् । अन्यथाधिकगर्जनेनैव जागरण स्यादित्येतत्सर्वं सेवारूपमेवेति तद्यज्ञकमादिपदं दत्तम् । नो चेत्तत्समये शेषव्यतिरिक्तस्याभावादादिपदमप्रयो जनकं स्यादिति भाव । शेषो यथा सर्वदा शय्यादिरूपत्वेन सेवक । तथा मायाप्येव कार्ये साधिका दासीवदिति सर्वं सुस्थम् । यद्यपि वृष्ट्यादिकार्यं प्रथम, पश्चाच्छेषागमन, तथापि वृष्ट्यादेर्वसुदेवस्य तु खेदहेतुत्वाद्गौणत्वम् । शेषस्य तन्निवारकत्वान्मुख्यत्वमिति प्रथमं शेष एवोक्त । एवं शेषस्य निरोध एव निरूपितस्तदर्थमेव प्रकट इति ॥ १९ ॥

अत परं यमुनानिकटे समागतस्य तन्निरोधकर्तृकं नामाहु ।

**कालिन्दीवेगहर्त्रे नम** इति ॥ ११ ॥

कालिन्द्या यो वेग स्वभावकृत कालकृतश्चेति द्विविध । तदुक्तं ' भयानकावर्ते ' नि श्लोकविवरणे । तस्य हर्ता तादृशाय । एतेनोभयदोषानपि दूरीकृत्य पश्चात्स्वाभिमुखीं कृतवानिति सूचितम् । एवंकरणे हेतु कालिन्दीति । यत कलिन्दस्य पुत्री । स तु कलिं द्यतीति कलिखंडनैक स्वभावस्तत्पुत्र्यपि तादृश्यपेक्षिता । सा चेत् त्रिदोषग्रस्ता प्रवाहरूपेत्यनुचितमिति करुणया प्रवाह स्थितिं त्याजयित्वा स्वसमुखीकृतवानिति भाव । अत एव मूलस्थयमुनापदं विहाय नाम्नि कालिन्दीपदमुक्तम् । तेन स्वभावपरावर्तकत्वं भगवत उक्तम् । अत परमियमपि पितृधर्म वती जातेति पितृनाम्ना निर्देश कृत । एवं प्रवाहस्थोपि भगवत्सम्मुखो भवति चेत्तदा पूर्वं स्वभावं विहायोत्तमस्वभावो भवति, स्वयं पुनरन्येषामपि दोषान्दूरीकृत्योत्तमस्वभावं करोतीति

सूचितम् । कालिन्दीपदेनान्योपि भाव सूच्यते । तथा हि । कलिर्भगवता सह कलह भक्तानामन्योन्यकलहो वा त द्यति खण्डयति तादृशी कालिन्दी । कलहस्तु भगवदाविर्भावानन्तर तत्सयोगे मति भवेन्न तदभावात् । कलहाभावेन कथ मम कलहखण्डनरूपो धर्म सेत्स्यतीति चिन्ताजनितो यस्तस्या वेगस्तस्य हर्ता । भगवत्प्रादुर्भावो जात इति सयोगो भविष्यति, कलहोपि भविष्यति, मदीयो धर्मोपि सेत्स्यतीति भाव । अत एव सन्तोषेण मार्ग ददौ । एतदेवाग्रे 'लक्ष्मीभि सह क्रीडा करिष्यती'ति सन्तोषादेव मार्ग ददाविति विवरणे विवृतम् । किञ्च । सर्वेषा गतिप्रदत्वान्मार्गदाता भगवान्, भगवतोपि मार्गदायिनी कालिन्दीति परमोत्कर्षो निरूपित ॥ १६ ॥

ततो मार्गवशन्नदीमुत्तीर्य गोकुले गतस्य नामाहु ।

**योगमायाधिपतये नम** इति ॥ १७ ॥

भक्तेषु योगार्थ या माया अन्तरङ्गा तस्या अधिपति अध्यापकोध्यक्ष इत्यर्थ । अत एव आज्ञार्थं कृतवती यशोदाया स्वप्राकट्य विधाय सर्वान् विमोहयतीति भाव । किञ्च । भगवानधिपतिरिति तदाज्ञया स्वयमन्यत्रापि गतवतीत्यपि सूचितम् ॥ १७ ॥

ततो यशोदाशयने स्थापनानन्तरं गोकुलपतित्वेन प्रकट इति तादृश नामाहु ।

**गोकुलपतये नम** इति ॥ १८ ॥

अय भाव । संपूर्णगोकुलस्य राजा नन्द । स चैतावत्पर्यंतमपुत्र । पुत्रे जाते एवाग्रेपि तत्पतित्वं निर्वहतीति प्रथम गोकुलपतित्वेनैव नामोक्तम् । सर्वथा पतित्वधर्मो भगवत्येवेति पतिपद दूराभिप्रायकमिति भाव । एतेन सपूर्णगोकुल स्वपरिग्रहत्वेनैव गृहीतमित्यपि सूचितम्। अत एवाग्रेपि ' सनाथ मत्परिग्रहमि ' त्युक्तम्। एव सामान्यत सर्वस्यैव गोकुलपति पतिवद्रक्षक इत्युक्तम् ॥ १८ ॥

अत परं यत्र पतित्वधर्म प्रकटीकृतस्तद्विशिष्ट नामाहु ।

**गोपीजनवल्लभाय नम** इति ॥ १९ ॥

गोपीजनाना वल्लभ परमप्रिय । गोपीजनाश्च वल्लभा यस्येति परस्परं भावस्यैक्यं निरूपितम् । तेनोभयोरपि परमरसानन्दाविर्भावो जात इति ज्ञापितम् । यथा चिरकालमिलितयो प्रिययोस्तथेति भाव । एतदेवोक्त ' नवकुसुमे ' त्यस्य तात्पर्यव्यञ्जके 'गन्धो रूपं तथा स्पर्श' इत्यनेन ॥ १९ ॥

ततस्तदानन्दजनितोत्सवज्ञापकं नामाहु ।

**गोकुलोत्सवाय नम** इति ॥ २० ॥

संपूर्णगोकुलस्य गोकुले वा उत्सवरूप प्रकटोयमिति सर्वेषां मनसि परमानन्देन गतस्मये उत्सवो जात इति भगवदनुभाव एवोक्त । अथवा । गोकुलस्य उत्सवो यस्य तादृशाय ।

एवं सत्यत्र भक्तावलोकनेन भगवतोप्युत्सवो जात इति सूचितम्। अत एव सर्वेषां सकलभूषणालङ्करणपूर्वकमागमनमुक्तम्। एवं 'नन्दस्त्वात्मज' इत्यारभ्य 'नवनीतैश्च चिक्षिपु' रित्यन्तोत्सवसूचकमिदं नाम ज्ञेयम्॥ २०॥

ततोग्रे दानमहोत्सवसूचकं नामाहु ।

**अखिलाशापूरकाय नम** इति॥ २१॥

अखिलानामाशाया पूरक। केचन ब्राह्मणा विद्यावंत। केचन याचकाश्च सूतमागधबन्दिन। काश्चित्स्त्रियोपि। ते सर्वे नन्दस्य गृहे पुत्रो भवति चेत्तदा वयमेतदेव याचयाम इति, यशोदाया पुत्रश्चेद्भवेत्तदा वयमिदमेव मनोभिलषितं ग्रहीष्याम इत्याशावन्त स्थिता। भक्ताना प्रादुर्भाव एवाभिलषित इति स्वप्राकट्येन सर्वेषा आशापूरको जात। अत एव नन्दोपि महामना जात इति यस्य यदभिलषितं तदेव तस्मै ददाति। नन्दद्वारा तदाशापूरको जात इति भाव। भक्तानामाशा स्वयं साक्षात्पूरयिष्यतीत्याशापूरकस्वधर्मो भगवत एव निरूपित। किञ्च। 'अवाद्यन्त विचित्राणि वादित्राणी' ति वाक्यात्तदुद्घोषेणाखिलासु दिक्षु कीर्ति पूरिता। भगवदाविर्भावो जात इत्याशापदेन सूचितम्। एतेनासुरव्यतिरिक्ताना सर्वेषामानंदो जात इति ज्ञापितम्॥ २१॥

अत पर यशोदाया अप्याशापूरकं नामाहु ।

**यशोदास्तनन्धयाय नम** इति॥ २२॥

यशोदाया सर्वदेदमेव दु खं स्थितं, कदा मे पुत्रो भविष्यति, कदा स्तनपानलालनादिकं करिष्यामीति। एतदेवोक्तं 'यच्च दु ख यशोदाया' इति निरोधवर्णने। तद्दु खमिदानीं गतमिति साऽऽशा पूरितेति तादृशं नामोक्तम्। एवं सति नालच्छेदनानन्तरं स्नानानन्तरं शयने मातृपार्श्वे स्थापित पुत्र स्वत एव स्तनाकाङ्क्षी प्रवर्तते, माता वा स्वत स्तनं पाययतीति तत्सामयिक नाम ज्ञेयम्। परं त्वाशापूरकत्वात्तत्प्रकरणे धृतमिति सर्वमनवद्यम्॥ २२॥

एवमेव नन्दस्याशापूरको जात इति तादृश नामाहु ।

**नन्दमनोमोदकाय नम** इति॥ २३॥

नन्दस्यापि पुत्रोत्पत्त्याशया तत्तन्मनोरथा स्थितास्ते इदानीं पूर्णा जाता इति मत्वेतादृशं दिनं जातं परमभाग्ययोगेनेति प्रमोदेनाक्रीडनकाद्युत्तमवस्त्वानयनार्थं मथुरागमनमिति तत्सूचकमिदं नामेति ज्ञेयम्। एतदेवोक्त 'भगवदर्थमुत्तमवस्तूनामानयनार्थं मथुरां गतवानि' तिविवरणे।

एतन्मध्ये पूतना आगतेति ता मारितवानिति तादृशं नामाहु ।

**पूतनान्तकाय नम** इति॥ २४॥

अय भाव। भगवान् भक्तानामानन्ददानार्थं निरोधार्थं च प्रकट इत्युभयमपि पञ्चपर्वा विद्यानिवृत्तिं विना न सम्भवतीति प्रथममविद्यारूपा पूतनैव मारिता। तथाचोक्तम्। 'अविद्या पूतना नष्टा'। 'अत परं निरोध सुगम' इति। किञ्च। एतद्वधेन भगवत्सम्बन्धिबालानामपि रक्षा कृता। एतदेवोक्त 'मेकं भगवत कार्यं बहूनां च साधकमिति। यद्यपीदमलौकिक-

मेव माहात्म्य दर्शितमवस्थासाधनविरुद्धत्वात्, तथापि मुग्धभावेन कार्य कृतवानिति सर्वेषु लौकिकभाव एव स्थापितो, न त्वलौकिक ज्ञानं जनित बाललीलायामिति सर्वमनवद्यम् ।

नन्वेव मुग्धभावे मारणप्रकारज्ञान मुक्तिदानं च कथ मभवेदित्याशङ्क्य हेतुभूत नामाहु ।

**सुकृतज्ञाय नम** इति ॥ २९ ॥

सुष्ठु शोभन सुतरा वा यत्कर्तव्य तज्जानाति । एतत्सर्वं 'गाढ कराभ्या भगवा'नित्य स्मिन् श्लोके भगवत्पदार्थकथनेन निरूपितम् । तत्रैश्वर्यत्वात्स्त्रीमारणदोष परिहृत । वीर्य वत्त्वात्तन्मारणादिसामर्थ्यम् । यश स्वित्वादलौकिकचरित्रकरणम् । श्रीयुक्तत्वात्न प्रकारान्तरेण मारणम् । तादृशशोभानाशप्रसङ्गात् । ज्ञानित्वात्तस्य दोषपरिज्ञानेन मारणावश्यकत्वम् । वैराग्य युक्तत्वाद्दैत्यपक्षवधे न दोष इति हेतुफक्किमिति । अत एव गुणैर्धर्मिणा च मोक्षदानमप्युक्तम् । अथवा । सुष्ठु कृत यत्पूतनायास्तज्जानाति । अय भाव । इय समस्तव्रजस्थबालकान्भ क्षितवती तस्मिन्समये अय भगवानिति सर्वेषु भगवद्बुद्ध्या भक्षणं कृतमिति तावन्मात्र शोभन कृतज्ञानेन मुक्तिर्दत्ता । किञ्च । भगवद्बुद्ध्या ग्रहणे बालकाना तदन्त प्रवेशेपि नासुरभावप्रवेशो भूदित्यपि सुकृतत्वेन जानातीति मोक्षदानम् । एतेनैकप्रकारेणापि भगवत्सबन्धश्चेत्तदा भगवान् स्वानुरूप फल ददातीति भाव । किञ्च । पूतना भगवद्भ्रमेण बालकान्भक्षितवतीति मदर्थे मा रिताना मन्सम्बन्धिनामेषामासुरसंबन्धोभूदिति सुष्ठु कृत जानातीत्यपि ज्ञापनार्थं तथोक्तम् । अत एव प्राणद्वारा तान्स्वार्तर्निनाय, तस्या अपि मुक्तिर्दत्ता, पुनराविश्य तथा करणाभावार्थमिति भाव ।

अत एवैतन्नामोक्त्वा तत्कार्यसूचक नामाहु ।

**पूतनामोक्षदात्रे नम** इति ॥ २६ ॥

अत पर निरोध सुगम इति तत्सूचक नामाहु ।

**भक्तमनोरोधकाय नम** इति ॥ २७ ॥

एतावत्पर्यन्तमस्माभिरसावधानतया स्थितमिति मध्येगृहं तथापि बालकनिकटे इय मागता । अत परं सावधानेन स्थातव्यमिति सर्वैर्भगवन्निष्ठ चित्तं कृत्वा स्थितमिति भक्ताना निरोध कृत इत्युक्तम् । भक्तमनोरोधकायेति ॥ २७ ॥

अत परं पूतना मारणानन्तरं तस्या स्वरूपं दृष्ट्वा शब्दं च श्रुत्वा सर्वे भीता तस्या हृदये क्रीडन्त भयरहितं स्वापेक्षयोत्कृष्टं भगवन्त दृष्टवन्त इति तद्द्योतकं नामाहु ।

**गोकुलाभयदानचरित्राय नम** इति ॥ २८ ॥

गोकुलस्याभयदानार्थं चरित्रं यस्य । तस्या उरसि क्रीडया स्वस्याभयभाव सूचित इत्यन पर सर्वस्यापि गोकुलस्याभयमेवेति ज्ञापितम् । अत एव तदारभ्य जाते भयेपि भयकृत्यं न जातं, किन्तु भयकारक एव नष्ट इति भाव ॥ २८ ॥

अत परं भगवन्निरोधार्थं प्रकार इति प्रपञ्चासक्तौ स न भवतीति विशेषेण तन्निवृत्तिं करोतीति तादृशं नामाहु ।

**प्रपञ्चविस्मारकाय नम** इति ॥ २९ ॥

इदं त्वौत्थानिके कर्मणि भगवति स्नानाद्यलंकरणान्ताभ्युदयिकविधाने तदुत्सवाविष्टा यशोदा जातेति तत्सूचकं नाम ज्ञेयम्। एतेन भगवति विशेषासक्ति सूचिता। पश्चात्तादृशं वा बालकं संजातनिद्राक्षं शयने कारितवती। ततः समागतलोकसंपूजनेन भगवन्तं विस्मृत्य पुन लौकिकासक्ता जाता। एवमन्येषां ब्राह्मणादीनां तद्दत्तवस्तुग्रहणासक्तिरेव जाता, न तु भगवद्विचार इति सर्वेषां बहिर्मुखता जाता। एतदेवोक्तं 'सञ्जातनिद्राक्ष'मित्यत्र ॥ २९ ॥

भगवतो ज्ञानशक्तिनिमीलने परमार्थदृष्टिस्तिरोहिता भवतीति युक्तमेवेति सदा साक्षाद्भगवति विद्यमाने तं विहायान्यत्रासक्तिरनुचितेति तां दूरीकृतवानिति तत्सूचकं नामाहु ।

**शकटभेदनबालचरित्राय नम** इति ॥ ३० ॥

शकटभेदनरूपं बालचरित्रं यस्येति । अयं भाव । एवं लौकिकासक्ता यदा दृष्टा तदा मदीया अपि एवं बहिर्मुखा भवन्तीति रोदनं कृतवान्। तेन कार्यासिद्धिं ज्ञात्वा स्वयं स्तनार्थी चरणेन शकटमेवोदक्षिपत्। न हि भगवदुपर्यन्ये रसा स्थापयितुं शक्यन्त इति। अत एव बहिर्मुखतायां कस्यापि विनियोगो मा भवत्विति सर्वरसानां पातनम्। अत एव ' लोके स्वास्थ्य तथा वेदे ' ' लोकार्थी चेद्भजेत् ' ' त्रैवर्गिका या से ' त्यादिवचनानि निरूपितानि। किञ्च। 'अथ शयानस्ये' त्युक्त्या छायार्थं तत्र शायितो भगवान्बहिर्मुखतायां तत्संबंधिच्छायामपि नाङ्गीकृतवानित्यपि सूचितम्। तदा पुनर्लौकिकनाशात्तदुत्पातं मत्वा तद्भयेन भगवन्निष्ठा जातेति प्रपञ्चविस्मारकत्वं निरोधकर्तृत्वं चोक्तं नामद्वयेनेति भाव । पूर्वं पूतनावधे रक्षाकरणे वाग्विनियोग इति वाचनिकनिरोध सिद्ध । शकटभङ्गे भगवदर्थं कायिकव्यापारो जात इति कायिक उक्त ॥ ३० ॥

अत पर मानसो निरोध उच्यते इति तादृशं नामाहु ।

**तृणावर्तविमर्दकाय नम** इति ॥ ३१ ॥

'गोकुलं सर्वमावृण्व'न्नित्यत्र वात्यारूपेण तृणावर्तागमने सति स्वस्थापितस्थले भगवद्दर्शनेन मूर्च्छापर्यन्तं महद्दुःखे जाते मातृचरणानां तेन मनो भगवन्निष्ठमभूदिति मानसो निरोधो प्युक्त । अग्रेपि तृणावर्तमारणानन्तरं प्राप्तौ 'मृत्युमुखात्प्रमुक्त' मित्याद्युक्त्या परमाश्चर्यरसेन प्रपञ्चविस्मृतौ केवलभगवदासक्तिजनितपरमानन्देन मानस एव स उक्त इति भाव । एवमद्भुतचरित्रं दृष्ट्वा सर्वे नन्दादयो विचारितवन्त ।' एतदुक्तं ' अहो बतात्यद्भुत ' मिति। तत्र कृत्रिमभगवत्त्वज्ञानं जातं स्वपुत्रे इत्युक्तम् ॥ ३१ ॥

परन्तु यावत्पर्यन्तं भगवत्यसंभावना न निवर्तते, तावत्पर्यन्तं दृढासक्तिर्न भवतीत्यसंभावनानिवृत्त्यर्थं स्वस्मिन्नेव तादृशं रूपं प्रदर्शितवान्। तत्र पुन भक्त्या विना साक्षाद्भगवद्ज्ञानं न भवतीति प्रथमं भक्तिनिरूपकं नामाहु ।

**भक्तिस्वासक्तिजनकाय नम** इति ॥ ३२ ॥

भक्त्या कृत्वा स्वस्मिन्नासक्तिं जनयतीति तादृशाय । अयं भाव । एकस्मिन्समये पुत्र स्नेहेन स्वाङ्के पुत्रमारोप्य परमरुचिरस्मितसहित परमसौन्दर्यमनोहरमुख लालयन्ती जाता । मुखस्य स्मितसहितेन मोहकत्वं भक्तिरूपत्वेन स्वस्मिन्नेव स्नेहासक्तिजनकत्व चोक्तम् । तत्रापि भक्तिरूपत्वेन स्वकीयमपि स्नेहं ज्ञापयतीति विशेषत स्वासक्तिसाधकत्वमुक्तम् ॥ ३२ ॥

एव पूर्वं भक्तिमुक्त्वा ज्ञान निरूपयन्तस्तज्ज्ञापकमग्रिम नामाहु ।

**यशोदामोहनाशकाय नम** इति ॥ ३३ ॥

भक्त्यनन्तर स्वमुखे सर्वब्रह्माण्डं दर्शयामासेति तद्दर्शने प्रपञ्चाधारत्वेन ब्रह्मज्ञानमपि जातमित्यसभावनाबुद्धिर्निवृत्तेति तथा नामोक्तमिति भाव । परन्तु मातृचरणाना पुत्रे स्नेह स्वरूपतो यद्यप्यलौकिकस्तथापि प्रथमत एव पुत्रे लौकिकविजातीयधर्मदर्शनस्य भयजनकत्वा दन्यथा सभावनया प्राणस्थितिरेव न स्यादिति क्रमेण तथा ज्ञानसपादनार्थं तत्सर्वं तिरोधाय विस्मयरसमुत्पाद्य लौकिकसमान पुत्रत्वभावरूप एव स्थापित इति भाव । अथवा । पुत्रे तथा दर्शनेन विस्मयरसेन मुग्धेति तन्मोह नाशयित्वा पुत्रत्वभाव एव स्थापित इति तथा नामोक्तम्।

अत पर नामकरणसंबन्धिनामानि निरूपयन्ति ।

**रामानुजाय नम** इति ॥ ३४ ॥

प्रथमं रामानुजायेति नाम कथनस्याय भाव । मूले ' बालयोरनयो संस्का रान्कर्तुमर्हसी ' त्युक्त्वा नन्दस्य स्वपुत्रवसुदेवपुत्रयोर्भेदो नास्तीति ज्ञापितम् । अतिमहता परमसुहृदयाना तादृशस्वभावत्वात् । एव मातृचरणानामपि तथैव भाव इति ' कुमारास्ते प्रजोप्यय'मितिवाक्येऽग्रजपदेन सूचितम् । एव सति नन्दाभेदबुद्धिं ज्ञात्वा गर्गोपि प्रथमं रामस्यैव नामकरण कृतवान्, अन्यथा नन्दगृहे कृष्ण एव ज्येष्ठ इति तत्कथं कुर्यात् । तत्करणस्य संशयजनकत्वादपीति तदनुजत्वेन नामकथनं युक्तमेवेत्यर्थ । किञ्च । रामस्या नुज इति पूर्वं रामोत्सङ्गृहे जात पश्चादयं जात इति रामजन्मैवास्मद्भाग्यरूपं यतस्तदागम नेस्माकमपि पुत्रो जात इति राम सर्वथाग्रज एवायमनुज इति नन्दाशयद्योतकत्वेन श्रीमदा चार्यै प्रथममेतदेव नामोक्तमिति भाव । किञ्च । अत्र निरोधेन स्वासक्ति साध्या । सा स्थायीभावस्य प्रवृद्धौ भवतीति । शृङ्गाररसस्थायीभावो रतिस्तद्वर्धकत्वं स्वरूपधर्मस्तद्धर्मरूपो राम । अत एव रमयतीति राम इति रतिवर्धकत्वमुक्तं रामस्य । तादृशस्यानुज अनु पश्चा ज्जायते प्रकटो भवतीत्यर्थ । रतिवर्धकत्वेन सर्वेषा हृदि रतिं वर्धयित्वा पूर्णमन्त प्रकटी भवतीति पश्चाद्बहिरपीत्याशयेन रामानुजायेत्युक्तम् । किञ्च । रामो वेदात्मक क्रियाशक्ति रूपस्तमनुत्पश्चादित्य प्रकटो भवतीति यत्र वेदोक्तधर्मस्तत्र प्रकटीभवतीत्यर्थ । अत एव लीलाया सर्वत्र बन्देरासारित्यम् । तं पुरस्कृत्यैव लीला करोतीति तथोक्तम् । आनेशब्दारापि तथेति वा ।

अत परं भक्तान्त करणे रतिं वर्धयित्वा भावरूप सन्तत्र स्थितो भवतीति तत्सूचकं नामाहु ।

**कृष्णाय नम** इति ॥ ३५ ॥

भावात्मकमहानन्दस्वरूपायेत्यर्थः । अन्तः प्रकटीभूय स्वरूपानन्दं ददातीति भावः ॥३५॥

तत्सूचकमग्रिमं नामाहुः ।

**वासुदेवाय नमः** इति ॥ ३६ ॥

वासुदेवस्तु मोक्षदातेति प्रपञ्चविस्मृतिपूर्वकभगवदासक्त्या स्वरूपानन्दानुभवेन प्रतिक्षणं लयावस्था भवति भक्तानामिति तयोच्यते । अत्र वर्णपरत्वेन कृष्णपदार्थः । 'प्रागयं वसुदेवस्ये' ति श्लोके वसुदेवपुत्रत्वेन वासुदेवपदार्थश्च स्पष्ट एवेति तत्कथनम् । तथा च भावार्थ एव स्फुटीकृत इति भावः ॥ ३६ ॥

एवं मुख्यप्रयोजनरूपं नामत्रयमुक्त्वा गुणयोगादनन्तनामेति तत्सूचकं नामाहुः ।

**अनन्तगुणगभीराय नमः** इति ॥ ३७ ॥

अनन्तगुणैः कृत्वा गभीरस्तलस्पर्शरहितः न केनापि ज्ञातुं शक्यत इत्यर्थः । अत एव 'बहूनि सन्ति नामानि रूपाणी'त्युक्तम् ॥ ३७ ॥

एवं गुणानामगाधत्वं निरूप्य रूपाणामप्यगाधत्वमाहुः ।

**अद्भुतकर्मणे नमः** इति ॥ ३८ ॥

अद्भुतानि कर्माणि यस्य । एतेन यादृशा गुणाः यादृशानि रूपाणि सन्ति तादृशानि ज्ञात्वा तदेकनिष्ठया चिन्तनीयानीति सूचितम् ॥ ३८ ॥

नन्वद्भुतकर्मणो ज्ञानं कथं भवेदिति तज्ज्ञापकं नामाहुः ।

**गोकुलचिन्तामणये नमः** इति ॥ ३९ ॥

गोकुले यः चिन्तामणिः स यथाचिन्तनमात्रेण तत्तदिष्टप्रापकः दुःखनाशकश्च, तथायमपि चिन्तनमात्रेण तथेति भावः । तथा हि । पूतनास्तनपयःपानं यत्कृतं तद्भवता श्रेयोनिमित्तम् । यतः पञ्चपर्वाऽविद्यारूपा सा नाशिता । शकटः संसारात्मको नाशितः । अविद्याकार्यरूपो मोहात्मकश्च तृणावर्तो मारितः इति त्रिदोषदूरीकरणेनाग्रे विश्वदर्शने ज्ञानोत्पादनेन च 'एष वः श्रेय आधास्यदग्रेपि करिष्यती' ति सर्वं विवरणे विवृतमिति भावः ॥ ३९ ॥

एवं स्वरूपज्ञानेनानिष्टनिवृत्तिमुक्त्वेष्टप्राप्तिस्वरूपमाहुः ।

**गोपगोकुलनन्दनाय नमः** इति ॥ ४० ॥

गोपा गोप्यश्च गोकुलं च तेषां नन्दनः परमानन्दकर्तेत्यर्थः । गोपपदेनैव गोप्यः सूचिताः, गोप्यत्वाच्च पृथक्त्वेनोक्ताः । गोकुलपदेन च गोकुलस्थाः सर्वे सूचिताः ॥ ४० ॥

एवं विशिष्टरूपनामान्युक्त्वा समुदायेन समस्तसङ्कटनिवारकं नामाहुः ।

**भक्तसर्वदुःखनिवारकाय नमः** इति ॥ ४१ ॥

भक्तानां तत्सामयिकसकलदुःखनिवारकोऽयमेव भविष्यतीति । एतदेवोक्तं 'अनेन सर्वदुर्गाणि यूयमञ्जस्तरिष्यथे' ति । सर्वदुर्गतरणकथनेनान्तःकरणशत्रूनपि निवारयिष्यतीति सूचितम् । तदुक्तं 'पुरानेन साधवो दस्युपीडिता' इति ॥ ४१ ॥

एवं कर्मकृतं नामद्वयमुक्त्वा गुणकृतं तदाहु ।

**महानुभावाय नमः** इति ॥ ४२ ॥

'य एतस्मिन्महाभागा' इत्यस्मिन् श्लोके गुणानां महानुभावत्वं निरूपितम्, अम्बरीषादिचरित्रे तथा प्रसिद्धेरिति तत्सूचकमिदं नाम ज्ञेयम् ॥ ४२ ॥

एवं परम्परया गुणानामनुभाव उक्तः । साक्षात्स्वरूपगुणानामनुभावाः केन ज्ञातुं शक्यन्ते, तेषामनन्तत्वादिति तत्सूचकं नामाहु ।

**अचिन्त्यगुणकर्मणे नमः** इति ॥ ४३ ॥

अचिन्त्या गुणाः कर्माणि च यस्येति ॥ ४३ ॥

अतः परं यस्यैतादृशा गुणाः कर्माणि च सोयं तव पुत्र इत्युपसंहरन्तस्तत्सूचकं नामाहु ।

**नारायणाय नमः** इति ॥ ४४ ॥

एतस्यार्थो 'नारायणसमो गुणै' रित्यत्र विवृतः । विशेषतष्टिप्पण्या स्फुटीकृत इति ततोवगन्तव्यः । तत्राक्षरं पुरुषोन्तर्यामी चेति नारायणत्रयम् । ब्रह्माण्डमध्ये च नारायणत्रयमुक्तम् । यो वैकुण्ठे लक्ष्मीसहितः । यः सूर्यमण्डले सर्ववेदसहितः । यो भूमौ ब्राह्मणेषु यज्ञनारायण इति । एवं षड्भिर्नारायणैः षड्भिर्गुणैरेव समता निरूपिता । कृष्णो धर्मी निरूपित इति परमनिधानरूपोऽयमिति सावधानो भूत्वा प्रपञ्चविस्मरणपूर्वकं गोपायस्वेति गर्गोक्तैतावत्तात्पर्यज्ञापकमेतन्नामोक्तमिति भावः । विशेषतष्टिप्पण्या स्फुटीकृत'मेवं कृष्णोपि करोति व्रजसुंदरीणा' मिति ॥ ४४ ॥

एवं निरोधकर्तृत्वेन नामोत्सवसम्बन्धिनामानि निरूप्योपविष्टस्य हरेरल्पचलनात्मकलीलाविशिष्टं नामाहु ।

**व्रजाङ्गणरिङ्गणजानुचरणारविन्दाय नमः** इति ॥ ४५ ॥

इदं तु 'जानुभ्यां सह पाणिभ्यां' मित्यस्य नाम ज्ञेयम् । व्रजाङ्गणे यशोदाङ्गणे रिङ्गणमल्पगतिरूपं ययोस्तादृशौ जानू चरणारविन्दे च यस्य तादृशाय । मूले रामकेशवपदाभ्यां रतिवर्धकत्वकेशकृतसौन्दर्यातिशयवत्त्वं चाङ्गणविहरणे ज्ञापितमिति नाम्नो निरोधसाधकत्वमुक्तम् । अत्रारविन्दपदेन चरणशोभातिशयो ज्ञापितः । तत्रापि मध्येऽल्पचलनं कदाचिद्भूमौ शयान एव भवति, कदाचित्पुनरुत्थानं, उत्थाने च पुनर्गमनम्, एवमनेकधा रूपाणि ध्येयानि, हसद्रूपाणि, क्षणमुपविष्टानि, क्षणं च प्रचलितानि इत्येतत्सर्वं सुबोधिन्यां निरूपितमित्येतावदभिप्रायज्ञापकमिदं नाम ज्ञेयम् । इयं प्रथमगतिर्निरूपिता ॥ ४५ ॥

अतः परमग्रिमगतिविशेषज्ञापकं नामाहु ।

**व्रजपङ्काङ्गलेपनाय नमः** इति ॥ ४६ ॥

व्रजे यः पंकः गोमयजनितस्तस्याङ्गे लेपनं यस्य तादृशाय । रिङ्गणलीलायां बालकस्य तत्सम्बन्धः शोभाकर एव भवति लोकेपि । तत्र यस्याङ्गसम्बन्धेन पङ्कस्याङ्गरागत्वं सम्पन्नं तस्य

शोभाकरत्वे किं वाच्यम् । किञ्च । यत्र कर्दमस्याप्यलौकिकत्वं सम्पन्नं तत्र तत्सम्बन्धेऽन्येषामपि दोषनिवृत्त्याऽलौकिकत्वसंभवे क संदेह इत्यपि सूच्यते। परन्तु सबन्ध सर्वथापेक्षित । एतेन 'तावङ्घ्रियुग्ममनुसृत्ये' त्यारभ्य 'मुग्धस्मितारुपदशन' मित्येतावत्पर्यन्तं यावन्तो गतिविलासा यावन्ति तत्तन्मौग्ध्यमाधुर्यविभ्रमसहितानि रूपाणि निरूपितानि तावन्ति सर्वाणि भावनीयानीति सरलचरित्रसन्निवेशज्ञापकमिदं नामेति सूचितम् । एवमुपविष्टस्यालपचलनात्मकप्रथमगतिरूपं, ततोऽलसवलिताविसहितगतिरूपम्, ततो मात्रा सह नानाक्रियारूपं चेति लीलात्रयं नामद्वयेन निरूपितम् ॥ ४६ ॥

अत परमेतावच्चरित्रेण भक्ताना निरोधो जातो वा न वेति परीक्षार्थमग्रिमचरित्रं व्यवस्थितिलीलारूपं कृतवानिति तत्सूचकं नामाहु ।

## भक्तपरीक्षापरिपालकाय नम इति ॥ ४७ ॥

भक्ताना या परीक्षा निरोधो जातो वा न वेति तस्या परिपालक रक्षक पूरक इत्यर्थ । तादृशलीलायास्तादृग्भावोत्पादकत्वेन स्वयमेव पालको जात इति तथोक्तम् । अय भाव । एतन्नाम्नि भक्ताना मातृचरणाना च निरोध उच्यते। तत्र 'यर्ह्यङ्गने' त्यनेन स्त्रीणा, 'शृङ्गाग्निदंष्ट्री' त्यनेन मातृचरणाना । तत्र प्रथम स्त्रियस्तु त्रिविधा कौतुकाविष्टा रसाविष्टा कामाविष्टाश्चेति कौतुकाविष्टास्तद्दर्शननिष्ठा एव जाता । रसाविष्टास्तु प्रियदर्शनकटाक्षस्पर्शादिरसाविष्टा एव स्थिता । कामाविष्टास्तु एकाकी प्रिय प्राप्त इति तद्रसाविष्टा अभूवन्निति त्रिविधाना निरोध स्वरूपेणैव कृत इति परीक्षापालनमपि स्वकृतमेवेति तथोक्तमिति भाव । एवमेव मातृचरणानामपि परीक्षा 'न तच्छकन्यौ शेकाते' इत्युक्तत्वात्स्वकृतैवेति तत्रैव समावेश इत्येकमेव नामोक्तम् । अथवा । भक्तानां या परित ईक्षा अवलोकनं तास्तु सर्वसमर्थं किमपि कर्तुं न शक्नुवन्ति, रह समयावलोकनमेव कुर्वन्ति तत्परिपालक , इतस्तत आकर्षणमिषेणैकान्तं कृत्वा तन्मनोभिलषित पूरयतीति भाव । अत एवाङ्गनापद दर्शनीयकुमारलीलापदं चोक्तम् । दर्शनीयपदेन कोटिकन्दर्पलावण्यस्वरूपदर्शने तत्संबन्धाभिलाषस्तासा सूचित । अङ्गनापदेन त त्पूरकत्वं चेति तथोक्तम् । एतदेवोक्त टिप्पण्यामगं नयन्त्यङ्गे वा ॥ ४७ ॥

अत परमग्रिमसूचकं नामाहु ।

## व्रजहीरमणये नम इति ॥ ४८ ॥

व्रजे सम्पूर्णे मध्यनायक । हीरमणिर्यथा सर्वोत्कृष्टत्वेन मध्यनायको भवति, तथायमपीत्यर्थ । अथवा शिरोमणि । स यथा शिरसि सर्वोपरि विराजते, तथायमपि समस्तव्रजबालकानामुपरि विराजमान सर्वेषा प्रकाशको जात इति तथोक्तम् । इदं तु 'ततश्च भगवान्कृष्णो वयस्यैर्व्रजबालकै । सह रामो व्रजस्त्रीणां चिक्रीडे जनयन्मुद ' मित्यस्य नाम ज्ञेयम् । अत्र कृष्णो व्रजराजकुमार इति कुमारलीलायामेव राजलीला कृतवानिति । 'स्वयं राजा, रामो मन्त्री, वयस्या सेवका ' इति विवरणे विवृतमिति तत्सूचकं नामोक्तमिति भावः ॥ ४८ ॥

अत पर राजकुमारत्वेनोच्छृङ्खलचरित्रमपि कृतमिति तज्ज्ञापकं नामाहु ।

*** गोकुलधूर्तचरित्राय नम** इति ॥ ४९ ॥

गोकुले धूर्तं धूर्तवद्वा चरित्रं यस्य तादृशाय । एतत्सर्वं 'वत्सान्मुश्चन्नि' त्यारभ्य 'एवं धाष्टर्यानी' त्यन्तं निरूपितम् ॥ ४९ ॥

एवं धूर्तचरित्रकरणानन्तरमुपालम्भार्थमागतानामपि तादृशश्रीयुक्तमुखावलोकने तत्सर्वं विस्मृतं पुनर्मनोनुरञ्जनं जातमिति तत्सूचकं नामाहु ।

**भक्तवशीकरणचरित्राय नम** इति ॥ ५० ॥

एतादृशचरित्रेणापि भक्ताना वशीकरणमेव सपन्नं, न त्वन्यादिति निरोध उक्त ॥ ५० ॥

ननु स्वगृहद्रव्यहानौ कथ वशीकरणं जातमिति तज्ज्ञापकं नामाहु ।

**+ नवनीतलवाहाराय नम** इति ॥ ५१ ॥

'स्तेय स्वाद्वत्ती'ति यदुक्तं तस्येद नाम ज्ञेयम्। नवनीतस्य यो लवस्तस्याहारो यस्य तादृशाय । तास्तु भक्तास्तदर्थमेव नवनीतादिक सम्पाद्य गृहे स्थापयन्ति । तस्य लवमात्रमपि भगवद्विनियुक्त चेद्भवेत्तदा स्वकृतार्थतेति तदाहरणे द्रव्यस्यापि सार्थकत्व जात, न तु हानिरिति सन्तोषेण वशीकरणत्वमेव सिद्धमिति भाव । उपालम्भस्तु बाह्य, तत्रापि तदेव सिध्यतीति तथा । अथवा । नवनीतं तु भगवतोत्यन्तं प्रियं रसत्वात्। तस्य यद्यत्प्रियं तत्तत्स्वकीयं लवमात्रमपि तद्विनियुक्त भवेच्चेत्तदा सफलत्वमिति तथोक्तम् । यद्वा । नवनीतं स्नेह एव, रसत्वात्। तस्य लवो यत्र तादृशस्याहरति अङ्गीकरोति अभ्यहरति वस्त्वित्यर्थ । नान्यस्येति धूर्तचरित्रैरपि यस्य संतोषस्तदा तस्य स्नेहपरीक्षा जातेति स्नेहादेव तद्ग्रहणे परमानन्ददायकत्वेन वशीकरणं भवतीति नामद्वय तत्सूचकमुक्तम् ॥ ५१ ॥

एवं सति यत्रैव स्नेहोत्पत्तिस्तत्रैव भगवत प्रियत्वमिति तत्सूचकमग्रिमं नामाहु ।

**दधिदुग्धप्रियाय नम** इति ॥ ५२ ॥

उभयमपि प्रिय यस्य तादृशाय । यद्यपि पयस सन्तापक्लेशो दीयते दध्नश्च मथनक्लेशस्तथापि ते स्नेहमेव प्रकटयत इत्यसाधारणो धर्मस्तयोरिति भगवतस्तेतिप्रिये । एवं सति

---

* गोकुलधूर्तेत्यत्र ॥ ४९ ॥ भगवच्चरित्र धूर्तवत्, भवति न तु स्वरूपम्। स यथा यथा सर्वं गृहीत्वा सुखमेव प्रकटयति, तथैतच्चरित्र इन्द्रियादिकं गृहीत्वा परमानन्दमेव प्रकटयति । निरोधाधिकारिणामेवमनुभूयते । अतो निरोधसुकरत्वात्तथा भवतीत्यर्थ ।

\+ नवनीतलवाहारेत्यत्र ॥ ५१ ॥ स्वाश्रयवरूपा मनोरथमयी संपाद्य इतरोपयोगचक्रादवदहनस्तुतस्हृदयायास्तु भगवान्स्वादत्ति । यास्तु नवनीतादिक सपाद्य गृहान्तरे स्थापयति यदा भगवानागमिष्यति तदा किंचिद्दास्यामि । एतद्भाववत्यास्तु लवमात्रमेवाङ्गीकरोति । यास्तु संपाद्य गुप्ततया संस्थाप्य भगवदागमनात्पूर्वमेवात्र कार्यार्थं गच्छति, तस्यास्तु सर्वं मर्कटेभ्यो ददाति, न तु स्वयमत्तीति भाव । अग्निकुमारश्रुतिरूपाणां देवरूपाणामिति विवेक (?) । किंच । भगवता लवाङ्गीकारेणापि कृतार्थत्वस्य 'स्वल्पमप्यस्य धर्मस्येति' वाक्यादन्येषां न तथेति भावः ।

धूर्तत्वादिनापि भक्ताना स्नेह एव यदि स्थास्यति, तदा ते ममापि प्रिया भविष्यन्तीति भावेन तथाकरणमिति सर्वमवदातम् । किञ्च । पयसो विकार रूपान्तरं दधि तस्य प्रथमोक्ते विकृतावपि स्नेहश्चेत्प्रकटो भवेत्तदा मम प्रिय एव भवेदिति सूचितम् ॥ ९२ ॥

अत परमेतेषामुपालम्भोपि निरोधसाधक एवेति ज्ञापकमग्रिमं नामाहु ।

**क्षीरकणावलीढमुखारविन्दाय नम** इति ॥ ९३ ॥

क्षीरकणा अवलीढा आस्वादिता येन तादृश मुखारविन्द यस्येति । अयं भाव । क्षीरपाने तत्कणा मुखारविन्दे संलग्ना दृश्यन्त इति प्रत्यक्षतश्चौर्यं तथापि साधुरिव भवन्निकटे तिष्ठतीति । 'सुप्रतीतोयमास्ते' इत्यस्य नाम ज्ञेयम् । अथवा । क्षीरकणैरवलीढमास्वादित मुखारविन्दं यस्य । यद्यपि क्षीरस्यास्वादन भगवता कृत तथापि मुखारविन्दसम्बन्धे जाते तदा स्वाद क्षीरस्यापि जात इति कणरूपेण तत्र संलग्नं सत्स्वय तदास्वादन करोतीति भावोद्बोधकत्वमुक्तम् । अथवा । मुखे दुग्धकणज्ञापनेन एव भवदीय सर्व एव रसो ममैव पेय इति भक्तान्प्रति सूचयति । अत एव तादृशश्रीयुक्तमुखारविन्दावलोकने तादृक्प्रकारकानन्तभावानामुच्छलितत्वादनुरक्ता एव जाता नत्वन्यथेति भाव । किञ्च । 'श्रीमुखालोकिनीभि' रित्युक्त्या तादृशतदालोकनार्थमेवागता न तूपालम्भार्थमित्यपि सूचितम् ॥ ९३ ॥

अत पर मृद्भक्षणचरित्रसूचकं नाम निरूपयन्ति ।

**मृत्स्नाभक्षणभीतयशोदाताडनसंत्रासनयनारविन्दाय नम** इति ॥ ९४ ॥

मृत्स्नाभक्षणेन भीते यशोदाताडनेन सम्यक् त्रासो ययोस्तादृशे नयनारविन्दे यस्य तादृशाय । एतच्च 'यशोदाभयसम्भ्रान्तप्रेक्षणाक्ष' मित्यस्य नामेति तत्रैतत्तात्पर्यं स्पष्टमेवेति ज्ञातव्यम् । अत्रारविन्दपदेन यथा तस्याज्ञाने भ्रान्त तथा भक्तिरपि इति सूचितम् । 'महापुरुषद्रोहादिति' विवरणे विवृतम् ॥ ९४ ॥

ततस्तद्वाक्य श्रुत्वा नाहं भक्षितवानित्युक्तं तत्सूचकं नामाहु ।

**सर्वविमोहकाय नम** इति ॥ ९५ ॥

भगवता तु सत्यमेवोक्तम् । तस्य ज्ञानं कस्यापि न जातमिति सर्वविमोहकत्वमुक्तम् । विशिष्टोर्थस्तु विवरणे द्रष्टव्य ॥ ९५ ॥

अत परं 'समक्षं पश्य मे मुख' मित्यस्य नामाहु ।

**माहात्म्यप्रदर्शकाय नम** इति ॥ ९६ ॥

निरोधार्थं चरित्रमिति दुष्टभावे स न सिध्यतीति विश्वदर्शनेन माहात्म्यं प्रदर्शितमिति निरोध सिद्ध इति भाव ॥ ९६ ॥

तद्दर्शनेन यादृशं ज्ञानं जातं तादृशं नामाहु ।

*** परब्रह्मत्वबोधकाय नम इति ॥ ९७ ॥**

एतदेव स्तुतौ स्पष्टमुक्तमतो ज्ञातमाहात्म्यत्वात्तत्पदं प्रणताम्मीत्युक्तं मातृचरणे ॥९७॥

ततो भगवान् भजनानन्दस्य ब्रह्मानन्दापेक्षया महत्त्वाद्भूतचर्यं मोहितानिति तत्सू
चकं नामाहु ।

**सर्वजनीनमाहात्म्याय नम इति ॥ ९८ ॥**

इदं तु 'इत्थं विदिततत्त्वाया' मित्यारभ्य 'त्रय्या चोपनिषद्भिश्चेति' 'हरिं सा मन्यतात्मज' मित्यन्तस्य नाम ज्ञेयम् । त्रय्यादिभिरपगीयमानमाहात्म्यत्वमेव सर्वजनीनत्वं, तादृशमेवात्मजत्वेन मन्यत इत्यर्थादेव मोह आयातीति तथोक्तमिति भाव ॥ ९८ ॥

अत परं मातु संसारासक्तिनिवृत्तिहेतुकृतचरित्रज्ञापकं नामाहु ।

**× दधिमाण्डभेत्त्रे नम इति ॥ ९९ ॥**

अयं भाव । पूर्वं 'क्षौमं वास' इति श्लोके महती संसारासक्तिर्निरूपिता । तन्निवारणार्थं स्तन्यकाम सन् यथा तस्या स्वस्मिन् प्रीतिर्भवेत्तथा कुर्वन्नागत्य दधिमन्थानं गृहीत्वा तत्क्रिया न्यषेधत् । तदुक्तं 'सर्वाङ्गं चालयन् हस्तौ पादौ न विचालयन्मुखाब्जं मधुरारावं बिभ्रदिति' विवरणे । तदा तु स्तनपानदशाया सस्मितमुखारविन्दलोकने निरोध एव स्थित, पश्चादुत्सिच्यमाने पयसि भगवंतमुत्सृज्य ययौ, तत्राप्यतृप्तमिति भगवत कोप, यथा मथनं परित्यज्य ममानुरोधं कृतवती, तथाधुना न कृतवतीति । एतेन लौकिकानुरोधं त्यक्त्वा भगवान्सेव्य इति सूचितम् । अत एवोक्तं 'लोकार्थी चे' दिति । तत कोपेन तद्भाण्डमेव भिन्नं दैत्याविष्टत्वादित्येतावदभिप्रायसूचकमिदं नामोक्तमिति भाव । तत्रापि दधिमण्डस्यैव भाण्डं तत् । नवनीतं तु तत्सारं मिश्रीकृतं तदपि मदुपयोगि न भवेच्चेन्निरर्थकमेवेति तथा कृतम् । किञ्च । पूर्वजातं नवनीतमन्तर्गृहे स्थापितमिति गृह एव स्नेहो न मर्यादि कोप स्थित एव ॥ ९९ ॥

पश्चात्पुनरतृप्तमुत्सृज्य ययाविति प्रकटो जातस्तथापि निरोध कर्तव्य इति स्नेहस्य स्वस्मिन्विनियोगश्चेत्तदा दोषो निवर्तेत इत्यन्तर्गृहे गत्वा तत्स्नेहरूप जघासेति तत्सूचक नामाहु ।

---

* परब्रह्मत्वेत्यत्र ॥ ५७ ॥ मातृचरणाना परब्रह्मत्वबोधकस्तु स्वयमेव जात । नो चेत् ज्ञानोत्तरं स्वसन्ततया स्नेहाङ्गभूतमोहकत्व न संभवति, माहात्म्यज्ञानपूर्वकस्नेह एव भक्तिकथना माहात्म्यज्ञान तु यथास्थितमेव ज्ञानमिति भाव । किंच । ननु एव करणे को हेतुरित्याशङ्क्य भगवत्प्रदर्शितमाहात्म्यज्ञानस्यैव परत्वमेसदपि स्वकीयानामेव भवति, इतरेषां प्रमाणबलमाश्रित्य ज्ञाने जातेऽपि परोक्षतया, वैपरीत्यतया च स्वस्मिन्नेवात्मत्व कल्पयन्ति, पूर्वोक्तानां तु युक्ततमत्वमुक्त भगवता, 'मय्यावेश्य मनो ये मा मित्यारभ्य 'ये तु सर्वाणि कर्माणी'त्यनेन भगवत्कृतिसाध्यत्वतया यथार्थज्ञाने दास्यत्व स्वस्मिन् भगवत्यात्मत्व ज्ञात्वा लीलाब्धौ सर्वदा सेवा करोतीत्याशयो परत्वकथनस्येति भाव ।

× दधिमाण्डेत्यत्र ॥ ५९ ॥ स्वरूपासक्तिसंपादनेऽपि तथैव संसारासक्तिं ज्ञात्वा जातोऽपि निरोधो वृथा भवति विक्षेपद्वयबलवत्त्वादिति वाक्याद्युभयसत्वे भगवा स्वयमेव सर्वं नाशयति निरोधाभावे स्वरूपासक्तानां संसारासक्तौ तूभयभङ्गसूचनाय भगवान् रुदतीत्यर्थ ।

**चौर्यविशङ्कितेक्षणाय नम** इति ॥ ६० ॥

चौर्येण विशङ्कितमीक्षणं यस्य । लोकदृष्ट्या चौर्यं भगवता कृतम् । वस्तुतो मातृचरणै रेव तत्कृतम् । यतो भगवदपेक्षितं स्तन्यं स्नेहरूपं स्वसन्निधिरुध्य स्थापितं तस्मै न दत्तमिति । एतत्सर्वं विवरणे विशेषतो द्रष्टव्यम् । अत एव नवनीतभक्षणे न तस्या स्नेह स्वनिष्ठीकृत इति दोषनिवृत्त्या तथाविध सुतदर्शने हास्यमेव कृतं न तु क्रोध । अत एव यत्स्वानर्हं तन्म कार्य दत्तमिति दैत्याविष्टे स्मिमपि न स्थापितमिति भाव । एवं दोषदूरीकरणेपि सर्वात्मना दोषनिवृत्तिर्न जातेति लौकिकदृष्ट्या पुत्रे यत् शिक्षणरूपं कर्म कर्तव्यं तत्सर्वं कृतवती ' स्थुलू खलाग्रेरुपरी'त्यार'भ्येयेप किल त बद्धु ' मित्यन्त विवरणे निरूपितम् । तत्र पुनर्बन्धने स्वधर्मं ज्ञापितवा 'न्नचान्तर्न बहिर्यस्ये'त्यारभ्य 'तदपि द्व्यङ्गुलं न्यूनं यद्यदादत्तबंधन ' मित्यन्तम् ॥६०॥

तदा भगवा स्वमातुस्ताहक् स्वेद वीक्ष्य कृपया स्वयमेव बन्धनं कारयामासेति तत्सू चकं नामाहु ।

**[1]भक्ताधीनाय नम** इति ॥ ६१ ॥

भक्तस्य तदेव कीर्तिकरं जातमिति तत्सूचकं नामाहु ।

**दामोदराय नम** इति ॥ ६२ ॥

एतदेवोक्त ' एव सन्दर्शिता ह्यङ्ग हरिणा भक्तवश्यतेति ' कीर्तिप्रकाशकत्वेन शोभाकरमेव जातमिति भाव ॥ ६२ ॥

एव भगव तं वशीकृत्य पुनर्गृहकृत्ये व्यग्रा जातेति तद्दोषनिवृत्त्यर्थमग्रिमचरित्रं कृत वानिति तत्सूचक नामाहु ।

**यमलार्जुनभञ्जनाय नम** इति ॥ ६३ ॥

अनयोरप्यासक्तिदोषेण वृक्षत्व जातमिति तद्दोषनिवर्तकत्वादेतच्चरित्रमनापि निरोध साधक भविष्यतीति भाव ॥ ६३ ॥

किंच । भगवान् भक्तोद्धारार्थं प्रकट इति ' तत्तथा साधयिष्यामीति'भक्तवाक्पूरणार्थं तथाकृतमिति तत्सूचक नामाहु ।

**[2]भक्तवाक्यपरिपूरकाय नम** इति ॥ ६४ ॥

अनेनापि भक्ताधीनता सूचिता ॥ ६४ ॥

---

१ भक्ताधीनेत्यत्र । लोभमोहयुतानां साधनसंपन्नतामपि फलाभावो ज्ञाप्यते । किंच । कृते निरोधेपि संसारासक्तिरहितानामेव तथात्व, अन्येषां तु न तथा । ' अह भक्तपराधीनो ह्यस्वतन्त्र इव द्विज ' । ' वशीकुर्वंति मां नित्य सस्त्रिय सत्पति यथेति ' वचनात् तदभावे तथात्वे उभयत्र सत्पदसापेक्षत्वादिति भाव ।

२ भक्तवाक्यपरिपूरकेत्यत्र ॥ नारदवाक्यमङ्गीकृत्य भगवता स्तम्भभावात् मोचितौ, नोचेद्धनमदेन स्तैण त्वमापन्नौ दुराचरौ कथ स्वकीयेनांगीकृतौ, भक्तसंसर्गवशात् सर्वमेव तथा कृतवानिति भाव ॥

२ अस्य नाम्नो विवरण ख पुस्तके नास्ति

तत उद्धारानन्तरं पुन कदाचित्पूर्वोक्तस्थीत तयोर्भेदेदिति तद्भावसूचनं नामाह ।

**भक्तिदात्रे नम** इति ॥ ६५ ॥

अत एव 'वाणी गुणानुकथने' इति प्रार्थनानन्तरं भक्तिर्दत्तेति ' सञ्जातो मयि भावो वामीप्सित परमो भव ' इत्युक्तं भगवता ॥ ६५ ॥

अत परं प्रस्तुतचरित्रं निरूपयन्ति । तत्र पूर्वं यशोदाकृतं बन्धनमुक्त, यद्यपि स्वकृत मेव तज्जातं, तथापि भगवति बन्धनस्थनमपि न युक्तमिति तद्भावसूचक नामाह ।

**सर्वेश्वराय नम** इति ॥ ६६ ॥

सर्वेषामीश्वर सामान्यत सर्वेषामेव नियन्ता प्रेरकश्च विशेषत श्रीगोकुले साक्षात् स्वयमेव तथातथा चरित्रकरणार्थं प्रेरयतीति नान्यकृतबन्धनम्, अत एवोक्तं ' कृपयासीत्स्व बन्धन ' इति ।

किञ्च । बन्धनमपि स्वस्वरूपात्मकमिति । न ह्यात्मनात्मनो बन्धनं भवतीति तत्सूचकं नामाह ।

**सर्वाय नम** इति ॥ ६७ ॥

सर्वरूपत्वेन दामरूपोपि इति येन बन्धनमिति भाव । एतन्नामद्वयं ' कृपयासीत्स्व बन्धन ' इत्येतत्पदस्येति ज्ञेयम् ॥ ६७ ॥

अत परं नन्दस्यापि निरोध कर्तव्य इति स्वयमेव तथा प्रेरको जात इति बन्धन मुक्तिस्तेनेति तत्सूचक नामाह ।

**नन्दविमोचितबन्धनाय नम** इति ॥ ६८ ॥

नन्देन विमोचित बन्धनं यस्य तादृशाय । येनेद कृत यस्येद कर्मेति पश्चात्तापेन शीघ्र ' बन्धनमोचनं ' कृतं यत्तद्विपरीतं कृतम् । यतो भगवल्लक्षणो बन्धो भगवतैव मोचयितु शक्यते नान्येनेति ' नन्देन स्वबन्धनमेव मोचितमिति ' विवरणे निरूपितम् । तथा च विप रीत मोचन स्वबन्धनमुक्तिरेवेति भाव । विशेषेण मोचनमप्येतदेव, यत स्वबधनमोचनमिति सर्वं सुस्थम् ।

अत परमग्रिमचरित्रकरणार्थमन्येषामपि निरोध कृत इति तत्सूचक नामाह ।

**उपनन्दप्रियाय नम** इति ॥ ६९ ॥

यथा नन्दो महाँस्तथोपनन्दोपि तत्तुल्य । अत एव नन्दसादृश्येन प्रेमापि भगवति विशिष्टमिति तयोक्तम् । अतएव तदुत्पातानि दृष्ट्वा मन्त्रणं कृत ' मुत्थातव्यमितोस्माभिरिति '

---

१ सर्वायेत्यत्र । एतावत्कालपर्यन्तं भक्तानां स्वमनोरथ ज्ञात्वा मातृचरणानां दोषदूरीकरणार्थं सर्वासामा- नन्दरूप स्वयमेव तथा जात रहयेव दन्त इव तत्क्रनमाधनात्परावृत्य तद्रूपो जात , अत ' कृपयासीत्स्व बन्धने ' । स्वपदेन स्वरूपमेव सूचित, नोचेल्लौकिकदाम्ना भगवति कथं तथात्वमिति भावः ।

तदभिप्रायज्ञापकमपि ज्ञेयम् । वृहद्वनक्रीडानन्तरं वृंदावनक्रीडेच्छा जातेति ' भगवतैव तथा प्रेरितमिति तथा मन्त्रणमभूत्॥ ६९ ॥

ततो वृन्दावनगमनसामयिक नामाहु ।

**मातुरुत्सङ्गगताय नम** इति ॥ ७० ॥

तथा 'यशोदारोहिण्यौ एक शकटमास्थिते। रेजतु कृष्णरामाभ्या तत्कथाश्रवणोत्सुके' इत्यस्य नाम ज्ञेयम् ॥

तत्र गतस्य सामान्यलीलाज्ञापकमग्रिम नामाहु ।

**वृन्दावनक्रीडारताय नम** इति ॥ ७१ ॥

इद तु 'वीक्ष्यासीदुत्तमा प्रीती राममाधवयोरिहे' त्येतदर्थसूचक नाम ज्ञेयम् ॥ ७१ ॥

अग्रे वृन्दावनक्रीडाया प्रथमं वत्सचारण कृतमिति तत्सूचक नामाहु ।

**वत्सवाटचराय नम** इति ॥ ७२ ॥

वत्साना वाट एव व्रजनिर्गमार्ग एव चारक । यथा व्रजस्था सर्वे मातृचरणादय पश्यन्ति । 'अविदूरे व्रजभुव' इत्यारभ्य 'चेरतु प्राकृतौ यथे' त्यन्त यावत्य क्रीडा कृतास्ता सर्वा अनुसन्धेया । यद्यपीय क्रीडा बालकाना मनोनुरञ्जनार्थं तद्दोपनिवारणार्थं निरोधार्थं च कृता, तथापि व्रजस्था पश्यन्तीत्युक्त्या तेषामपि निरोध सिद्ध इति भाव ॥ ७२ ॥

अत परं पाल्याना दोपनिवारक नामाहु ।

**वत्सासुरहन्त्रे नम** इति ॥ ७३ ॥

लौकिका एव लौकिकान्सदोपान्पशूश्चारयन्ति । भगवानलौकिक इति निर्दोषानेव पालयतीति समस्ताना वत्साना योयमासुरो भाव ■ एकीभूतो वत्सासुर इति वत्सरूपिण मारितवानिति तथोक्तम् ॥ ७३ ॥

तत एतच्चरित्रेण बाला नि प्रपञ्चीकृता इति तेषा दोपरूपोय बको दम्भरूप, यस्य तुण्डौ लोभानृतरूपौ तादृश मारितवानिति तथा नामाहु ।

**बकविदारणाय नम** इति ॥ ७४ ॥

एवमुभयचरित्रमाहात्म्यदर्शने महत्त्वज्ञानेनाश्चर्यरसेन च व्याप्ताना सर्वेपा दम्भलोभानृतदोपनिराकरणे भगवत्परता जातेति समारतापनिवृत्ति सूचिता । एतदेवोक्त 'मिति नन्दादयो गोपा कृष्णरामकथा मुदा, कुर्वन्तो रममाणाश्च नाविन्दन्भववेदना' मिति ॥ ७४ ॥

अत पर 'निलायनै सेतुबन्धै'रित्याद्युक्तकौमारलीला तत्रैव संस्थाप्य पौगण्डलीला कृतवानिति द्वादशाध्यायान्तर्गतनामनिरूपणे प्रथम वृन्दावनस्य दैत्यसम्बन्धजनितदोपनिवारणसूचकं नामाहु ।

**वृन्दावनचारिणे नम** इति ॥ ७५ ॥

'वृन्दावन पुण्यमतीव चनतु' रिति वचनात्त्वरणसंबधेन पुण्यं लीलायोग्यं कृत्वा पश्चात्तस्य स्वरूप 'अहो अमी देववरे' त्यादिभिर्निरूप्य बलभद्रबोधनं च कृत्वा दशरसस हिता क्रीडा कृतवानिति। एवं 'वृंदावन' मित्यारभ्य 'एवं निगूढात्मगति' रित्येतावत्पर्यन्तं निरूपितमिति तदभिप्रायज्ञापकमिदं नाम ज्ञेयम्॥ ७५॥

अत परं यावत्पर्यन्त देहाध्यासो न गच्छति तावत्पर्यन्तं निरोधसिद्धिर्न भवतीति तन्निराकरणसूचकं नामाहु।

**धेनुकासुरखण्डनाय नम** इति॥ ७६॥

धेनुको देहाध्यासरूप इति तत्खण्डनेन भजमाना स दोष एव दूरीकृत इत्यर्थ॥७६॥

अत परमध्यासनिवृत्तौ फलप्राप्ति सर्वथा भवतीति तत्सूचक नामाहु।

**उत्तालतालभेत्त्रे नम** इति॥ ७७॥

उत्ताला ये ताला, अथवा उद्धतस्ताल शब्द यस्या क्रियाया एवं यथा भवति तथा वा तालाना भेदनकर्त्रे नम। एतेनैक एव धेनुको न मारित किंतु बहवस्तत्सजातीया मारिता इति सूचितम्। तेषा मारण तालोपर्येव तत्संबधेन सर्वे एव ताला पतिता इति सर्वेषा भेदनं सूचितम्॥ ७७॥

तत सर्वेषा सुखसंचारोऽभूदिति तत्सूचकं नामाहु।

**सर्वप्राणिसुखसञ्चारकर्त्रे नम** इति॥ ७८॥

तद्वनं सुमहत्तृणलतावृक्षफलसहितं तत्र तद्भयात्त केनापि सञ्चार कर्तुं शक्यत इति तन्मारणेन सर्वप्राणिना सुखसञ्चारो जात इति तथोक्तम्। इद तु 'तृणं च पशवश्चेरुर्हतधेनुक कानने' इत्युक्तिसूचक ज्ञेयम्॥ ७८॥

अत परं दिवा लीला वने कृत्वा साय व्रजमागच्छतीति सूचक नामाहु।

**गोकुलसुखवासाय नम** इति॥ ७९॥

इद तु 'कृष्ण कमलपत्राक्ष पुण्यश्रवणकीर्तन। स्तूयमानोऽनुगैर्गोपै साग्रजो व्रजमागम दित्यस्य नाम ज्ञेयम्। तेन दिवा वने रात्रौ गोकुले इति सर्वदा स्थितिप्रकार उक्त॥ ७९॥

अत पर या लीला दशरसात्मिका या पुरुषार्थचतुष्टयरूपाश्च गोपै सह पूर्वं निरूपितास्ता भक्तैर्न दृष्टा इति भगवदागमने स्वरूपे सर्वा अनुभूता इति प्रथम पुरुषार्थरूप त ज्ज्ञापक नामाहु।

**गोरजश्छुरितकुन्तलाय नम** इति॥ ८०॥

'गावो धर्म रजोगुण एवार्थ, व्याप्ति कामा, कुन्तला मोक्षरूपा इति विवरणे विवृतम्। अनेन रसात्मकत्वमपि ज्ञापितम्॥ ८०॥

तादृशश्चेद्वेणुं वादयति तदा भक्ताना वशीकरणं भवत्येवेति तादृशं नामाहु।

**वेणुवादविशारदाय नम** इति ॥ ८१ ॥

वेणुवादे विशारदः प्रवीणः । एतेन स्वरतानमूर्च्छनासहितं गानं सूचितम् । तेन 'गायन्तं स्त्रियः कामयन्त' इति वशीकरणं युक्तमेवेति भावः । किञ्च । वेणुवादे विशिष्टा शारदा सरस्वती वाक्यरूपा यस्येति । यथा यथा येन भक्तेन सह संकेतस्थले दिवा लीलाः कृतास्तत्र तदनुभवज्ञापकवाक्यसहितगानकरणे तेषां वशीकरणं संपन्नम् । अस्मिन्पक्षे तच्छ्रवणं तस्यैव भवति नान्यस्येति ज्ञेयम् । एतदेव प्रवीणत्वं तस्येति भावः । ये भक्ता गृह एव स्थितास्तेषां स्वार्तिज्ञापकवाक्यसहितगानकरणे तच्छ्रवणे परमानंद इति तथोक्तम् ॥ ८१ ॥

एवं धर्मसहितस्य नामोक्त्वा केवलस्याहुः ।

**वनकुसुमावलीरचिताकल्पाय नम** इति ॥ ८२ ॥

वनकुसुमावलीभी रचितः आकल्पः वेषो नटवेषो येन इति दशरसात्मकं स्वरूपं निरूपितम् ॥ ८२ ॥

तादृशेन सर्वेषां भक्तिं जनयतीति तत्सूचकं नामाहुः ।

**अनुगगीयमानयशःपुञ्जाय नम** इति ॥ ८३ ॥

या या लीला वने अनुभूतास्ता एव गायन्तीति तेषां निरोधः सूचितः । एतन्नामार्थं 'तं गोरजश्छुरित' त्यस्येति ज्ञेयम् ॥ ८३ ॥

एवमेतादृशस्वरूपावलोकने दिवाजनिततापनिवृत्तिर्जातेति तत्सूचकं नामाहुः ।

**गोपीतापहारकाय नम** इति ॥ ८४ ॥

'तापं जहुर्विरहजं व्रजयोषितोह्नी'त्यस्येदं नाम ॥ ८४ ॥

तत्तत्सत्कारलाभेन स्वस्यापि तापनिवर्तको जात इति तत्सूचकं नामाहुः ।

**गोपीनयनारविन्दार्चिताय नम** इति ॥ ८५ ॥

तत्र पूजास्वरूपं 'सव्रीडहासविनयं यदपाङ्गमोक्ष' मित्यनेनोक्तमिति तद्विवरणे द्रष्टव्यम् । किञ्च । पूर्वं भक्तनेत्रेषु भृङ्गत्वं निरूपितं मूले'क्षिभृङ्गै रिति, अत्रारविन्दत्वमुक्तामिति यथा भगवन्मुखारविन्दपाने तेषां भृङ्गत्वं, तथैतदरविन्दपाने भगवतोपि भृङ्गत्वमिति सूचितम् । किञ्च । अर्चितपदेन यथा देवतार्चिता सतुष्टा पुष्टा च भवति तथा भगवत्यपि धर्मा दृश्यन्त इति ज्ञापितम् । अत एव 'श्रीमद्गोकुलदृक्पुष्ट' इत्युक्तम् ॥ ८५ ॥

अतः परं गोकुलप्रवेशानन्तरं मातृचरणकृतश्रमनिवर्तकोन्मर्दनोन्मज्जनालंकारभोजनादि शयनान्तसत्कारसूचकं नामाहुः ।

**लौकिकलीलाप्रदर्शकाय नम** इति ॥ ८६ ॥

इदं तु 'तयोर्यशोदारोहिण्या' वित्यारभ्य 'सविश्य वरशय्याया' मित्यन्तस्य नामोक्तम् । अत्र लौकिकरीतेः प्रदर्शनमात्रत्वमेव, वस्तुतः रात्रौ स्वप्रियाभिः सह शयनमिति मने शयनमुक्तं 'सुखं सुषुपतुर्व्रजे' इति ॥ ८६ ॥

अत एवं कालिय इंद्रियाण्यासरूपो भवतीति मन्तव्यम् । तन्निराकरणं कर्तव्यम् । एतावत्पर्यंत कृतो निरोध सिद्धो न वेति भक्ताना परीक्षापि कर्तव्या । अग्रे स्वक्रीडार्थं कालिंदी च निर्दोषा कर्तव्येत्येतावदभिप्रायज्ञापकमग्रिम नामाहु ।

**विषमूर्च्छितगोगोपालजीवनदृष्टये नम इति ॥ ८७ ॥**

सविषकालिंदीजलपानेन विशेषेण मूर्च्छिता गाव गोपालाश्च तेषा जीवनरूपा दृष्टिर्यस्य । इद तु ' एव स भगवा'नित्यारभ्य ' ईक्षयामृतवर्षिण्या स्वनाथान्समजीवयद्' इत्येतावत्पर्यन्तस्य नामोक्तम् ॥ ८७ ॥

*एव कालिन्द्या तत्कृतं दोष दृष्ट्वा तद्दमनार्थं स्वयमेव प्रविष्ट इति तत्सूचकं नामाहु ।*

**भक्तपरीक्षकाय नम इति ॥ ८८ ॥**

स्वप्रवेशेन भक्ताना परीक्षैव कृतेति भाव ॥ ८८ ॥

तत परीक्षानतर किंचिदाश्वासक नामाहु ।

**कालियफणिमाणिक्यरञ्जितश्रीपदाम्बुजाय नम इति ॥ ८९ ॥**

एतेन तादृक्प्रकारेण नृत्यत दृष्ट्वा तेषा जीवन स्थितमिति भाव ॥ ८९ ॥

अत पर दण्डे कृते प्रसादोऽपि कर्तव्य इति तद्धेतुक नामाहु ।

**नागपत्नीसमर्चिताय नम इति ॥ ९० ॥**

नागपत्नीभि सम्यगर्चित पूजित स्तुत इत्यर्थ । सम्यगर्चन तु स्वनिवेदनपूर्वक भक्तिमार्गानुसारेणेति ज्ञेयम् । तथापि सकामत्वान्न तथा फलम् । तत्सर्व स्तुतौ प्रकाशितमेवेति तत्रैव द्रष्टव्यम् ॥ ९० ॥

तत स मुक्त भगवदाज्ञया सकलत्र सुहृत्पुत्रादिसहितो रमणद्वीप गत , तदा कालिंदी शुद्धा जातेति तत्सूचक नामाहु ।

**भक्ताश्रयजलस्थलविशोधकाय नम इति ॥ ९१ ॥**

भक्तानामाश्रयो निरंतर जलाद्यर्थमागमनादाश्रयभूतं सकलं कालिंदीजल स्थल च तत्समीपस्थ तयोर्विशेषेण शोधक । एतावत्पर्यंत कालियविषेण तृणलतादिकमपि न स्थितमत पर सर्व जातमिति विशेष । शोधने भक्ताश्रयपदेन सर्वदा लीलायोग्यत्वमपि सूचितम् ॥९१॥

एवं सर्वा शुद्धि सपाद्य नानाविधक्रीडा करोतीति तज्ज्ञापक नामाहु ।

**नानाविधक्रीडारताय नम इति ॥ ९२ ॥**

---

१ कालियफणिमाणिक्ये यत्र । प्रियाहृदिस्थपादाम्बुजस्पर्शेनोरोजसदृशमाणिक्ये कुङ्कुमाक्तानुरञ्जितस्मृतिरसभरेण नृत्यति । किञ्च । रसासक्ताना तु भुजङ्गपरिवीताङ्कानि दृष्ट्वा सवासा मनसि महान् रसानुभवोऽनुभूयते, इतरेषां तु क्लेश एव तथा, अतो भगवतापि भावात्मकतया तद्रसमनुभूय तथा कृतमिति भाव ।

२ भक्ताश्रये यत्र । कालिन्द्यामपि यावत्कालियसगजदोषो स्थितस्तावत् भगवत्तदपि तत्स्थल विहाय क्रीडित, तत परंपराभक्तेषु तथात्वमाशङ्क्य तस्यास्तत्सङ्ग त्याजयित्वा शुद्धि विधाय पश्चाद्रमण करोतीति भाव ।

इह तु पञ्चदशाध्यायस्थनामनिरूपणमस्ति, एतत्पूर्वं चतुर्दशाध्याये यद्यपि कालियद मनानन्तरं दावानलनिरूपणमस्ति तथा तन्निरूपणमग्रेपि मुञ्जाटवीप्रसंगे भविष्यतीति तदकथनं मलस्थलशुद्ध्यनन्तरं क्रीडेव कर्तव्येति तत्सूचकमेवाग्रे निरूपितमिति सर्वं सुस्थम् । तथा च नानाविधा क्रीडा जलस्थलसम्बन्धिन्य, तत्र रतायानुरक्तायेत्यर्थ । एतत्सर्वं 'व्रजे विक्रीडतोरेवं ग्रीष्मो नामर्तुरभव दित्युक्त्वा 'स च वृन्दावनगुणैर्वसन्त इव लक्षित' इति तद्दोष परिहृत्य वृन्दावनगुणाश्च वीक्ष्य क्रीडार्थं भगवान्प्रविष्ट इत्युक्त्वा तत 'प्रवालबर्हस्त बके त्यारभ्य 'एवं तौ लोकचेष्टाभि रित्यतं निरूपितम् ॥ ९२ ॥

तत्रैव क्रीडाया प्रलम्बागमनमिति तत्सूचकं नामाहु ।

**प्रलम्बघातकाय नम इति ॥ ९३ ॥**

प्रलम्बस्त्वन्त करणदोषरूपस्तन्मारणेन तद्दोष एव परिहृत । यद्यपि तद्वधो बलभद्रकृत-स्तथाप्यावेशद्वारा कृत इति भगवत एव कर्तृत्वमिति तथा नामोक्तमिति भाव ॥ ९३ ॥

अत परमात्मदोषरूप अज्ञानात्मा दवाग्निस्तन्निवारणं कृतमिति तत्सूचकं नामाहु ।

**दावाग्निपतितगोकुलरक्षकाय नम इति ॥ ९४ ॥**

अत्र निरोधार्थं चरित्रमिति गावस्तृणलोभेन गह्वर वन प्रविष्टा, गोपाश्च प्रभौ स्वतुल्य-त्वज्ञानेन क्रीडासक्ता इत्यज्ञानात्मा ह्यात्मदोषो निरूपित, प्रपत्त्यभावे क्रीडा न भवतीति मुञ्जाटव्या क्लेशो निरूपित । तावत्पुन स्वात्मदोषरूपो दवाग्निरुत्थित । तत शरणागतौ भगवता रक्षा कृतेति तत्सूचकं नाम ज्ञेयम् ॥ ९४ ॥

केन प्रकारेण रक्षा कृतेति प्रश्ने तज्ज्ञापकं नामाहु ।

**अग्निमुखाय नम इति ॥ ९५ ॥**

अग्निर्मुखे यस्येति । स्वाधिष्ठाने आधिदैविके लीने चक्र इत्यर्थ । एवं सर्वेषां सर्व दोषनिवृत्तिपूर्वको निरोध सिद्ध इति निरूपितम् ॥ ९५ ॥

अत परं सप्तदशाध्याये क्रीडोपयोगित्वेन वर्षाशरद्वर्णनं, तत्कार्यमष्टादशाध्याये जात मिति तत्रत्यानि नामानि निरूपयन्ति । तत्र प्रथममृतुवर्णनानन्तरं क्रीडार्थं वने प्रवेश इति तत्सूचकं नामाहु ।

**सर्वर्तुक्रीडाविलासाय नम इति ॥ ९६ ॥**

---

१ प्रपत्त्यभावेऽत्र य भयो ह्यते । अत्रात्मत्व स्वस्मि भावात् दासत्व साधनत्वेनाङ्गीकृत्य मायावादादिप्रतिपादितभ्रांतिकल्पनया भगव त सेव ते यतो निरोधेपि फलाभावात्तेषां कृतिरपि तथा भवतीति भाव ।

२ अग्निमुखेऽत्र । पूर्वोक्तानां प्रवाहरूपाणाम् एव सवदा पर्यवस्यति तत्तु यदा भगवान्स्वमुखेनैव तदज्ञान निषधप्रकारं स्वाधिदैविके लीन करोति, तदा पुनमनो भगवति भक्त्या यथाऽर्थो पतिताचो नाश एव स्यादिति भाव ।

अत्र 'कुसुमितवनराजी'त्यत्र मधुपतिपदेन वसन्ताधिपतिः सरसः शृङ्गारात्मा निरूपित इति वसन्त ऋतुराज इति, सर्वे ऋतवो वसन्ते प्रकटा भवन्ति, तस्याप्ययं पतिरिति सर्वदा वसन्तः । सर्वर्तुधर्मैः सह भगवन्तं सेवते इति, शरद्यपि सर्वर्तुधर्माः प्रकटा इति तादृशं नामोक्तमिति भावः ॥ ९६ ॥

अत एव कुसुमितवनराजीत्यनेन सर्वान् विभावादीन्निरूप्य सर्वत्र रसोद्बोधार्थं वेणुनादं कृतवानिति तत्सूचकं नाम निरूपयन्ति ।

**गोकुलचारुविचित्रचरित्राय नम इति ॥ ९७ ॥**

कार्येणैव कारणनिरूपणम् । गोकुले चारु मनोहरं विचित्रमाश्चर्यजनकं चरित्रं यस्येति । 'चुकूज वेणु'मिति कूजनमात्रश्रवणेन भक्तानां मनोहरणमेव जातमिति चारुपदम् । तत्रापि लीलासम्बन्धिनीनामेव श्रवणं नान्येषामिति विचित्रपदम् । इदमेवाद्भुततरं चरित्रं यद्वनस्थवेणुनादस्य श्रवणं व्रजस्थानां, तत्रापि न सर्वेषामिति ॥ ९७ ॥

एवमेतन्नाम्ना कूजनमात्रधर्म उक्तः । पश्चाद्गीतं कृतमिति तज्ज्ञापकं नामाहुः ।

**गोपिकाधैर्यविमोचकवेणुनादाय नम इति ॥ ९८ ॥**

गोपिकानां धैर्यविमोचको वेणुनादो यस्य । गीतश्रवणानन्तरं स्मरोदयेन धैर्यं न स्थितं, तदा स्थातुमशक्त्या वर्णनारम्भे कृष्णचेष्टितस्मरणेन तत्राप्यशक्तिरुक्तेति मोचने व्युपसर्गेण सूचितम् ॥ ९८ ॥

अतः परं वर्णनस्यावश्यकत्वात्तथा वर्णनं भवति तज्ज्ञापकं नामाहुः ।

**गोपिकानयनपानैकपात्राय नम इति ॥ ९९ ॥**

गोपिकानां नयनानां च यत्पानं तदर्थं एकं मुख्यं एकलं वा पात्रं पात्ररूपमित्यर्थः । नयनेत्युपलक्षणं सर्वेन्द्रियाणामित्यर्थः । चक्षुष्मतां वेत्यपि सूचितम् । एतदेवोक्तमक्षण्वतामिदमेव फलमित्यत्रेति 'बर्हापीडे'ति श्लोकार्थसूचकं नाम ज्ञेयम् । अत एव 'यथा पात्रस्थं रसं पाययित्वा तत्पात्रं हरते तिष्ठद्द्रवतीत्युक्तं' 'वपुर्बिभ्रदि'त्यस्य विवरणे ॥ ९९ ॥

एतत्स्वरूपानुभवानन्तरं वर्णनं जातमिति तथा नामाहुः ।

**श्रुतिरूपगोपिकावर्णितनिखिलगुणाय नम इति ॥ १०० ॥**

श्रुतिरूपाभिर्गोपिकाभिर्वर्णिता निखिला अग्रे निरूप्या गुणा यस्य । 'अक्षण्वतामि'-त्यारभ्य 'गा गोपकैरि'त्यतस्येदं नाम ज्ञेयम् । एतद्वर्णनेन 'तन्मयता ययु'रिति क्रीडामध्य एव जाता इत्यन्तः प्राप्तिरूपो मध्यमो निरोधो निरूपितः ॥ १०० ॥

एतदग्रे अनन्यपूर्वाणां निरोधं निरूपयन्ति । तत्र प्रथममन्तःप्राप्तिसूचकं नामाहुः ।

**गोपकन्याव्रतफलाय नम इति ॥ १०१ ॥**

'हेमन्ते प्रथमे मासी'त्यारभ्य 'कुमार्यः कृष्णचेतसः' इत्यन्तं पतित्वनिश्चयपूर्विका सक्तिर्निरूपितेति गोपकन्यानां व्रतस्यावान्तरफलरूपत्वमुक्तमिति तत्सूचकं नामेदं ज्ञेयम् ।

अत एवान्तरनुभवे बहि पूजाया प्रतिबन्धकत्वात्ता परित्यज्यासक्तिस्वभावादेव गुणगाने प्रति ष्ठिता , 'कालिंदी दोपत्रयनिवारिवेति प्रतिबन्धनिवृत्त्यर्थं तत्र स्नानपरा विहारं चक्रु'रिति विव रणे विवृतमिति ॥ १०१ ॥

तदा मुख्यफलदानार्थं भगवान् गत्वा यत्कृतवांस्तत्सूचक नामाहु ।

**जलक्रीडासमासक्तगोपीवस्त्रापहारकाय नम** इति ॥ १०२ ॥

गोपीपदेन भोग्यत्व सूचितम् । जलक्रीडासक्तौ सम्यक्त्वकथनेन तत्रान्तरनुभवेनैव पूर्णतां मत्वा सक्ता जाता न तु बहि सद्भावपेक्षाज्ञानमपि नासामिति सूचितम् । तेनेदानीमपि कन्यात्व-मेव तासामपि ज्ञापितम् । अत ए'वास्त्रागस्त्यागादुत्तम' इति ज्ञापनार्थं तादृशीना वस्त्रापहरणं कृतमिति तज्ज्ञापकं नामोक्तमिति भाव । विशेषस्तु सुबोधिन्या टिप्पण्या च द्रष्टव्य ॥१०२॥

अत परं तासा सर्वमेव भगवता कृतमिति सर्वस्यापि विनियोग स्वस्मिन्नपेक्षित इति पुंस्त्वाख्यो धर्मस्तासु नास्तीति सोपि स्थापनीय इति वयस्यै सहागमनमिति तादृशं नामाहु ।

**मुक्तोपसर्पकाय नम** इति ॥ १०३ ॥

मुक्ता उपसर्पका यस्य । अथवा मुक्ताना उपसर्पकस्तन्निकटे तदन्तर्वा प्रापक इत्यर्थ । 'ते तु मुक्ता स्वान्त स्थितास्तान्प्रकटीकृत्यान्यैरलक्षितान्स्वसङ्गे नीतवानि'ति विवरणे विवृतम् । अग्रे पुनर्वस्त्रदानेन सह तदन्त प्रवेशिता इति 'स्वं स्वं वास प्रगृह्यतामि'त्यत्र निरूपित मित्येतत्सर्वाभिप्रायद्योतकमिदं नामेति ज्ञेयम् । एवमेतासामपि निरोधो निरूपित । ततोग्रे 'अथ गोपै परिवृत' इति गोपै सहितो जात इत्युक्तम् ॥ १०३ ॥

अत परं लीलासम्बन्धिपदार्थाना ज्ञानं गोपाना कर्तव्यमन्यथानिष्टपर्यवसान स्यादिति तेपा ज्ञानोपदेश कृत इति तत्सूचक नामाहु ।

**वृन्दावनबोधकाय नम** इति ॥ १०४ ॥

इद तु 'निदाघार्तातपे तिग्मे च्छायाभि स्वाभिरात्मन । आतपत्रायितान्वीक्ष्ये'-त्यारभ्ये'तिप्रवालस्तबके'त्यन्तस्य नाम ज्ञेयम् । तत्र 'व्रजजातापेक्षया वनजाता एव समीचीना' इति विवरणे विवृतमिति सर्वमत्रत्य भगवदीयमेवेति ज्ञानं जातमिति तथा नामो-क्तमिति भाव ॥ १०४ ॥

एवं ज्ञानेन सर्वस्यापि पदार्थस्य भगवदर्थकत्वे स्फुरिते तद्ग्रहणे स्वस्यानौचित्यं ज्ञात्वा क्षुधि सत्या भगवति प्रार्थना कृता गोपैरन्यथा फलादिग्रहणेन क्षुन्निवृत्तिर्भवेदे वेति प्रार्थनं विमर्श्य चक्रु । तदा भगवान्स्वोपयोगि यावज्ज्ञान तावत्तेषु स्थापयितुं पूर्वं बाललीला सिद्ध्यर्थं लोकानुरूपं ज्ञानं भवेत्पश्चाद्भगवद्धामीति तदुभयकरणयोग्य ब्राह्मणाचम्, तेपा बहिर्मुखत्वात्समर्पणकर्त्रीणा भक्तत्वादिति तद्याचनमेवोपदिष्टम् । तदा तत्प्रार्थनाया ते ऽनादरं कृतवन्त इति तेपा भगवदज्ञान सूचितमित्येतावत्सूचक नामाहु ।

**यज्ञभोक्त्रे नम** इति ॥ १०५ ॥

अत्र वैदिकज्ञानकर्मणोर्निर्णय क्रियते, न च भगवत्संबन्धं विना न कस्यापि सत्त्वशोधक इति । अतो गोपवाक्यैर्विप्राणा भगवत्स्फूर्तिर्न जाता तेषा, ज्ञानकर्मणोर्भगवत्सम्बन्धाभावात्, तत्सम्बन्धे तु कस्यापि भक्तस्य सङ्गेन परंपरयापि भक्तिरन्यस्यापि जायत इति भक्ताया विप्रभार्याया एकस्या सङ्गेनान्यासामपि जाता, तासा सङ्गेन विप्राणामपि ज्ञान भक्तिश्च जातेति निर्णय कृतो विवरणे । तथा च 'देश काल पृथग्द्रव्यं मन्त्रतन्त्रे'ति 'तद्ब्रह्म परमं साक्षादि'त्यादिनाधिदैविकयज्ञभोक्ता सर्वयज्ञाधिष्ठाता सर्वयज्ञफलदाता चायमित्युक्तमपि इति तत्सूचकं नामेदं ज्ञेयम् । तादृशोऽप्रवृत्तौ तदज्ञानं स्पष्टमेव सूचितम् ॥ १०५ ॥

तर्हि तदन्नं कथं याचितमिति तद्धेतुज्ञापक नामाहु ।

**यज्ञभागभुजे नम** इति ॥ १०६ ॥

तत्र तत्स्त्रीणामप्यशो वर्तत इति तास्तु भक्तास्तासा भाग स्वकीय इति तद्भोग कृत इति तत्सूचक नामेदं ज्ञेयम् । किञ्च । भगवद्भक्तैरानीतमिति तत्सम्बन्धेन तत्सम्बन्धित्वेपि न दोष इति तदन्नस्य भगवति विनियोगे जाते तेषामपि भक्तिर्जातेति ज्ञापनार्थमपि भोग कृत इत्यपि सूचितमेतन्नाम्ना, अत एवोक्तं 'धर्मरक्षार्थं भक्तिरक्षार्थं स्ववाक्यरक्षार्थं चे'ति विवरणे ॥१०६॥

तत्सूचक नामाहु ।

**धर्मरक्षकाय नम** इति ॥ १०७ ॥

यज्ञसंबन्ध्यन्नस्याधिदैविकसंबन्धेन यज्ञरूपो धर्म सिद्ध , भगवदीयान्नभोजनेन भक्ति सिद्धा । 'तदहं भक्त्युपहृतमश्नामी'ति स्ववाक्यरक्षा च सिद्धेति तथा नामोक्तमिति भाव ॥१०७॥

तदन्नस्वीकारेण तत्पत्नीषु प्रसाद कृत इति तादृश नामाहु ।

**यज्ञपत्नीप्रसादकाय नम** इति ॥ १०८ ॥

यथाधिकारं प्रसाद इति मुख्य प्रसाद एकस्यामेवेति सामान्यत सर्वास्विति भाव । अत एव गमनं तासाम् ॥ १०८ ॥

तत्र गताना किं जातमिति तज्ज्ञापक नामाहु ।

**सर्वाज्ञाननिवारकाय नम** इति ॥ १०९ ॥

तासा गमनानन्तरं तद्दर्शनेन ब्राह्मणानामज्ञान निवृत्तम् । भगवज्ज्ञानं जातम् । तेन भगवद्भक्तिर्जातेति भाव । अज्ञाननिवृत्तौ द्वय सिद्धमेवेति तन्निवारकत्वेनैव नामोक्तम् ॥१०९॥

एतावत्पर्यन्तं बाललीलानामानीत्युपसंहरन्ति ।

**इति बालचरित्रस्य नाम्नामष्टोत्तर शतम् ।**
**कृष्णभक्तिहृदानन्दि कीर्तनाद्भक्तिबोधकम् ॥ १ ॥**

---

१ तत्रेत्यारभ्य विवृतमित्यन्त खपुस्तके नास्ति ।

यद्यप्यनन्तान्येव नामानि तथापि कृष्णसंबंधि बालचरित्रस्य नाम्नामष्टोत्तरं शतं
मयोक्तमित्यर्थः । बालचरित्रं यस्य कृष्णस्येति वा, तदा मूलरूपस्यैव नामानीत्युपक्रमोपसंहार-
सङ्गतिरपि सूचिता । कथनहेतुं विशेषणेन निरूपयन्ति कृष्णभक्तिहृदानंदीति । कृष्णे सदा-
नंदे भावात्मके भक्तिः स्नेहः पूर्वं भवति, ततो हृदयस्यानदकारि भवेत्ततस्तत्स्नेहस्वभावेन
कीर्तनाद्भक्तिबोधकं आसक्तिजनकं भवेदिति भाव ॥ १ ॥

---

एवं बालचरित्रफलमुक्त्वासक्तिकारकचरित्रनाम कथनं प्रतिजानते ।

**नामान्यथ प्रवक्ष्यामि यैः संतुष्यति केशवः ।**
**वक्ष्यामि भक्तहृदये परमानन्ददायकः ॥ १ ॥**

तानि नामानि प्रवक्ष्यामीति संबन्ध । कथने प्रकर्षो यथास्वरूपज्ञापक. । यै केशवोपि ब्रह्म-
शिवयोरपि मोक्षमेव ददाति, न तु ततोधिक, तादृशोपि सम्यक्तुष्यति । पुष्टिमार्गीयभावप्रक-
टनमेव सम्यक्त्वम् । तज्ज्ञापकमग्रिमं विशेषणम् । भक्तहृदये परमानंददायक इति । बाह्या-
भ्यन्तरभेदेनेत्यर्थ । एतेन प्रौढलीला सूचिता ॥ १ ॥

एवं प्रतिज्ञाय नाम निरूपयति ।

**अद्भुतबालकाय नम** इति ॥ १ ॥

बालकपदेन यद्यपि बाललीलैव सूच्यते तथापि अद्भुतपदेन प्रौढलीलापि सूचिता ।
अलौकिकमेव ह्यद्भुतं भवति, दृश्यते बालक, धर्मास्त्वलौकिका । माहात्म्यज्ञापका इति
प्रौढलीलात्व । यद्यपि बाललीलायामप्यवस्थासाधनविरुद्ध चरित्रं कृतं, तथापि न तत्र माहा-
त्म्यज्ञानं कृत कस्यापि । मुग्धभावप्रकटनेन लौकिकभाव एव सर्वेषां सपादित । भक्तानामपि
माहात्म्यसहित एव प्रकारान्तरेण सन्तोष कृतो, न त्वलौकिकी रीतिं प्रकटितवानिति बाललीलात्वमेव । अत्र तु 'माहात्म्यज्ञानपूर्वस्तु सुदृढ सर्वतोधिक स्नेह' सर्वेषा कृत इति
लात्वमेव । अत्र तु 'माहात्म्यज्ञानपूर्वस्तु सुदृढ सर्वतोधिक स्नेह' सर्वेषा कृत इति
तत्पुर सरमेव लीला कृतवानिति प्रौढलीलात्वमिति सर्वमनवद्यम् । एतादृशमाहात्म्यसहित
स्वरूपदर्शनेपि देवकीमातृचरणाना बालकबुद्धिरेव जातेति ज्ञापनार्थं समस्तपदेन नामोक्तम्, अन्यथा
मूले भिन्न पदमिति तथा न वदेयु । किञ्च । अलौकिकज्ञानमपि तयो स्थितम् । अत एव
'स स्वजाते न शकिताविं'त्युक्तं मूले । यद्यपीदं लोके वेदे च प्रथित, तथापीदानीं प्रकटितं तत्
द्रष्टुमेवोपपद्यते न तु स्मर्तुं वर्णयितुं, वेत्यद्भुतपदेन सूचितम् ॥ १ ॥

अत· परं रूपमुक्त्वाऽलौकिकशोभानिरूपक नामाहु· ।

**अम्बुजेक्षणाय नम** इति ॥ २ ॥

यद्यप्यम्बुजेक्षणत्वमन्यत्रापि सभवति, तथाप्यत्र ये धर्मास्ते नान्यत्रेत्यलौकिकत्वं ज्ञापि-
तम् । अलौकिकधर्मो विवरणे निरूपिता । किञ्च । अम्बुजपदेन रसोद्बोधकत्वेन रसात्मकता
ज्ञापिता । अत एव स्निग्धदम्पतिभावरूपा रसात्मकताप्यग्रे निरूपिता फलप्रकरणे ॥ २ ॥

एवमलौकिकी ज्ञानशक्तिरुक्त्वा, क्रियाशक्तिं निरूपयन्तस्तत्सूचकं नामाहु ।

**चतुर्भुजात्तचक्रासिगदाशंखाद्युदायुधाय नम** इति ॥ ३ ॥

चतुर्भुजैरात्ता चक्रासिगदाशङ्खादय उद्गता जलरूपा या आयुधा येन तादृशाय । अस्यार्थस्तु विवरणे 'चतुर्विधकार्य मित्यारभ्य 'वेदोक्तं द्विविधं ज्ञानं भक्तिर्भगवतस्तथे'त्यन्तं विशेषतो विवृत इति ततोऽवगन्तव्य । अत्रापि चतुर्व्यूहेषु प्रद्युम्नरूपेण रसात्मकता सूचिता ॥ ३ ॥

माहात्म्यद्योतकमग्रिमं नामाहु ।

**श्रीवत्सलक्ष्मणे नम** इति ॥ ४ ॥

सर्वात्मकस्य भगवतो ब्रह्म हि मुख्यं लक्षणमिति तद्धारणम् । किञ्च । स्पर्शसुखाभिव्यक्तिहेतु श्री तस्या स जनको भवतीति विवरणे विवृतमिति । तद्धारणेन रसज्ञतापि सूचिता । तेन माहात्म्यं स्नेहश्चेत्युभयमपि ज्ञापितम् ॥ ४ ॥

अन्यदप्याहु ।

**कौस्तुभाभरणग्रीवाय नम** इति ॥ ५ ॥

कौस्तुभो मणिराभरणं यस्या तादृशी ग्रीवा यस्येति । जीवानामाधिदैविकस्वरूपभूतोयं मणिरिति मुक्तजीवाना तत्रैव स्थिति । भगवाँस्तु मुक्तोपसृप्य । तादृशा जीवास्तु लीलामध्यस्था एवेति, तेषा कण्ठभूषणत्वेन स्थापनाद्रसपरवशत्वमेव ज्ञापितम् । एवं सति माहात्म्यं रसाभिज्ञत्व चेत्युभयमत्रापि सूचितम् ॥ ५ ॥

तादृशस्वरूपविलोकने माहात्म्यज्ञानपूर्वकस्नेहेन श्रीदेवकीमातृचरणाना मुक्तिरेव स्यादिति तदभावसूचक नामाहु ।

**पीताम्बरधारिणे नम** इति ॥ ६ ॥

पीताम्बर माया तद्धारणेन मोहमेव करोतीति न तथेति भाव । अत एव जागरूके माहात्म्यज्ञानेपि पुनस्त्वभाव । एतदेव विवरणे व्यञ्जितम् । पूर्वं कौस्तुभवर्णने जीवानामुभयरूपत्वं निरूपितम् । केचन क्रियानिष्ठा । केचन ज्ञाननिष्ठा इति । तथात्वहेतुभूता मायेति पीताम्बरवर्णनम् । पीताम्बरस्य तद्रूपत्वादिति । तथा च मोहकधर्मसाम्ये तत्रापि तद्व्यञ्जितमिति भाव । किञ्च । पीताम्बरं तु रसाच्छादक भवति, तेन रसरूपत्वेपि रसाच्छादनं सूचितम् । अत एव विवरणे भगवत प्रदेशावरिकामायामित्युक्तमाभासे ॥ ६ ॥

अत एव रसरूपत्वद्योतकमग्रिम नामाहु ।

**नीलमेघश्यामाय नम** इति ॥ ७ ॥

स यथा सर्वानन्ददायी तथायमपीति भाव । एतत्सर्वं 'यस्तु स्वकाल' इत्यादिना विवरणे स्फुटीकृतम् ॥ ७ ॥

एवं स्वरूप निरूप्य तदुपयोग्याभरणद्योतकं नामाहु ।

### नानाकल्पविराजिताय नमः इति ॥ ८ ॥

इदं तु 'महार्हवैडूर्यकिरीटे'ति श्लोकनिरूपिताभरणभूषितत्वसूचकं नाम ज्ञेयम् ॥ ८ ॥

एवमुभयात्मकं स्वरूपं निरूप्य तस्य परमसौन्दर्यातिशयद्योतकं नामाहु ।

### आत्मविस्मापकमानुषवेषसौन्दर्यनिधये नमः इति ॥ ९ ॥

इदं तु विरोचमानमित्यस्य नाम ज्ञेयम्। विशेषेण रोचकमिदमेव यत्स्वस्यापि विस्मय । तथा च आत्मविस्मापको यो मानुषवेष सौन्दर्यं च तस्य निधि तादृशाय । अत एवाद्भुतमेवोक्तम् । बालकपदेन मानुषवेषोऽम्बुजेक्षणपदेन सौन्दर्यं च व्यञ्जितम् । तस्यापि निधिरिति 'त्रैलोक्यलक्ष्म्यैकपदं वपुर्दध'दित्युक्तमग्रे । एतेन त्रैलोक्ये यत्र सौन्दर्यं तत्रैतदंशैकदेशरूपमिति सूचितम् । एवं सर्वांशेन पूर्णभावत्वेऽनिर्वचनीयमाहात्म्यं ज्ञापितम् ॥ ९ ॥

अत परमेतादृशस्येदानीं प्रयोजनाभावाद्रूपान्तरेण वनं गत इति रमापि तत्रागत्य सेवां करोतीति तन्माहात्म्यसूचकं नामाहु ।

### रमालालितपादपद्माय नमः इति ॥ १० ॥

रमा तु सर्वदा पुरुषोत्तमसेवैकनिष्ठा । सा चात्रागता इति तदवधyनैव सापि स्थितेति तयोक्तम्। इदं तु 'तत आरभ्य नन्दस्ये'त्यारभ्य 'रमाक्रीडमभून्नृपे'त्यन्तस्य नाम ज्ञेयम् ॥१०॥

अत परं यत्र माहात्म्यज्ञानपूर्वकः एव स्नेहः प्रकटीकृतो न तु मुग्धभावसहितस्तचरित्रसंबंधीनि नामान्यत्र निरूपणीयानीति मध्यस्थबाललीलान्तःपातीनि नामानि विहाय तादृशान्येकविंशाध्यायादारभ्य पुनर्निरूपयन्ति ।

तत्र प्रथमं भक्तानामन्यभजनादिकं निषिद्धमिति तन्निवारणसूचकं नामाहु ।

### भक्तहितोपदेशकाय नमः इति ॥ ११ ॥

इदं तु नन्दादीनामिन्द्रयागोद्यमं दृष्ट्वा तत्स्वकीयानामनुचितं मत्वा हितोपदेशं कृतवानिति तत्सूचकमुक्तम् ॥ ११ ॥

ननु बालकोपदेशेन पारंपर्यागतमपि धर्मं ते महान्तः कथं त्यक्तवन्त इति तत्सूचकं नामाहु ।

### हविर्मन्त्रदेवतामूलबोधकाय नमः इति ॥ १२ ॥

हविर्मन्त्रदेवताश्च तेषां मूलं यस्तद्बोधकाय ज्ञापकायेत्यर्थ । अयं भाव । पूर्वं नन्दं प्रति प्रश्ने कृते नन्द 'पर्जन्यो भगवानिन्द्रे'त्युत्तरं दत्तवान्, तत्र पर्जन्यो भगवानेव देवतारूपो, मेघास्तस्यावयवा मन्त्रा इव वर्षापयो हवि यतोऽन्नं भवति, जलान्नाभ्यामेव सर्वं जीवति, इन्द्र सर्वोपास्य इति सर्वे तद्भजनं कुर्वन्तीति निरूपितम् । ततो भगवांस्तन्मतं निराकृत्य स्वमतमुपदिष्टवान् । 'तस्माद्गवां ब्राह्मणानामद्रेश्चारभ्यतां मखः' इति भवत्कृतो यागस्तु वैदिको न भवतीति वैदिकः कर्तव्य । यत्र हविर्मन्त्रदेवता प्रतिष्ठिता । तत्र गोषु हवि । ब्राह्मणेषु मन्त्र । गोवर्धन स्वयमेव देवतारूप । हविर्मन्त्रदेवतानां मूलभूतानां मूलभूता एत एवेति तद्बोधको जात इति तत्सूचकं नामोक्तमिति भाव ॥ १२ ॥

तत इन्द्रस्य मोहेन मनोपघातोद्यमो जात इति तत्सूचकं नामाहु ।

**कृतवेषमोहितदेवपरीक्षकाय नम** इति ॥ १३ ॥

कृतो यो वेषो मानुषवेषस्तेन मोहितो यो देव इन्द्रस्तस्य परीक्षकाय परीक्षाकर्त्रे इत्यर्थ । कियत्पर्यन्तं मया सहैवं करिष्यतीति सप्तदिनपर्यन्तं परीक्षा कृतेति, तदुपर्यपि वृष्टिं कुर्यात्तदा स्वरूपत एव नष्टो भवेदिति भाव । अथवा । कृतवेषमोहितो यो देव इन्द्रस्तेन हेतुना परीक्षकाय भक्तानामित्यर्थ । इन्द्रकृतक्लेशेन भक्तेषु करुणया रक्षार्थं परित ईक्षणं 'गोपाये स्वात्मयोगेने'ति विचारपूर्वकं यदीक्षणं तस्य कर्त्रे इति वा । अथवा । तादृशो यो देव इन्द्रस्तस्य परित ईक्षा ज्ञानं तत्कारकायेति तत्कृतप्रपत्ति सूचिता । किञ्च । प्रपत्त्यनन्तरं तदुपरि कृपादृष्टिं कृतेति परीक्षकायेत्युक्तमित्यपि सूचितम् । अत एव 'तस्मिन् जाते सुरेक्षणमि'त्यत्र स्वकार्ये संपन्ने सुरेक्षणं कृतमिति विवरणे विवृतम् ॥ १३ ॥

ननु यागभङ्गजनितकोपेन प्रलयकालीना मेघा निर्मुक्ता इति तै सर्वं जगदेव प्लावितं भवेदिति तदभावद्योतकं नामाहु ।

**एकदेशवृष्टिवायुदेवताक्षोभजनकाय नम** इति ॥ १४ ॥

एकदेशो व्रजस्तदर्थं वृष्टिवायुदेवताक्षोभजनकस्तादृशाय । अथवा । एकदा य ईश न तु सर्वदा तादृश इन्द्र तस्मात्तन्मुखादित्यर्थ । वृष्टिवायुदेवतानां क्षोभजनक न तु साक्षात्स्वयं माहात्म्यवानिति तावन्मात्रभावनमेव कृतवन्त इति भाव । अत एव 'नन्दादिभ्यश्चुकोप स' इत्यत्र 'स निषिद्धभागभोक्ते'त्युक्तम्, प्रलयेषु तु भगवदाज्ञया तथा कुर्वंतीति सर्वं सुस्थम् ॥१४॥

ननु मूले मेघादीनां क्षोभजनकत्वमिंद्रस्योक्तम्, अत्र भगवत क्षोभजनकत्वं निरूपितमिति कथमेकवाक्यता भवेदिति तत्सूचकं नामाहु ।

**सर्वरूपाय नम** इति ॥ १५ ॥

अय भाव । अत्र भगवान्कालात्मक स्वयं शक्रदर्पनाशार्थमेतावत्करोतीति सर्वरूपोपि स्वयमेवेति, तत्प्रेरकोपि स्वयमेव जात इति तेषां क्षोभजनकत्वं भगवत एवेति तथा नामोक्तमिति भाव । अन्यथा को वा वराक इन्द्रो यद्भगवत्स्थाने तादृशोपद्रवं कुर्यादिति सर्वमनवद्यम् । सर्वेषां रक्षायां स्वात्मयोगयुक्त 'गोपाये स्वात्मयोगेने'ति सर्वत्र स्वयं प्रविष्ट, सर्वरूपत्वेन रक्षा कृतेति तत्सूचकं नाम ज्ञेयम् ॥ १५ ॥

ननु तथाप्येतावत्करणे किं सिद्धमिति तदाहु ।

**वेदमार्गरक्षकाय नम** इति ॥ १६ ॥

पाखण्डधर्मं दूरीकृत्य वैदिको वैष्णवधर्मो रक्षित इत्यर्थ । किञ्च । भक्तानां तत्रापि स्वकीयानामन्यभजनादिकं सर्वथा ह्यनुचितमिति ॥ १^ ॥

तत्सर्वं दूरीकृत्य केवल स्वनिष्ठीकृता इति भक्तिमार्गप्रवर्तको जात इति तथा नामाहु ।

**भक्तिमार्गप्रवर्तकाय नम** इति ॥ १७ ॥

अत एव वृष्टिकृतपीडायामपि चरणशरणमेवागता इति 'पादमूलमुपाययुरि'त्युक्तं मूले ॥ १७ ॥

ततो रक्षापि स्वस्वरूपेणैव कृता, न तु साधनान्तरेण । तथा सत्यन्यसम्बन्ध स्वकीयानां भवेदिति तत्सूचकं नामाहु ।

**गोवर्धनोद्धरणधीराय नम** इति ॥ १८ ॥

तदुद्धरणकृतरक्षया केवल स्वकीयत्वं सम्पादित स्वमाहात्म्यं च प्रदर्शितम् । सप्तदिवसावधि पर्वतधारणेन सर्वेषा क्षुत्तृड्देहधर्माद्यभावेन च माहात्म्यज्ञानपूर्वकस्तु सुदृढ सर्वतोधिकः स्नेहो जनित इति भक्तिमार्गधर्मपोषणमेव कृतमिति भाव ॥ १८ ॥

न केवलं स्वीयानामेव माहात्म्यज्ञानं कृतं किंतु सर्वेषामेव जातमिति तत्सूचकं नामाहु ।

**सर्वजनीनमाहात्म्यबोधकाय नम** इति ॥ १९ ॥

सर्वत्रैव देवमानुषादिषु माहात्म्यस्य बोधकायेति ॥ १९ ॥

सर्वत्रैव तत्प्रकटमिति इंद्रस्यापि तज्जातमिति तत्सूचकं नामाहु ।

**भक्तविस्मापकाय नम** इति ॥ २० ॥

इंद्रोपि भक्त एवाधिकारित्वान्मोहेन भगवदपराधं कृतवानिति स्वोद्यमे निष्फले जाते विस्मितोभवदिति तथोक्तमिति भाव । न केवलमाश्चर्यमात्रमेक जात किंतु गतगर्व हतसंकल्प सन् मेघान्न्यवारयदित्यपि ज्ञेयम् ॥ २० ॥

अत एव भगवान्दोषमेव दूरीकृतवान्, नत्विन्द्र स्वर्गाद्दूरीकृत इति तादृश नामाहु ।

**मोहनप्रबोधोभयरक्षकाद्भुतचरित्राय नम** इति ॥ २१ ॥

मोहनं च प्रबोधश्च तदुभयस्य रक्षकमद्भुतं चरित्रं यस्येति । मोहोपि स्वकृत एव प्रबोधोपीत्यद्भुतत्वम् । अत एवेन्द्रपदाच्च नाशित । एतेनापराधेपि दोषमेव नाशयति न, [illegible] तं लौकिकप्रभुवदिति सूचितम् ॥ २१ ॥

तत्र हेतुरूप नामाहु ।

**लोकवेदोल्लङ्घनकरप्रपन्नभक्तसर्वदुःखनिवारकाय नम** इति ॥ २२ ॥

भगवान्परमकृपालुरक्लिष्टकर्मेति लोके वेदेपि निन्दित महापापजनकं तादृशमपि करोति य स लोकवेदोल्लङ्घनकर, एतादृश इन्द्रो, यतो गोकुलनाशार्थमाज्ञापितवान्, पुनर्विवेके जाते प्रपन्नश्च, तत्रापि भक्त अपराधक्षमापनपूर्वकं सेवकधर्मे प्रवृत्त, तादृशस्य सर्वदुःखनिवारका येत्येतदेवोक्तम्, 'मया तेऽकारि मघवन्नि' त्यारभ्य 'गम्यता' मित्यन्तम् । अत परमेवं न कर्तव्यमिति ॥ २२ ॥

न केवलं दुःखमेव निवारितवान्किंतु प्रसादोपि कृत इति तथा नामाहु ।

### इन्द्रसुरभीप्रसादकाय नम इति ॥ २३ ॥

उभयोरेकत्र स्थितिरुभयो प्रसादस्याप्यैक्यप्रतिपादनाय समस्तं पदम्। किञ्च, गोविन्दाभिषेकस्तु सुरम्या प्रार्थित । इन्द्रेण स्वयं स कृत इति स्वस्य सेवकधर्मो ज्ञापित । भगवत्प्रसादोपि सूचित स्वप्रसन्नतया । अन्यथा सा न स्यात् । अतएव समानधर्मज्ञापनायापि समस्तं पदम् । किञ्च, इन्द्रस्येन्द्रत्वं दूरीकृत्य सुरम्या भगवति तदभिषेक क्रियत इति परस्परं वैमनस्यं भवेदिति तदभावज्ञापनार्थं वा समस्तं पदम् ॥ २३ ॥

तत इन्द्रत्वसूचक नामाहु ।

### गोविन्दाय नम इति ॥ २४ ॥

इन्द्रस्यापीन्द्र इति माहात्म्य द्योतितम्, अतएवोक्त 'निर्वैराण्यभवस्तात क्रूराण्यपि निसर्गत' इति मूले । किञ्च । गोकुलस्य सर्वस्येन्द्रो जात इति गोविन्द , गोकुलेन्द्र , व्रजेन्द्र गोपेन्द्र , तथा इन्द्रेन्द्र , देवेन्द्र , सुरभीन्द्र इत्यादिनामान्यपि भवन्ति । एव माहात्म्यज्ञानपूर्व कस्नेहसहितनिरोधो निरूपित ॥ २४ ॥

एतावत्यपि चरित्रे कृते सर्वथा माहात्म्यं न स्फुरितम् । यतो गोवर्धनोद्धरणानन्तरं पुनर्यथास्थान तस्मिन्स्थापिते भगवति च मिलिते लौकिकरीतिरेव कृता न त्वलौकिकभाव स्फुरित इति तदर्थमग्रिमचरित्र कृतमिति तत्सूचक नामाहु ।

### अत्यन्तभक्तनिरोधकाय नम इति ॥ २५ ॥

भक्तश्चेदन्यभजन कुर्यात्तत्रापि निरोधमार्गीयश्चेत्तदा निरोध कर्तव्य इति नन्दस्यान्यभजनादिक जातमिति निरोध कृत । यतो भगवत्प्रेरितवरुणकृतदास्यादिनिरीक्षणेन भगवति माहात्म्यमलौकिकत्वेन बुद्धिश्च जातेत्येतावत्सूचकं नामेद ज्ञेयम् ॥ २५ ॥

अत एव तज्ज्ञापकमग्रिमं नामाहु ।

### वरुणादिदेवप्रबोधकाय नम इति ॥ २६ ॥

वरुणादयो ये देवा आदिपदेन तत्रत्या स्त्रिय पुरुषाश्च तेषां सर्वेषामेव प्रबोधक । प्रकृष्टेन स्वज्ञानसंपादकस्तादृशाय । अत एव ते सर्वे गर्भदासा इव सेवा कृतवन्त इति तथोक्तम् ॥ २६ ॥

एवं वरुणलोके सर्वेषा वरुणादीना दास्य दृष्ट्वा भगवति माहात्म्यज्ञान दृढ जातमिति भगवत परमोत्कर्षदिदृक्षापीति तत्सूचक नामाहु ।

### व्यापिवैकुण्ठप्रदर्शकाय नम इति ॥ २७ ॥

व्यापिवैकुण्ठस्य प्रकर्षेण दर्शकस्तादृशाय । तद्दर्शनेनाविद्यानिवृत्तावक्षरानन्दात्मकत्वे सम्पन्ने सर्वेषा लय एवाभूदिति, ततोपि भजनानन्दस्योत्कृष्टत्वात्तदनुभवार्थं तत उद्धृता ॥ २७ ॥

ततो ब्रह्मणो लोक ददृशुरिति सर्वतारतम्यज्ञापनार्थं प्रदर्श्य ततोप्युद्धृतवानिति विवरणे विवृतमिति तत्सूचक नामाहु ।

**वैकुण्ठस्थित्यधिकभक्तगृहस्थितिबोधकाय नम** इति ॥ १८ ॥

वैकुण्ठस्थिते सकाशादधिकोत्कृष्टा भक्तस्य गृहस्थितिस्तया बोधको ज्ञापक । एतद्दर्शनेनायं साक्षाद्भगवानेवास्मद्गृहेवतीर्ण इति गृह एवा परमानन्दानुभवेन वैकुण्ठापेक्षया गृहमेव विशिष्टमिति ज्ञानं जातमिति भाव ॥ २८ ॥

तद्भेदकं नामाहु ।

**मदनगोपालाय नम** इति ॥ २९ ॥

वैकुण्ठे लयावस्थानुभूता । अत्र तु साक्षान्मदनमूर्ति परमलावण्यनिधि स्वयमेव गोपालरूपेण भगवानस्मानानन्दयतीति नन्दादीना ज्ञानं जातमिति तत्सूचकं नामोक्तमिति भाव । इदं तु 'कृष्णेन चोद्धृता' इति कृष्णपदार्थस्य नाम ज्ञेयम् ॥ २९ ॥

ननु गोकुले भगवत उच्छृंखलचरित्रस्य दृष्टत्वात्कथं तादृशं निर्दोषज्ञानं जातमिति तत्सूचकं नामाहु ।

**अनादिब्रह्मचारिणे नम** इति ॥ ३० ॥

सर्वेषा आदिभूतो ब्रह्मचारी स्वयमेव, य इदानीं ब्रह्मचर्यं कुर्वंति तेषा सर्वेषा मूलभूतोयमेव । यत सर्वत्र ब्रह्मरूपत्वेन चरति व्याप्नोतीति । सर्वेषु आत्मबुद्धिरेव भगवत , आत्मन्यतिरिक्त वस्त्वेव नास्तीति ब्रह्मचर्यं तत्रैवेति तथा नामोक्तम् । किञ्च । य सर्वदा स्वानन्दैनैव पूर्णस्तस्यान्यतश्चानन्दापेक्षैव नास्ति, यतो ब्रह्मचर्यं खण्डित भवेदतोनादिब्रह्मचारित्व तत्रैवेति ज्ञापितम् । इदं तु कृष्णं च तत्र छंदोभि स्तूयमान दृष्ट्वा तादृशं ज्ञानं जातमिति तद्व्यञ्जकं ज्ञेयम् । किञ्च, ब्रह्मचारिणो वेदाध्ययनादिकं तदुक्तधर्माचरणं च धर्म स ह्यागतुकस्तस्य । अत्र तु छंदोभि स्तूयमानत्वोक्तेर्वेदानामपि तन्निष्ठतोक्तेत्यनादिब्रह्मचारित्वं तत्रैवोक्तमिति भाव ॥३०॥

एवं निर्दोषज्ञाने जाते फलं भवतीति साधनप्रकरणानन्तरं फलप्रकरणारंभ । तत्र फलदानार्थं यादृक् स्वरूपं कृत्वा स्थितस्तादृक्स्वरूपज्ञापक नामाहु ।

**कंदर्पकोटिलावण्याय नम** इति ॥ ३१ ॥

इदं तु 'भगवानपी'त्यस्य विवरणे षड्गुणैश्वर्यसंपन्नस्तया रूपं कृत्वा स्थित इति भगवत्पदार्थेन निरूपितमिति तद्द्योतकं नाम ज्ञेयम् ॥ ३१ ॥

नन श्रुतौ कामरूपत्व ब्रह्मण कुत्रापि न श्रुतमिति तत्तात्पर्यज्ञापक नामाहु ।

**सर्वोपनिषत्तात्पर्यगोचराय नम** इति ॥ ३२ ॥

सर्वोपनिषदा यत्तात्पर्यरूपं 'रसो वै स' इत्यादिना निरूपितं रसात्मकं कोटिकन्दर्पलावण्यं तदेव गोचर दृग्विषयीभूतमित्यर्थ । अथवा । सर्वोपनिषद्रूपा व्रजसीमन्तिन्यस्तासा तात्पर्यं बहि फलानुभवरूप तदर्थं गोचरो जात इति । एतेन श्रुतीनामेवार्थे तादृश रूपं प्रकटितवानन्यार्थमिति सूचितम् । अथवा । सर्वासामुपनिषदा तात्पर्यं फले, फलरूपा तु रासलीला, तत्र

तदर्थं वा गोचरो जात इति तथोक्तम् । एवमुपनिषत्तात्पर्यगोचरत्वकथनादियं लीला नित्यैव, साम्प्रतं लोके बहि प्रकटीकृता। अत एवोक्त 'अत्रैव लोके प्रकटमाधिदैविकमुत्तम' मिति॥३२॥

अत परं फलस्वरूपज्ञापक नामाहु ।

**गोपिकारमणाय नम** इति ॥ ३३ ॥

एतावत्पर्यन्तमीश्वरभाव एव स्थित । इदानीं समस्तनक्षधर्मान्विहाय नायकभावेन ता रात्रीर्दृष्ट्वा रमणेच्छा कृतवानिति गोपिकाना रमणो जात इति तथोक्तम्। एतत्सर्वं 'वीक्ष्ये' त्यस्य विवरणे विवृतम् ॥ ३३ ॥

अत एव विलम्बासहिष्णुस्तत्कार्यसाधनार्थं योगमायामुपाश्रितो जात इति तत्सूचकं नामाहु ।

**सकलयोगाधिपतये नम** इति ॥ ३४ ॥

सकलयोगानामपि अधिपतिरधिष्ठाता तत्तद्योगेन तत्तत्कार्यसाधक इति । एवं कार्यं स्वस्य स्वातन्त्र्याभावाद्योगमायैव साधिकेति तामाश्रित इति तत्सूचकमिदं नामोक्तमिति भाव । अतएव पूर्वमपि योगमायामाज्ञापयदधुनापि कार्यमिति रसस्वाभाव्यात्तामाश्रित इत्युक्तम् । एतत्सर्वं विवरणे द्रष्टव्यम् ॥ ३४ ॥

किंच। अत्र यथा नवीनमन करणेन सर्वा सामग्री लीलोपयोगिनी नवीनैव कृतेति विवरणे विवृतम् । तथा कामोपि नवीन एव प्रकटीकृत इति तत्सूचकं नामाहु ।

**अलौकिकपूर्णकामजनकाय नम** इति ॥ ३५ ॥

यदा नायकभावेन तद्दर्शने रमणेच्छा जाता तदा कामोपि स्वरूपात्मकोऽलौकिक उद्बुद्ध इति भक्तेष्वपि वेणुद्वारा तस्यैव जनको जात । अत एव 'कामपितामह मन उत्पादित वास्तत्र वेणुरपि सहायता प्राप्स्यती'त्युक्त विवरणे । तथा च तत्सूचकमिदं नामेति भाव । क्वचिदलौकिकपूर्णकामबीजजनकाय नम इति पाठ । तदा कामबीज वेणुनादस्तज्जनकायेति तद्द्वारा काम उत्पन्न इति स्फुटमेव ॥ ३५ ॥

एवं भगवतो रसरूपता निरूप्योद्दीपनविभावरूपोपि स्वयमेवेति तत्सूचकं नामाहु ।

**आशापूरकसत्यात्मकामदीपकाय नम** इति ॥ ३६ ॥

आशापूरकश्च सत्यश्च आत्मरूपश्च कामदीपकश्च अर्थात् यश्चन्द्र तद्रूप । यदैव मन श्चक्रे तदैव य उडुराज सै उदगादिति विवरणार्थेनैव तदुदय प्राप्त । रमणेच्छातर्गतत्वात् । सोपि स्वरूपात्मक इति गोपिकारमणाय नम इति नामान्तर्गत एव सूचित । इदानीं तत्स्वरूपं वक्तव्यमिति तत्सूचकत्वेन विशेषणैरेव विशेष्यनिर्देश कृत इति तथोक्तम् । तेनाशापूरकत्वेन 'ककुभ करैर्मुखं प्राच्या विलिंपन्नि' त्युक्तोर्थ सूचित । किञ्च। चर्षणीनामप्याशा पूरिता शोकं दूरीकरणेनेत्यपि सूचितम् । सत्यत्वेन नाय भचक्रग । मध्याकाशपर्यंतमेव गमनमित्यादि

धर्मा सूचिता । आत्मरूपत्वेनालौकिकत्वमुक्तम् । कामदीपकत्वेनोद्दीपनविभावरूपतोक्तेति सर्वं सुस्थम् ॥ ३६ ॥

एतादृश चन्द्रं दृष्ट्वा वेणुनादं कृतवानित्युक्तं मूले । ततस्तद्गीतं निशम्य ता सर्वा आजग्मुरित्युक्तं तत्सूचक नामाहु ।

**शृङ्गारविभावादियुक्ताय नम** इति ॥ ३७ ॥

मुख्यरसस्तु विभावादिसंयुक्त एव तिष्ठतीति शृङ्गाररसस्य ये विभावा आलंबनविभावा उद्दीपनविभावादयश्च तैर्युक्ताय । अत्रोद्दीपनविभावास्तु ता रात्री शारदोत्फुल्लमल्लिका इति तदोडुराज इति वन चेति सर्वे पूर्वोक्तनामभि सूचिता , आजग्मुरित्यनेनालम्बन विभावरूपा उक्ता इति तत्सूचकं नामेद ज्ञेयम् । एतेन धर्मसहितो रसो निरूपित ॥ ३७ ॥

एव करणे स्वप्रतिज्ञैव हेतुरिति तत्सूचकं नामाहु ।

**सत्यवाचे नम** इति ॥ ३८ ॥

'मयेमा रंस्यथ क्षपा' इति तासा वरो दत्त इति तद्वचनं सत्यं कृतमिति तथोक्तम् । एतेन ता आहूता इति सूचितम् ॥ ३८ ॥

अत परमागमनानन्तरं धर्मसूचक नामाहु ।

**कामोन्मत्तगोपाङ्गनामुक्तिदात्रे नम** इति ॥ ३९ ॥

'निशम्य गीत' मित्यत्र गीतस्यानङ्गवर्धनत्वमुक्तमिति तच्छ्रवणेन तादृश उद्बुद्धो य कामस्तेनोन्मत्ता देहाद्यनुसंधानरहिता या गोपाङ्गनास्तासा मुक्तिदाता । अयं भाव । 'कृष्णगृहीतमानसा' इत्यत्र मानसमित्युपलक्षण, देहप्राणेन्द्रियान्त करणादय सर्व एव स्वस्मिन्गृहीता इति कृष्णात्मिका एव तदन्तिकमाजग्मुरिति "ब्रह्मैव सन् ब्रह्माप्येती' त्युक्तरूपा मुक्तिरेव दत्तेति तथोक्तमिति भाव । अथवा । 'आत्मना प्रथमा लीले' त्युक्तत्वात् प्रथम भक्तानामात्मन्यात्मनैवानन्द पूरितवानित्युक्तमिति विवरणे । तथा च मुक्तावात्मन एवानन्दानुभवो, न तु देहेन्द्रियादीनामिति तथोक्तमिति भाव । परन्तु तथाप्येतावान् विशेष । यदत्र मुख्यत्वेन प्रथममात्मन एव पश्चात्सर्वेन्द्रियाणामिति । एतेन या मुक्ति कामादिविषयत्यागेन ज्ञानमत्यादिसाधनै कथञ्चिद्भवति सात्र बाधककामादेव जातेति सूचितम् । अत एव 'कामं क्रोध'मि त्यादि निरूपितम् ॥ ३९ ॥

एवं ब्रह्मप्रापणानन्तरमपि तासा मनोभिलापस्ततोप्यधिकफल इति तदधिकारपरीक्षार्थमग्रिमं नामाहु ।

**मुक्त्यधिकफलगोपीमनोमोहकाय नम** इति ॥ ४० ॥

मुक्त्यधिकफलं साक्षात्स्वरूपसम्बन्धस्तत्र गोपीना मनासि तेषा मोहकस्तादृशाय । इद तु 'ता दृष्ट्वान्तिकमायाता ' 'वाच पेशैर्विमोहय न्नित्यारभ्य 'प्रतियात ततो गृहा'नि-

स्यन्तस्य नाम ज्ञेयम् । भगवांस्तु अन्यशेषतया मन्नमयुक्तमिति परावृत्तिं वदति । किञ्च । 'भजतां मुकुन्दो मुक्तिं ददाति कर्हिचित्स्म न भक्तियोगमि'ति वाक्यान्मुक्तिं पूर्वं दत्ता, तदन्यफलमधिकाराभावे न देयमिति 'स्वागतं व' इत्यादिनिषेधवाक्यान्युक्तवान् ॥ ४० ॥

एतास्तु पूर्णाधिकारवत्य इति तन्निराकरणं चतुरिति तत्सूचकं नामाहु ।

**लोकवेदसर्वधर्मपरित्यक्तगोपीसेवितचरणारविन्दाय नम** इति ॥ ४१ ॥

लोकवेदसंबन्धिन सर्वे धर्मा परित्यक्ता याभिस्तादृशीभि गोपीभि सेवितं चरणारविन्दं यस्य तादृशाय । इदं तु 'सन्त्यज्य सर्वविषयाँस्तव पादमूल'मित्यारभ्य 'का स्त्र्यङ्ग ते कल पदामृते'त्यन्तस्य नाम ज्ञेयम् । अत एवाग्रे 'किङ्करीणामि'त्युक्त, न हि कैङ्कर्यं पूर्वसिद्धो धर्म स्तिष्ठतीति भगवच्चरणसेवैवासद्धर्म इति ज्ञापितम् । एवं सति तत्सूचकमेवेदं नाम ज्ञेयमिति भाव ॥ ४१ ॥

अत परमन्तर्गृहगतानामत्रागमने प्रतिबन्धोभूदित्येतत्फलं न जातामिति तन्निवारकं नामाहु ।

**भक्तप्रतिबन्धनिवारकाय नम** इति ॥ ४२ ॥

'जहुर्गुणमयं देहमि'त्यादिना प्रतिबन्धनिवृत्तिरुक्तेति भाव ॥ ४२ ॥

तदनन्तरं फलप्राप्तिस्वरूपसूचकं नामाहु ।

**अलब्धरासगोपीसद्योमुक्तिप्रदायकाय नम** इति ॥ ४३ ॥

अलब्धो रासो याभि , प्रतिबन्धकस्य जातत्वात्तादृशीनां गोपीनां सद्यो ध्यानमात्रेण मुक्ते प्रदाय । तत्रापि प्रशब्देन मुक्त्यनन्तरमलौकिकदेहप्राप्त्या सर्वत पूर्वमेव रासमध्यस्था जाता इति सूचितम् ॥ ४३ ॥

तत परीक्षानन्तरं ता अपि रासमध्यस्था जाता इति तत्सूचकं नामाहु ।

**परीक्षितगोपवधूसेवितचरणाय नम** इति ॥ ४४ ॥

परीक्षिता या गोपवध्वस्ताभि सेवित चरणारविन्दं यस्येति । 'पुरुषभूषण देहि दास्य' मित्युक्तत्वात्तदुपयोगिसेवा कृतवत्य । तदुक्तं 'ताभि समेताभि'रित्यादिना । अथवा । परीक्षिता परित ईक्षिता या गोपवध्वस्ताभिस्तथेत्यर्थ । अयं भाव । परीक्षानन्तरं 'इति विक्लवित'मित्यत्र हास उक्त । सोपि प्रकृष्ट परिहासज्ञापक स्वापेक्षाज्ञापकश्च । तथा च पूर्वं प्रहस्य परिहासं ज्ञापयित्वा पश्चात्प्रेमपूर्वकं परित ईक्षिता अवलोकिता इति तत्सूचकं परीक्षितपदमिति भाव । किञ्च । तादृशप्रकारकभगवदवलोकनानन्तरं तासामपि तादृशमवलोकनं जातमिति परीक्षिता परित ईक्षा सञ्जाता यासु ता परीक्षिता । ईक्षेत्युपलक्षण, यावन्त प्रेक्षणादयो विलासास्ते सर्वे जाता इति ज्ञेयम् । अत एव 'प्रियेक्षणोत्फुल्लमुखीभि'रित्युक्तं मूले । तथा च तादृशीभिस्तथेति भाव ॥ ४४ ॥

अत परं रमणानन्तरं तासा लोकन्यायेन मदो मानश्च जातावि 'त्मात्मान मेनिरे स्त्रीणामि'ति निरूपितम्। तत्र माननिवृत्तिसूचक नामाहु ।

**निजजनस्मयध्वंसनास्मिताय नम** इति॥ ४९॥

अय भाव । पूर्वं 'मुदारहासद्विजकुन्ददीधितिरि'त्यत्र कुन्दत्व स्नेहस्येत्यस्य विवरणे काममात्रपर्यवसायी स्नेह इति निरूपितम्। तत्तात्पर्यं च स्वामिनीना सदा निरुपधिस्नेह एव चेत्तिष्ठेत्सदा खण्डितादिभावासंभवे पूर्णरससभोग उभयत्रापि न संभवतीति निरुपधित्वाशमाच्छाद्य कामोपाधिकत्वं स्नेहस्य सपादितवानिति विवरणार्थो विवृत टिप्पण्याम्। एवं सति लौकिकरीतिस्नेहेन तदनुसार्यैव रमणस्वरूपमिति न पूर्णमनोरथ इत्यौदासीन्येन रमत इत्युक्तम्। अत एवैणाङ्क इवेति दृष्टान्त । तथा च कलङ्कित्वोक्त्या लौकिकनायकवद्विकारवत्त्वं सूचितम्। तेनास्य यथा पूर्णोप्यपूर्णो भवति पुनरग्रे क्रमेण पूर्णो भवति तथायमपि भविष्यतीति टिप्पण्या विवृतम्। एवं सति संप्रति लौकिकरीतिरेव कृतेति तासा मानोपि जात । अन्यथाऽलौकिकप्रवृत्तौ कथ समवेदिति तन्निवृत्तिसूचक नामोक्त 'निजजनस्मयध्वसनस्मिताय नम' इति। निजजनाना स्मयस्य ध्वंसन स्मित मन्दहासो यस्येति। पूर्वमुदारहासेत्यत्र हास उदार उक्त, यदा मानो दृष्टस्तदा तत्सकोच कृत इति तावतैव मानो निवृत्त इति ज्ञापितम्। अन्यथा तिरोधानज्ञाने अकस्माददर्शनमात्रेण ताप कथ भवेत्। न हि मानवतीना ताप क्वचिद् दृष्ट चर श्रुतो वेत्युपपत्तिरुक्ता नामनिरूपणे। तर्हि तिरोभाव किमर्थं कृत इति चेदुच्यते। अयमाशय । भगवत एतासा पूर्णरसदानार्थं विप्रयोगरसानुभव सर्वथा कर्तव्य । सर्वथा प्रपत्त्यभावे पूर्णरसदानमलौकिकरीत्या न भवतीत्येतासा मानस्य निवृत्तावपि मदो न गत । 'आत्मानं मेनिरे स्त्रीणामि'त्युक्तरूप इति, तत्प्रशमाय पुन प्रसादाय च तथा कृतमिति भाव । किञ्च। लौकिकरीत्या माननिवारणेपि मानस्तिष्ठत्येवान्यथा पुन क्षणानन्तरं कथ भवति। लौकिकरीतिरसदाने तथैव व्यवस्था। अलौकिके तु सर्वथा मानाभावोपेक्षित इति सोन्त स्थ इति सर्वकरणसमर्थो भगवानन्त प्रविश्यालौकिकरीत्या तं दूरीकृतवानिति सर्वमनवद्यम्। एवं सति यावदंशो लौकिकस्नेह स्थापितस्तावदंशो मानोपि मन्दस्मितेन निवर्तितो नाधिक इत्येतत्सर्वाभिप्रायज्ञापकमिद नाम ज्ञेयम्॥ ४९॥

ततो योषिदंशा सोन्तस्तिष्ठतीति तत्प्रशमाय पुन प्रसादाय तिरोहित इति तत्सूचक नामाहु ।

**कायिकतिरोभावितगोपीपुञ्जाय नम** इति॥ ४६॥

कायिकस्तिरोभाव स्वस्य तद्वशीकृतो गोपीपुञ्जो येन तादृशाय । एतेनान्त प्रकट इत्यर्थ । अथवा। भक्ताना कायिकसंबन्धार्थं यो नहि प्रकट स्थित स तिरोहित इति तिरोभावयुक्तो गोपीपुञ्जो येनेति॥ ४६॥

एका तु निर्दोषा स्थितेति सङ्ग एव स्थापितेति तत्सूचक नामाहु ।

---

१ दृशनमात्रेणेति पाठ ।

**राधासहचराय नम** इति ॥ ४७ ॥

सापि सहचारिणी, अयमपि तत्सहचर , यथा तस्या प्रीतिस्तथैव करोतीति सूचितम्। अत्रैषा मतमध्यम्येति विवरणे विवेचितमिति तासा मध्ये या मुख्या सैतत्सनाम्नीति ज्ञेयम् ॥४७॥

अत पर तिरोधानानन्तर तासामवस्थाज्ञापक नामाहु ।

**विरहव्याकुलगोपाङ्गनान्वेषितमार्गाय नम** इति ॥ ४८ ॥

पूर्वोक्तलौकिकरीतिस्नेहस्य निवृत्तेरलौकिकस्त्वेत स्थित । स च सङ्गेप्यासेचनकस्वभावात्तापकरस्तिरोधाने स्वदर्शनेन तापमुत्पादयेदेवेति विरहेण व्याकुला या गोपाङ्गनास्ताभिरन्वेषित मार्गो यस्य तादृशाय । इदं तु 'अन्तर्हिते भगवती'त्यार'भ्येत्येवं दर्शयन्त्यस्ता' इत्यन्तस्य नाम ज्ञेयम् ॥ ४८ ॥

अत पर या सङ्गे स्थिता तस्या अपि मानो जात इति तत्सूचक नामाहु ।

**ज्ञानतुल्यभक्तभ्रान्तिजनकाय नम** इति ॥ ४९ ॥

यथा'त्मानं मेनिरे स्त्रीणामि'ति तासा ज्ञानं जातं तथास्या अपि 'हित्वा गोपी कामयाना मामसौ भजते, अतोहं वरिष्ठे'ति ज्ञानं जातमिति तत्तुल्या जातेति ज्ञानेन तुल्यो यो भक्तस्तस्य भ्रान्तेर्जनकाय । यथा पूर्वं ज्ञानेन भ्रान्ता सती 'न पारयेहं चलितुमि'त्युक्तवती तथा तादृशीं प्रति भगवानपि भ्रमजनकमशक्यमेवोपदिष्टवान् 'स्कन्धमारुह्यता'मिति तथोक्तमिति भाव ॥४९॥

तदा ततोप्यन्तर्दध इति तस्या अपि विरहेण मूर्च्छान्ता तादृश्येवावस्था जाता तदा जीवनसम्पत्त्यर्थं स्वसान्निध्यं ज्ञापितमिति तत्सूचकं नामाहु ।

**निकटस्थितिबोधकाय नम** इति ॥ ५० ॥

एतच्च 'हा नाथे'त्यत्र 'महाभुजे'त्यस्य नाम ज्ञेयम् । एतादृगवस्थया दु खिता ता पुनरन्या सर्वा वने विचरन्त्यो ददृशु । तदेयं स्ववृत्तान्तं कथितवतीति सर्वासा स्वदोषस्फूर्तिर्जाता, भगवानस्मद्दोषेणैव गत इति ॥ ५० ॥

तद्दोषनिवृत्त्यर्थं गुणगानमेव साधनं ज्ञात्वा तदेव चक्रुरिति तत्सूचक नामाहु ।

**गोपीवर्णितनिखिलगुणाय नम** इति ॥ ५१ ॥

गोपीभिर्वर्णिता निखिला गुणा 'जयति तेधिक'मित्यारभ्य 'यत्ते सुजाते'त्यन्ता यस्य तादृशाय ॥ ५१ ॥

एतावति कृतेपि शुद्धिर्नजातेति तज्ज्ञापक नामाहु ।

**भक्तशुद्धिविलंबनाय नम** इति ॥ ५२ ॥

भक्तेषु शुद्धेर्विलम्बं करोतीति तथा । स्तोत्रेण यावती परीक्षा कर्तव्या स्थिता तावती सर्वापि कृता । अवस्थाद्वयमेव तासा स्थितम् । मूर्च्छाया लीलावेशो प्रलाप , स्वरूपस्थितौ गुणगानमिति । तथापि प्रादुर्भावकारणं न जातमिति शुद्धेर्विलम्ब ॥ ५२ ॥

तत सर्वेषामसाधनत्वे दैन्य प्रादुर्भूतमिति रोदनानन्तर 'तासामाविरभूदि'त्युक्त, तत्सूचकं नामाहु ।

**दीनकृपाप्रकटितरूपाय नम** इति ॥ ९३ ॥

*यदा दीना जातास्तदा कृपया प्रकटितं रूप येन स तादृशाय । अत एवोक्त 'भक्तानां* दैन्यमेवैकं हरितोषणसाधनमि'ति । प्राकट्यानन्तरं पूर्वं विलोकनमात्रेण 'प्रीत्युत्फुल्लदृशो जाता' इति नयनाल्हादकत्वमुक्तम् ॥ ९३ ॥

तत सर्वासा भगवन्मनसैवोत्थानमिति 'उत्तस्थुर्युगपत्सर्वास्तन्व प्राणमिवागत'मिति मनसोप्याल्हादकत्वं सूचितमिति तादृश नामाहु ।

**सर्वमनोनयनाह्लादकाय नम** इति ॥ ९४ ॥

बहिराल्हादे नयनानामुपयोग । अन्तराल्हादे मनस इति द्वयोरेव कथनम् । मनस्तु कर्मप्रधानं, नयनं ज्ञानप्रधानमिति ज्ञानकर्मेन्द्रियाल्हादकत्वकथनेन सर्वेषामेवेन्द्रियाणामाल्हादकत्वं सूचितम् । अतएवाग्रे 'काचित्कराम्बुज'मित्यारम्य 'चकास गोपीपरिषद्गतोर्चित' इत्यन्त तत्तत्क्रिया निरूपिता ॥ ९४ ॥

ततोग्रे सन्देहनिवर्तनार्थं प्रश्न कृत इति तज्ज्ञापकं नामाहु ।

**गोपिकावाक्यविचारकाय नम** इति ॥ ९५ ॥

गोपिकाना वाक्यस्य विचारकर्ता । 'मिथो भजंति ये सख्य' इत्यादिना ॥ ९५ ॥

प्रथमं सर्वेषा व्यवस्थामुक्त्वा स्वस्य सर्वेभ्यो भिन्नैव व्यवस्थेत्युक्त 'नाहं तु सख्य' इति तत्सूचक नामाहु ।

**स्वधर्मनिर्धारकाय नम** इति ॥ ९६ ॥

यद्यपि अन्यविषये ममैवैव व्यवस्था, भवतीषु न तथेत्युक्तम् ॥ ९६ ॥

मया परोक्षं भजतेति तत्सूचकं नामाहु ।

**सर्वरसाभिज्ञाय नम** इति ॥ ९७ ॥

सर्वपदेन संयोगविप्रयोगयोर्ये भावा अनन्ता 'प्रिया प्रियस्य प्रतिरूढमूर्तय ' इत्यादिना शृङ्गाधिक्ये पुंभावरूपा उक्तास्तेषा सर्वेषा रसानामभिज्ञस्तादृशाय । एतेन स्वस्य तादृशरसानुभवार्थं तासा चान्तरानन्ददानार्थं परोक्षभजनमिति सूचितम् । किञ्च, पूर्वं कायिकमनसो रसो नुभूत , सांप्रतं प्रश्नेन वाचनिकोप्यनुभूत इत्यपि सर्वरसाभिज्ञत्वमपि ज्ञापितम् । अत परं सर्वथा निर्दोषा जाता इति रासक्रीडारम्भ इति देहलीदीपन्यायेन सर्वरसाभिज्ञ इति नामोक्तम्। तथा च सर्वे रसा यत्र तादृशो रासस्तदभिज्ञ इति यावत्पर्यन्तमेतासा मनसि सन्देह कथमेतादृशीरसानात्मनदिति तावत्पर्यन्तं रससमूहरूपो रासो न भवतीति ज्ञानेन भगवता प्रश्नोत्तरै स निवर्तित इत्यत परं 'तत्रारभत गोविन्द' इत्यारम्य 'कृष्णविक्रीडितं वीक्ष्ये'त्यन्तं ये रसा.

तदभिज्ञ इत्येतत्सूक्ष्मपीदं ज्ञेयम्। तेन सर्वरसाभिज्ञ इत्यस्यावृत्ति कर्तव्या। एतावता रासक्रीडार्थं प्रवृत्त इति सूचितम्।

अत एवाग्रे तत्सूचकं नामाहु।

**रासमण्डलानेकरूपाय नम** इति॥ ५८॥

इदं तु 'तासां मध्ये द्वयोर्द्वयो' रित्यस्य नाम ज्ञेयम्॥ ५८॥

एवं नृत्यादिभि पूर्णो रस उच्छलित इति सर्वासा रमण प्रत्येकं कृतमिति तत्सूचक नामाहु।

**उद्दीप्तकामरसपूरकाय नम** इति॥ ५९॥

एवं नृत्यादिभिरुद्दीप्तो य कामरसस्तस्य पूरकाय। इदं तु 'एवं परिष्वङ्गे'त्यारभ्य 'कृत्वा तावन्त'मित्यन्तस्य नाम ज्ञेयम्॥ ५९॥

एतच्च महासौरतमिति मर्यादा न स्थितेति तत्सूचक नामाहु।

**अतिक्रान्तमर्यादाय नम** इति॥ ६०॥

अतिकान्ता मर्यादा शास्त्रक्रमो येन तादृशाय। तदुक्तं 'रतिचक्रे प्रवृत्ते तु नैव शास्त्रं न च क्रम' इति॥ ६०॥

एवं तासामुद्दीप्तकामपूर्तिर्जातेति दैन्य प्रादुर्भूतमिति तज्ज्ञापक नामाहु।

**भक्तदैन्यनिवारकाय नम** इति॥ ६१॥

भक्ताना यद्दैन्यमतिविहारेण रतान्ते जातं तस्य निवारक। एतदेवोक्त 'तासामतिविहारेण श्रान्ताना वदनानि स। प्राम्रूजत्करुण प्रेम्णेति'। भक्तीति पाठे भक्तिरूपवदनेषु दैन्यधर्मो प्रकटा इति तन्निवारक इति तथोक्तम्॥ ६१॥

तत श्रमनिवारणार्थं जलक्रीडा कृतवानिति तत्सूचक नामाहु।

**यमुनाकीर्तिजनकाय नम** इति॥ ६२॥

कीर्तिस्तु 'इय तव कथाधिके'त्यत्र श्रीमदाचार्यचरणै स्फुटीकृता यमुनाष्टके। एतावत्पर्यन्त रासलीलानामानि निरूपितानि॥ ६२॥

अत परमेतेषा फलसहितं निरोधमुक्त्वा येषा निरोधो न जातस्तेषा कर्तव्य इति तत्सूचकं नामाहु।

**सुदर्शनमोचकाय नम** इति॥ ६३॥

अत्र भक्तस्यान्यभजनादिकं सर्वथा न कर्तव्यम्। तत्करणे क्लेशो भवेदिति नन्दस्य दिवरात्रिकरणे सर्पग्रास उक्त। भगवत्कृतमोचनेन सर्पस्यापि मुक्तिर्जातेति सोपि सुदर्शनो जात इति तादृशयोने सकाशात्तस्य मोचक। तदुक्तं 'पादस्पर्शहताशुभ' इति मूले। एतेनान्यधर्मनिवृत्तिपूर्वको निरोधो नंदस्योक्त॥ ६३॥

अत पर बलदेवसाहित्येन रासलीला कृतेति तत्सूचकं नामाहु ।

**बलदेवाभीष्टदात्रे नम** इति ॥ ६४ ॥

अत्र पुष्टिमर्यादामार्गीयभक्तनिरोधार्थं प्रवृत्तिरूपा नामलीलोच्यते । सा वेदात्मन बलदेवपर्यवसानेति तत्साहित्येन लीलाकरणात्तदभीष्टमेव पूरितमिति तथोक्तम् ॥ ६४ ॥

अत एव प्रवृत्तेर्दोषरूपत्वादैत्यागमन, तद्वधेन सापि निर्दुष्टा जातेति तत्सूचकं नामाहु ।

**शंखचूडघातकाय नम** इति ॥ ६५ ॥

एतेन निर्दोषत्वात्फलप्रकरणात पातित्वमुक्तम् ॥ ६५ ॥

अत पर निवृत्तिरूपनामलीलासूचक नामाहु ।

**गोपीक्लेशनाशकगुणार्णवाय नम** इति ॥ ६६ ॥

इद तु 'गोप्य कृष्णे वनं याते'इत्यध्यायस्यैव नामोक्तम् ॥ ६६ ॥

ननु स्वरूपकार्यं गुणै कथ भवेदित्यत्राहु ।

**स्वसमानगुणाय नम** इति ॥ ६७ ॥

यथा स्वरूपं तथैव गुणा । एतावान्परं विशेष । गुणैरान्तरं रमणं, स्वरूपेण बहिरिति । तत्रा'प्यान्तरं तु परं फल'मित्युक्तत्वादान्तरमेव विशिष्टमिति गुणोत्कर्ष । जीवनसम्पादकत्वा दपि गुणानामुत्कर्ष इति तथोक्तमिति भाव । इद तु 'रेमिरेऽह सु तच्चित्तास्तन्मनस्का'इत्यस्य नाम ज्ञेयम् ॥ ६७ ॥

ननु गुणास्तु भगवतोनंता अगाधा इति कीदृशाना गान कृतमिति तत्सूचकं नामाहु ।

**सर्ववशीकरणद्वादशविधचरित्राय नम** इति ॥ ६८ ॥

सर्वेषा देवस्त्रीप्रभृतीना वशीकरणार्थं द्वादशविध चरित्रं यस्येति, अत्र प्रतिमुहूर्तं यच्चरित्रं करोति तस्य गानमिति, सम्पूर्णे दिवसे द्वादशैव मुहूर्ता इति विवरणे विवृतत्वात् द्वादशविध-मेव चरित्रमिति द्वादशयुग्मश्लोकैरेव गानमिति तत्सूचकमिदं नामेति ज्ञेयम् । इद तु एक दिवसचरित्रम् । एवं प्रत्यहमनेकप्रकारा भवन्तीति ज्ञापनार्थं पूर्वनाम्न्यर्णवपदमुक्तम् । एतावत्प र्यंतं फलप्रकरणनामान्युक्तानि ॥ ६८ ॥

अत पर त्रयस्त्रिंशाध्यायादारभ्य राजसप्रकरणनामानि निरूपयन्ति । तत्र प्रथम भक्तिप्रकरणे प्रद्युम्नरूपो भगवान्वसुदेवसुतत्वसिद्ध्यर्थं वंशवृद्धिरूपसृष्टिकार्यं राजलीलया कृतवान् । तेनैव राजसा भक्ता यथाधिकारं निरुद्धा । ते च द्विविधा संबद्धा असंबद्धाश्च । सर्वेषां निरोधश्चतुर्भि प्रकरणै कृत । इयदवधि निवृत्तिरूपो भजनमार्ग प्रकटित , यत सर्वोपि जन सर्वान् लौकिकवैदिकधर्मांस्त्यक्त्वा भगवत्परो जात । अधुना राजसप्रकरणे रजो लीलार्थं कर्ममार्ग प्रवृत्तिरूप स्फुटीकृत । तत्र लौकिकारिष्टे तत्प्रवृत्तिर्न सम्भवतीति प्रथमं तदेव नाशितवानिति तत्सूचकं नामाहु ।

**वृषभासुरविध्वंसिने नम** इति ॥ ६९ ॥

न्यरूपेणायं वृषभ , वस्तुतोरिष्ट इति नाम्नाप्यरिष्टासुर पापरूप धर्मप्रतिबन्धक , तस्य विध्वंसिने नाशकाय । । शरीरस्यानिष्टे शारीरो धर्मो न कर्तुं शक्य इति तन्नाशे कर्ममार्ग प्रवर्तिष्यत इति भाव । निश्च । एतावत्पर्यन्तं प्रमेयमार्ग एव प्रवर्तित । इदानीं प्रमाणमेव मुख्यं राजसप्रकरणेऽन्तर्निष्ठ एव मार्ग प्रकटित इत्यप्येतन्नाम्ना सूचितम् । अत एवाग्रे भक्तिमार्गविरोधो जातो नारदागमनेन । तेन च कर्ममार्गो ज्ञानमार्गश्च प्रवर्तित इति द्विधारूपो नारद उक्त । एतत्सर्वं विवरणे निरूपित प्रकरणार्थनिरूपणे कारिकाभिरिति सर्वमवदातम् ।

अत परमरिष्टवधानन्तरं गोकुले बलभद्रसहितप्रवेशकथनेन प्रमाणनिष्ठक्रियाशक्तिसहितो गोपीना नयनोत्सवरूपोपि जात इति विवरणे निरूपितम् । तेन तासा नयनतारारूप एव जात इति निरोधस्य सिद्धत्वादाविर्भूतस्वरूपस्य प्रयोजनं नास्तीति रजोलीला करिष्यमाणो जात इति ज्ञात्वा नारद कंसाय सर्ववस्तुबोधन कृतवानिति तत्सूचकं नामाहु ।

**नारदादिबोधिताक्लिष्टकर्मणे नम इति ॥ ७० ॥**

नारदेन आदितो बोधितानि अक्लिष्टानि कर्माणि यस्य तादृशाय । आदितो बोधनं पूर्ववृत्तान्तप्रकटीकरणम् । अत एवाक्लिष्टकर्मत्वं बोधितम् । 'अन्यथा त्वत्प्रेपिता राक्षसा महाबलिनैव हता भवेयु '। एते नारिष्टे निहते गोष्ठ'इत्यारभ्य 'न्यस्तौ स्वमित्रे नन्दे वै याभ्या ते पुरुषा हता'इत्यन्तस्य नाम निरूपितम् । तत एतच्छ्रवणानन्तरं विशेषतो दुर्बुद्धिर्जाता । यतो वसुदेवमारणार्थं प्रवृत्तस्तदा नारदेन निवारित इति भगवदिच्छयैव निवर्तित । नोचेन्नारदोक्तमपि न मन्येत ॥ ७० ॥

तत्सूचक नामाहु ।

**दुष्टदुर्बुद्धिनाशहेतवे नम इति ॥ ७१ ॥**

दुष्टस्य कंसस्य या दुर्बुद्धिर्वसुदेवमारणप्रवृत्तिरूपा तस्या नाशे हेतुरूपाय । इदं तु 'निशम्ये'त्यारभ्य 'निवारितो नारदेने'त्यन्तस्य नाम ज्ञेयम् ॥ ७१ ॥

एव दुर्बुद्धिं निवार्य बन्धनज्ञानमुत्पादितवानिति तत्सूचकं नामाहु ।

**शिष्टज्ञानदीपकाय नम इति ॥ ७२ ॥**

शिष्ट मारणादवशिष्टं बन्धनरूपं ज्ञानं तस्य दीपकायोत्पादकायेत्यर्थ । इदं तु 'तत्सुतौ मृत्युमात्मन । ज्ञात्वा लोहमयै पाशैर्बबन्धे'त्यन्तस्य नाम ज्ञेयम्। भगवदिच्छयैव तथा बुद्धिर्जातेति तथा नामोक्तमिति भाव । अन्यच्च । पूर्वं नारदोक्तज्ञान कंसस्यैव जातमेकान्ते कथितत्वात् । पश्चात्कंस सर्वान्प्रति ज्ञापितवान् । तदनन्तरं केश्यादिप्रेषण मुष्टिकचाणूरादिज्ञापनं च धनुर्यागार्थमाज्ञापनं तद्व्याजेन भगवदानयनार्थमक्रूरमन्त्रण प्रेषणं चेत्यादि सर्वाभिप्रायसूचकमप्येतन्नाम निरूपितम् । तथा च । शिष्टाना कंसव्यतिरिक्ताना केश्यादीनां ज्ञानं नारदोक्तं तस्य दीपकाय प्रकाशकायेत्यर्थ । भगवदिच्छयैव कंस प्रकाशितवान् । अन्यथैतत्सर्वं नारदोक्तमित्यनुक्त्वा तावन्मात्रमेव कथं बोधयेत् । यावत्प्रयोजनमेव भगवदिच्छा प्रेरयति

इति भाव । एवं सति 'प्रतियाते तु देवर्षौ कंस आभाष्य केशिन मित्यारभ्यै'वमादिश्य चाणूरं मन्त्रिणश्च विसृज्य स प्रविवेश गृह मित्यन्तस्य नाम निरूपितमिति ज्ञेयम् ॥ ७२ ॥

ततोऽग्रे केश्यागत, स च भगवता मारित इति तत्सूचकं नामाहु ।

**केश्यादिमहादुष्टनिबर्हणाय नम** इति ॥ ७३ ॥

एतावत्पर्यंतं स्वच्छन्दचारिणो दैत्या स्वयमेवोपद्रवं कृतवन्त । इदानीं तु कंसाज्ञया प्रवृत्ता । तत्र प्रथमं केशिनमेवाज्ञापितवान् । तदुक्तं 'केशी तु कंसप्रहित' इति । अत एवादि पदम् । आज्ञया ये कार्यार्थं प्रवृत्तास्तेषु मुख्य केशी तदादयो व्योमचाणूरप्रभृतय, तेषा निबर्हणाय मारकायेत्यर्थ । भाव्यर्थसूचकत्वेन तयोक्तमिति भाव । अथवा । केशी य आदितो महादुष्टस्तस्य निबर्हणायेति योजना ॥ ७३ ॥

एवं व्रजसंबन्धिनि समस्ते कार्ये संपन्ने नारदागमन जातमिति तद्बोधकं नामाहु ।

**नारदादिवन्दितचरणाय नम** इति ॥ ७४ ॥

नारदेनादौ स्वापराधक्षमापनार्थं स्तोत्रं कृत, पश्चाद्विज्ञापितमिति आदौ वन्दितं स्तुतं नम स्कृतमपि चरणं यस्य तादृशाय । इद तु 'देवर्षिरुपसङ्गम्ये'त्यारभ्यै'व यदुपतिं कृष्ण' मित्यन्तस्य नाम निरूपितम् । इद तु न केनापि ज्ञातमिति तदनुक्त्वा केशीवधानन्तर भगवान् गोकुले गत्वा व्रजसुखावहो जात इत्युक्तम् ॥ ७४ ॥

एकदा पुनर्भगवद्व्यतिरेकेण गोपाला वनं गता । तत्र निलायनक्रीडा कुर्वाणा जाता, तदा व्योमासुर आगतस्तं मारितवानिति तत्सूचकं नामाहु ।

**व्योमादिदुष्टपीडितगोपगोपीरक्षकाय नम** इति ॥ ७५ ॥

व्योमेनादौ दुष्टा स्वमायामोहेन स्वपरविवेकज्ञानरहिता कृता, अत एव पीडिता, कन्दराया क्षिप्ता, अत एवोक्त 'मयपुत्रो महामाय इति मूले । एतादृशा ये गोपबाला गोप्यश्च । गोप्योऽत्र तन्मातरो ज्ञेया । बालकविनाशो खेदेन मातृणामपि नाशसभावनेति तन्मारणेनोभयोरपि रक्षको जात इति भाव । ततो गुहापिधानान्निस्सार्य गोकुले समानीतवानिति सर्वत्र प्रत्यापत्तिर्निरूपिता, यथाग्रे लीलास्थभक्तानामपि तथाभाव एव तिष्ठेदिति । तथा चोक्त विवरणे सर्वत्र प्रत्यापत्तिर्नि रूप्यते, अग्रे लीलापराणामपि तथात्वायेति । एतेन गोपीपद लीलास्थपरमपि सूच्यते । तदा सर्वदा प्रत्यापत्तिज्ञानरूपभावस्फूर्त्यां मथुरागमनेऽपि तासा रक्षा कृतेत्युभयार्थसूचकं नामेदमिति ज्ञापितम् । इद 'त्वेकदा तु पशून् पाला नित्यारभ्य 'प्रविवेश स्वगोकुल मित्यन्तस्य नाम निरूपितम् ॥ ७५ ॥

अत पर श्रीगोकुले सद्भक्ति फलरूपा मानसीसेवारूपा स्थापनीयेत्यक्रूरागमन निरूप्यत इति तत्सूचकं नामाहु ।

**सद्भक्तिहेतवे नम** इति ॥ ७६ ॥

एतदेवोक्तं 'पञ्चत्रिंशे भक्तिमार्गस्थापनाय निरूप्यते। अक्रूरागमने भाति फलं नैव हि मानस'मिति। किञ्च। अक्रूरस्यापि सद्गतिहेतुरूपो भगवानेवेति तत्सूचकमप्येतन्नाम ज्ञेयम्। तदुक्तं 'सात्त्विकश्चेदभिमुखस्तदा भवति भक्तिमान्। अन्यथा दैत्यसंसर्गे स्तब्धा भक्तिर्भवेद्ध्रुव'मिति। इदं तु 'गच्छन्पथि महाभागो भगवत्यम्बुजेक्षणे। भक्तिं परामधिगतो ह्येवमेतदचिन्तय'दित्यस्य नाम ज्ञेयम् ॥ ७६ ॥

अतः परमक्रूरनिरोधज्ञापकं नामाह।

**अक्रूरादिभक्तमनोरथपरिपूरकाय नमः** इति ॥ ७७ ॥

अक्रूरस्यादिभक्तवर्ये मनोरथाः। अथवा। अक्रूरस्यादितो भक्तवर्ये मनोरथास्तेषां परिपूरकः। इदं तु 'किं मया चरितं भद्र'मित्यारभ्य 'भगवांस्तदभिप्रेत्य रथाङ्गाङ्कितपाणिना। परिरेभे ह्युपाकृष्य प्रीतः प्रणतवत्सलः। सङ्कर्षणश्च प्रणतमुपगुह्य महामनाः। गृहीत्वा पाणिना पाणिमनयत्सानुजो गृह'मित्यन्तस्य नाम ज्ञेयम्। यद्यप्ययं भक्त एव तथाप्यासुरसंसर्गेण तिरोहितेव भक्तिः स्थिता, पुनः भगवदाभिमुख्ये प्रकटेति। यथार्थो भक्त एव स्यात्तथा मनोरथान्कृतवानिति तत्पूरकोऽपि भगवान् जातः। तत्राप्याधिदैविकाक्रूरस्य मुक्तिज्ञापकः परीत्युपसर्ग इति सर्वं सुस्थम् ॥ ७७ ॥

ततो भगवन्मिलनानन्तरं बलदेवेन गृहं प्रापितस्तदा पुनर्विविधसत्कारैः सुसत्कृतो भगवता पृष्टः सर्ववृत्तान्तं कंसकृतं न्यवेदयत्तदाकर्ण्य नन्दादीन् गोपांश्च मथुरोत्सवदर्शनार्थं श्वो यास्याम इत्याज्ञापयत्तत्सूचकं नामाह।

**नन्दादिगोपमथुरागमनोत्सवहेतवे नमः** इति ॥ ७८ ॥

नन्दादयो ये गोपास्तेषां मथुरागमने य उत्सवः। यथा कौतुकार्थं यात्रायामुत्सवोऽपि भवति, तथोत्सवहेतुरूपः, तादृशबुद्धेरुत्पादकत्वात्तथेति भावः। इदं तु 'श्रुत्वाक्रूरवचः कृष्णो रामश्च परवीरहे' त्यारभ्य'व्रजघोषयत्क्षत्ते'त्यन्तस्य नाम ज्ञेयम् ॥ ७८ ॥

एतावत्पर्यन्तं तामसभक्तानां निरोधो यथा कर्तुमुचितस्तथा कृतः। इदानीं राजसभक्तानां दुःखं दूरीकरणार्थं कृष्णः कालात्मा जातः। बलश्च क्रियाशक्तिप्रधानो जातः, परवीरहननार्थं मुभावपि तथा जातौ। तदुक्तं 'श्रुत्वाक्रूरवचः कृष्णो बलश्च परवीरहा। प्रहस्य गोप्यं पितरं राज्ञादिष्टं विजज्ञतु'रितिमूले तथैव विवरणे विवृतमिति तत्सूचकं नामाह।

**भक्तदुःखमूलोच्छेदकाय नमः** इति ॥ ७९ ॥

भक्तयोः पित्रोः भक्तानां वा दुःखस्य मूलं कंसस्तस्य उच्छेदको जातः, मूलोच्छेदे शाखारूपा जरासन्धादयस्ते सर्वे नष्टा भविष्यन्तीति भावः। अथवा। भक्तदुःखदायकत्वेन सर्व एव मूलभूता इति कंसमारभ्य सर्वेषामुच्छेदकः क्रमेण जातः इति भावः। अत एव मथुरां प्रति गमनमुच्यते ॥ ७९ ॥

अतः परं मथुरागमनोद्देशानन्तरं गोपिकानां महद्दुःखेन परमदैन्यं जातमिति तत्सूचकं नामाह।

**गोपिकामनःकार्पण्यशीलहेतवे नम** इति ॥ ८० ॥

गोपिकाना मनसि यत्कार्पण्यस्य शीलं स्वभावस्तस्य हेतु । एतद्वियोगजनितदुःखेन तथा स्वभाव एव जात इति भाव । एतेनान्तिमावस्थासूचक परमदैन्य जातमिति सूचितम्। तत्र हेतु, स्वयमेवेति तथा नामोक्तम्। अत्राय भाव । एतावत्पर्यन्त दिवा विरहेण दैन्ये साय वनादागत्य बहि सङ्गेनानन्द दत्तवान्, साम्प्रतं दिवानिशमपि विरहेण तथाभावेनतस्तत्तल्लीलासहित प्रियप्राकट्येन बहि सङ्गेन च तथानुभवं कुर्वाणाना भक्ताना सर्वदाहर्निशमपि तथास्थितिश्चेद्भवेत्तदा भक्ति सुदृढा भवेदग्रिमकार्यमपि सिध्येदिति, तथा कार्पण्यशीलोत्पादने हेतुर्जात इति भाव । इदं तु 'गोप्यस्तास्तदुपश्रुत्य बभुवुर्व्यथिता भृश मित्यारभ्य 'विशोका अहनी निन्युर्गायन्त कृष्णचेष्टित'मित्यन्तस्य नाम ज्ञेयम् ॥ ८० ॥

अत परमीदृग्व्यवस्थाया जीवनं कथ स्थितमिति तत्स्थितिसूचक नामाहु ।

**गोपिकाविरहनाशकवाक्यपुञ्जाय नम** इति ॥ ८१ ॥

गोपिकाना विरहनाशको वाक्यपुञ्जो यस्य । इद तु सान्त्वयामास सप्रेम्णैरायास्य इति दौत्यकैरित्यादिवाक्यैर्जीवनमिति तत्सूचक नाम ज्ञेयम् ॥ ८१ ॥

ततो रथमारुह्याग्रे प्रचलित । कालिन्दीतीरे जलपानादिक विधाय रथोपरि स्थित, तदाक्रूर स्नानार्थं प्रवृत्तो जलमध्ये भगवद्दर्शन कृतवान् । तदा सन्देहो जातस्त भगवान्दूरीकृतवानिति तत्सूचकं नामाहु ।

**भक्तसंशयछेदकाय नम** इति ॥ ८२ ॥

भक्तस्याक्रूरस्य सशय लौकिकभावेन रथस्थाज्ञानरूपस्तस्यालौकिकमाहात्म्यज्ञानेनोच्छेदक । इद तु 'अक्रूरस्तावुपामन्त्र्य निवेश्य च रथोपरि। कालिन्द्या ह्रदमागत्य स्नान विधिवदाचरदि' त्यारभ्य' गिरा गद्गदया स्तौषीत्सत्त्वमालंब्य सात्वत । प्रणम्य मूर्ध्नावहित कृताञ्जलिपुट शनै' रित्यतस्य नाम ज्ञेयम् ॥ ८२ ॥

अत पर कीदृशं रूपं दर्शितवानिति तज्ज्ञापक नामाहु ।

**व्यापिवैकुण्ठवासिने नम** इति ॥ ८३ ॥

व्यापिवैकुण्ठमेव स्वस्वरूपसहितं मायोद्घाटनेन प्रकटीकृतवानित्यर्थ । अत एव यत्राक्रूरोध्यगात्पुरेति साधनप्रकरणान्ते निरूपितमेकवाक्यतासिद्ध्यर्थमिति भाव ॥ ८३ ॥

अत पर तादृग्दर्शनेनाक्रूरो यथास्तौत्तज्ज्ञापकं नामाहु ।

**अक्रूरादिभक्तस्तुतानन्तगुणाय नम** इति ॥ ८४ ॥

अक्रूर आदिर्यस्यैतादृशा ये भक्ता । यथान्येपि भक्ता जलमध्ये स्तुवन्ति तथाक्रूरोपि। सर्वसङ्ग्रहार्थमादिपदम्, तै स्तुता अनन्ता गुणा यस्य तादृशाय। इद तु नतोस्म्यह त्वाखिलहेतुहेतुं नारायण'मित्यारभ्य'हृषीकेश नमस्तुभ्य प्रपन्नं पाहि मा प्रभो इत्यन्तस्य नाम ज्ञेयम् ॥८४॥

अत परमये वस्प्रेपितो व्यानेनाकारणार्थमागतस्तादृशस्य कथमेतादृशमलौकिक प्रदर्शितवानिति तत्सूचकं नामाहु ।

**सत्यप्रतिज्ञाय नम** इति ॥ ८५ ॥

सत्या प्रतिज्ञा यस्य तादृशाय। अय भाव । यद्यप्ययं तथाविध एव तथापि पूर्वं मधुरात आगमनसमये प्रमेयबलेनैन भगवदाभिमुख्ये भक्त्युद्रेकेण मनोरथरूपा प्रपत्तिः कृतेति माहात्म्यज्ञानेन सा भक्तिर्दृढीकर्तव्येति तथा दर्शनं कारितवांस्तत्र स्वप्रतिज्ञैव हेतु'. तदुक्तं 'सकृदेव प्रपन्नाये'ति। अत एवोक्त 'सत्सांत्रिंशोऽतिसतुष्ट स्तोत्रं चक्रे मनोहरम्। चतुर्धा ज्ञातमाहात्म्य- इति'। पूर्वं माहात्म्यज्ञानाभावादितिभाव । अथवा। इदानीं राजसभक्तनिरोधार्थं प्रवृत्तो भगवान्यथाकथंचिदपि प्रपन्नस्य निरोध न करोति चेत्प्रतिज्ञाभङ्ग स्यात्। यतस्तदर्थमेवावतीर्ण इति तादृशस्यापि वैकुण्ठप्रदर्शनेन माहात्म्यज्ञानं कारितवानित्येतावदभिप्रायसूचकमिदं नाम निरूपितम्। अत एवाग्रे यदमुनायां प्रदर्शितं तदेतद्धृदि स्थिरमस्ति न वेति ज्ञापनाय भगवता प्रश्नः कृत । 'तमपृच्छद्धृषीकेश किं ते दृष्टमिहाद्भुत'मिति ॥ ८५ ॥

ततस्तेनाप्युत्तरित'मद्भुतानीह यावन्ती'त्यारभ्य'तं त्वानुपश्यतो भूमन् किं मे दृष्टमिहाद्भुत'मित्यन्त तत्सूचकं नामाहु ।

**स्वगुणप्रतिबोधकाय नम** इति ॥ ८६ ॥

स्वगुणाना प्रतिबोधको जात । इद तु मधुरानिकटगमनानन्तरं भगवता मधुराप्रवेशार्थमाज्ञप्तोऽक्रूरो 'नाह युवाभ्या रहित प्रवेक्ष्ये मथुरा प्रभो' इत्यादिपट्श्लोकैर्गुणरूपै. प्रार्थना कृतेति तत्सूचकं नाम ज्ञेयम्। यदि तद्धृदये माहात्म्यसहितभगवत्स्थितिर्न स्यात्तदा षड्गुणरूपत्वेन भगवत्प्रार्थना न कुर्यादिति प्रार्थनया स्वगुणाना पुन प्रतिबोधको जात इति तथा नामोक्तमिति भाव' ॥८६॥

एवमक्रूरं प्रेषयित्वा स्वयं मधुरादर्शनोत्सुको जात इति तत्सूचक नामाहु ।

**मधुरादर्शनोत्सुकाय नम** इति ॥ ८७ ॥

इद ॥ 'अथापराह्णे भगवान्कृष्ण सङ्कर्षणान्वित । मथुरां प्राविशद्गोपैर्दिदृक्षु' परिवारित'इत्यस्य नाम ज्ञेयम्। अत्र दिदृक्षु परिवारित इत्यनेन दर्शनोत्कण्ठा सूचिता ॥ ८७ ॥

प्रभुस्तु स्वसामग्रीसहित एव गच्छतीति भगवान्कृष्ण इतिपदसूचितमग्रिम नामाहु ।

**स्वाधारवैकुण्ठस्थापकाय नम** इति ॥ ८८ ॥

स्वस्याधारो यो वैकुण्ठस्तस्य स्थापक तादृशाय। अयं भाव । अत्र मधुरास्थभक्ताना-मानन्ददानार्थं मधुराप्रवेश उच्यते। तदुक्तं मधुरामनयद्राम कृष्ण चैव दिनात्यय' इत्यत्र। रामो रतिकर्ता, कृष्ण सदानद, फलरूप इति विवरणे। अग्रे पुनरथापराह्णे भगवान्कृष्णः सङ्कर्षणान्वित इत्यत्र भगवत्पदेनाविष्कृतसर्वधर्म इति कृष्णपदेन च तदर्थमेवावतीर्ण इति विवरणे विवृतम्। एवं सति रामो ह्यक्षरात्मक वैकुण्ठश्च तथा। तच्च भगवद्धामाधारभूत पुरुषोत्तमस्तत्रैव प्रकटो भवति, नान्यत्रेति सिद्धात इति यथा सर्वत्र पुरुषोत्तमावेशो भवेत्तदर्थमक्ष-

रानंदात्मकालौकिकवैकुण्ठधर्मा स्थापिता इति तथा नामोक्तमिति भाव । किंच । इदानीं मधुरास्थभक्तनिरोधार्थं प्रवृत्त इति यथा प्रादुर्भावसमये 'अथ सर्वगुणोपेत काल परमशोभन' इत्यादिना आधिदैविका अलौकिकधर्मा प्रकटितास्तथा मधुराप्रवेशसमयेप्यलौकिकधर्मा कर्तव्या इति सर्वत्राध्यात्मिकालौकिकधर्मा प्रकटिता । केवलदैत्यसंबंधिमधुरायां लीलाऽसमवेन भगवत प्रवेशाभावात् । अत एव 'मधुरा प्राविश'दित्यत्र स्वनगरीमिति विवरणे निवृतम् । स्वधर्मस्थापनेन स्वकीया कृतेत्यर्थ । अत एव भगवद्दर्शनानतरमेव चतुष्टयपुरुषार्थरूपा जातेति दर्शनानंतरं चतुर्भिश्श्लोकै पुरीवर्णनं कृतमित्येतावदभिप्रायसूचकमिदं नामेति ज्ञेयम् । किंच । अत्र कंसादिमारणार्थमपि प्रवेश उच्यते इति तत्र कालस्वरूपत्वेनैव प्रवेश । अत एव सकर्षणसमन्वित इत्युक्तम् । भक्तानामानंददानार्थं प्रवेशो कृष्णरतिवर्धकत्वेन राम इत्येव नामोक्तमिति विस्तरेणालम् ॥ ८८ ॥

अत एव तादृशानंदानुभवार्थमलौकिककारणमपेक्षितमिति तत्सूचकं नामाहु ।

**पौरपुरन्ध्रीपुण्यजनकाय नम इति ॥ ८९ ॥**

पौराणा पुरंध्र्य , पुरंध्रीपदेन पतिव्रता सूचिता । यद्यपि तासा मत स्वपतावेव, पातिव्रत्यमनन्य पुण्यमप्युत्कर्षमेव, तथापि तत्त्वेतदानन्दानुभवसाधनं न भवति, किंतु लौकिकपतिस्साधनमेवेति स्वानंदानुभवार्थमलौकिकं यत्पुण्यं भाग्यं च तस्य जनकायोत्पादकाय । एतेन प्रासादप्रवेशसहितभगवदानन्दानुभवो निरूपित । अत एवोक्तं 'कुप्यस्त्वचो जहुरनतमरंदमाधि मिति । एतेन प्रपचविस्मृतिपूर्वकमगवदासक्तिजनितो विशिष्टो भावो निरूपित । अत एव दर्शनागमनसमयप्रकारनिरूपणे काश्चिदित्यत्र विवरणे विशेषत स्फुटीकृतम् । भगवति भावो विशेष अन्यथा लौकिकयेव भाषा भवतीति । अत एवैतादृशालौकिकभाग्यव्यतिरेकेणै तादृशो भावो न भवतीति तथा नामोक्तमिति भाव । इदं तु 'हर्म्याणि चैवारुरुहुर्नृपोत्सुका' इत्यारभ्य 'ऊचु पौरा अहो गोप्यस्तप किमचरन्मह'दित्यंतस्य नाम ज्ञेयम् ॥ ८९ ॥

एवं येषा भगवति भावस्तेषा फलं निरूप्य येषा भगवति अन्यथा बुद्धिस्तेषा फलं यथा भवति तादृशं नामाहु ।

**रजकादिदुष्टनाशकाय नम इति ॥ ९० ॥**

रजक रंगकारस्तदादयो ये नीचा दुष्टास्तेषा नाशक । उत्तमवस्त्रप्रार्थनानंतरमदानेन मारित इत्यर्थ । अन्येषामानरा दोषा नाशिता इति ज्ञापनायादिपदम् । अन्यथा नीचत्वसाम्येपि कथमन्येषु भगवद्भाव ॥ ९० ॥

अत एव तत्सूचकं नामाहु ।

**वस्त्राद्यनेकाकल्पभूषितरूपाय नम इति ॥ ९१ ॥**

वस्त्रादयो ये अनेका नानाविधा आकल्पास्तैर्भूषितं रूपं यस्य। इदं तु 'वसित्वात्मप्रिये वस्त्र' इत्यस्य नाम ज्ञेयम्। रजकमारणानतरं वायको मिलित । स तु वस्त्रपरिधापनचतुर भगवंतं दृष्ट्वा सतुष्ट यथायोग्यवस्त्रादिभूषणरचनामरचयत्॥ ९१॥

तत सुदाम्नो मालाकारस्य गृहं गत इति तेनापि समलंकृत इति तदुभयकार्यसूचक नामाहु ।

**वायकसुदामभक्तालंकृताय नम** इति॥ ९२॥

वायक सुदामा चोभावपि भगवद्दर्शनमात्रेणार्तिर्निवृत्तदोषौ भक्तौ च जाताविति भगव त्संमाननं कृतवंताविति ताभ्यामलकृत । वस्त्रपरिधापनेन वायकेन, सुगंधपुष्पमालादिना सुदाम्नेति विवेक ॥ ९२॥

तत प्रसन्नो भगवान्प्रार्थित ददाविति तत्सूचक नामाहु ।

**अत्युदाराय नम** इति॥ ९३॥

अल्पकरणे बहु दानेनोदारत्व सिध्यति। तत्राप्यलौकिकज्ञापकमतीत्युपसर्ग उक्त । इदं तु 'प्रणताय प्रपन्नाय ददतुर्वरदौ वरा'नि-यस्य नाम ज्ञेयम्॥ ९३॥

अग्रे राजमार्गेण गच्छन्ती कुब्जा मिलिता, तया पुन सत्कृत इति तत्सूचकं नामाहु ।

**कुब्जानुलेपालंकृताय नम** इति॥ ९४॥

कुब्जासंबंधी योनुलेपस्तेनालंकृत । एतेन तन्निरोधो निरूपित ॥ ९४॥

अत परं दोषनिवृत्तिपूर्वक फलोपयोगिगुणा सपादिता इति तत्सूचकं नामाहु ।

**कुब्जादिभक्तसहजदोषदूरीकरणाय नम** इति॥ ९५॥

कुब्जत्वादयो ये भक्तस्य सहजदोषास्तेषा दूरीकरण येन तादृशाय। सा न केवलं कुब्जा, किंतु त्रिवक्रा ग्रीवापादमध्यभागेषु, ते सर्वे दोषा दूरीकृता । न केवल तावन्मात्रं किंतु गुणा अपि सर्वे संपादिता ॥ ९५॥

तत्र प्रयोजनज्ञापकं नामाहु ।

**स्वलीलौपयिकरूपाभिव्यंजकाय नम** इति॥ ९६॥

स्वलीलोपयोगि यद्रूप तस्याभिव्यजक प्रकाशक । लक्ष्मीसमानभाग्यमलौकिकमेव रूपं कृतवानित्यर्थ । इद तु 'सा तदर्जुसमानाङ्गी बृहच्छ्रोणिपयोधरा। मुकुंदस्पर्शनात्सद्यो बभूव प्रमदोत्तमे'ति श्लोकविवरणे यथा विवृतं तत्सूचक नाम ज्ञेयम्॥ ९६॥

तदनंतरं कुब्जायै वरं दत्वा राजमार्गेण गच्छन्सर्वेषा उत्सवरूपो जात इति तत्सूचकं नामाहु ।

**मथुरामहोत्सवाय नम** इति॥ ९७॥

मथुराया महोत्सवरूप, उत्सवस्यालौकिकत्वसूचक महत्पदम्। तेन भगवदागमने सर्वे षामन्यधर्मविस्मृतिपूर्वकं भगवदुत्सव एव जात इति ज्ञापितम्। इद तु 'विसृज्य माध्व्या

वाण्ये'त्यारभ्य 'तद्दर्शनस्मरक्षोभादात्मान नाविदन्स्त्रिय । विस्रस्तवास कबरवलयालेख्यमूर्तय' इत्यंतस्य नाम ज्ञेयम् ॥ ९७ ॥

एवं सर्वेषा निरोध कृत इति तत्सूचकं नामाहु ।

**दैत्यधर्मनिवारकाय नम** इति ॥ ९८ ॥

अयं भाव । पूर्वं मधुपुरी दैत्यसंबंधिनी विशेषत इदानीं दैत्याकान्तेति तद्वासिनोपि दैत्यधर्माविष्टदेहेंद्रियादय । भगवत्प्रवेशमात्रेणैव दैत्यधर्मा सर्वे निवृत्ता । अत एव पूर्वं मथुराप्रवेशसमये स्वाधारवैकुठस्थापकाय नम इति नामोक्तमिति तद्धर्माविर्भावं कृत्वैव मथुरा प्राविशदिति दैत्यधर्मा स्वयमेव नष्टा इति स्वरूपेणैव सर्वं कृतवान्न साधनबलेनेति भगवन्माहात्म्य निरूपितम् । एतेनातस्था दैत्यधर्मा निवारिता ॥ ९८ ॥

अत पर बाह्यस्था अपि निवारणीया इति धनुर्भंग कृत इति तत्सूचकं नामाहु ।

**धनुर्भंगबोधितकालाय नम** इति ॥ ९९ ॥

धनुर्भंगेन बोधित कस प्रति ज्ञापित कालो येन । सर्वजगद्व्यापकेन धनुर्भंगशब्देन कसस्य कालज्ञानान्महाभयं जातमिति भाव ॥ ९९

ततस्तद्रक्षका युद्धार्थं प्रवृत्तास्तत्सहायार्थं कंसेनापि चतुरंगबलं प्रेषितं तत्सर्वं धनु[illegible] खलेनैव लीलया क्षणमात्रेण मारितमिति तत्सूचक नामाहु ।

**अतिसामर्थ्यबोधिताक्लिष्टकर्मचरित्राय नम** इति ॥ १०० ॥

अतिसामर्थ्येपि बोधितं अक्लिष्ट कर्म येन तादृशं चरित्रं लीलाविलासगतिरूपं यस्य । अयं भाव । धनु शकलमात्रेण तावती सन्नीभूता सेना मारिता । इदं [illegible] लोके बालकस्य अतिसामर्थ्यम्, तत्करणेप्यक्लिष्टकर्मत्वं बोधितम् । यतस्तदेव युद्धावेश परित्यज्य मनोहर रूप सन् दृष्ट पुरसपदो निरीक्ष्यमाणो व्यचरत् । इद तु 'बलं च कंसप्रहितं हत्वे'त्यारभ्य 'तेज प्रागल्भ्यरूपं च मेनिरे पुरुषोत्तमा वित्यतस्य नाम ज्ञेयम् ॥ १०० ॥

अत पर धनुर्भंगादिश्रवणेन कंसस्य भयात्प्रजागरदु स्वप्नादिकमपि जातमिति तत्सूचक नामाहु ।

**मृत्युधर्मबोधकाय नम** इति ॥ १०१ ॥

इदं तु 'दीर्घप्रजागरो भीत' इत्यारभ्य 'पश्यन्मरणसत्रस्तो निद्रा लेभे न चिंतये'त्यंतस्य नाम ज्ञेयम् ॥ १०१ ॥

अत पर रात्रौ निवृत्ताया कंसेन मल्लक्रीडावलोकनार्थं राजान पुरवासिनश्च सर्वे समाकारिता , तदा भगवानप्यागत रगद्वारे कुवलयापीडनामा हस्ती स्थापित , तं पूर्वं मारितवानिति तत्सूचकं नामाहु ।

**कुवलयापीडघातकाय नम** इति ॥ १०२ ॥

कुवलयस्यासमंतात्पीडा येनेति । मृत्युरूपं त मारितवान् । भगवांस्तु कालात्मा कालस्यापि नियतेति तस्यापि दंडधारी जात इति भाव ॥ १०२ ॥

अत एव तत्सूचकमग्रिमं नामाहु ।

**गजदंतवरायुधाय नम** इति ॥ १०३ ॥

गजदंतावेव वरमायुध यस्येति । एतेन कंसादिभिर्मारकत्वेन कालरूप एव दृष्ट इति सूचितम् ॥ १०३ ॥

यद्यप्यस्मिन्समये वीररस एव संभावितस्तथापि भगवानक्लिष्टकर्मा लीलयैव सर्वं कृतवानिति सर्वेषामाल्हादकारक एव जात इति तत्सूचकं नामाहु ।

**निखिलजनमनोनयनाल्हादकाय नम** इति ॥ १०४ ॥

तादृशेपि वेषे निखिलजनाना मनसा नयनाना चाल्हादको जातो, न तु वीररसावेशेन भयानको जात । नेत्रद्वारा प्रविष्टो मन आल्हादयित्वा सर्वेंद्रियाणामेव तथा जात इति भाव । इदं तु 'निरूढस्वेदकणिकावदनाम्बुरुहो बभा'वित्यस्य नाम ज्ञेयम् ॥ १०४ ॥

अग्रे पुनर्यथाधिकारं स्वरूप सर्वरसात्मक दृष्टमिति तत्सूचकं नामाहु ।

**सर्वरसाविर्भावकाय नम** इति ॥ १०५ ॥

इदं तु 'मल्लानामशनिर्नृणा नरवर' इत्यस्य नाम ज्ञेयम्। अत्र जना नवविधा दशविधा वा । सगुणा निर्गुणाश्चेति यथाधिकार दशरसात्मक ददृशुरिति भाव ॥ १०५ ॥

अत पर स्त्रीणा स्मरो मूर्तिमानित्युक्त्या तादृशसमये तासा तद्रूप एव दृष्टिगोचरो जात इति कथ ज्ञापित इति तज्ज्ञापक नामाहु ।

**निखिलकामिनीप्रेमावलोकिताय नम** इति ॥१०६ ॥

इद रंगप्रवेशानंतरं 'निरीक्ष्य तावुत्तमपूरुषौ जना' इत्यारम्य 'जनेष्वेव ब्रुवाणेष्वि'त्यंतस्य नाम ज्ञेयम् । यद्यप्यत्र सर्वेषामेव यथाधिकारं भगवति भावो जातस्तथापि मुख्यतया स्त्रीणामेवार्थे तादृक्स्वरूपेण प्रकट इति तासामेव मुख्यत्वात्तादृग्भावपूर्वकप्रेमावलोकितत्व तासामेवेति तथा नामोक्तमिति भाव । अत एव कामिनीपद दत्त नास्ति । किंच । अग्रेपि 'तद्बलाबलवद्युद्धं समेता सर्वयोषित ऊचु रित्यारभ्यै'व प्रभाषमाणासु स्त्रीषु योगेश्वरो हरि । शत्रुं हंतु मनश्चक्रे' इत्यत प्रेमोद्रेकेणैव तादृशानौचित्यज्ञापकवचनावलोकितादीनिति तत्सूचकमिदं नामेति ज्ञेयम् ॥ १०६ ॥

अत पर दैत्या मारणीया इति तथा कृतवानिति तत्सूचकं नामाहु ।

**चाणूरादिमहामल्लदैत्यगर्वनिबर्हणाय नम** इति ॥ १०७ ॥

चाणूरादयो ये महामल्ला , महत्पदमतिबलवत्त्वसूचकं । त एव दैत्यास्तेषा गर्वस्तस्य निबर्हणाय संहारकाय । इद तु 'चाणूरो वाक्यमब्रवी दित्यारभ्य 'चाणूरे मुष्टिके कूटे सले तोसलके हते । शेषा प्रदुद्रुवु रित्यंतस्य नाम ज्ञेयम् ॥ १०७ ॥

तत कंसोपि मारित इति तत्सूचकं नामाहु ।

**कंसघातकाय नम** इति ॥ १०८ ॥

इदं तु 'हतेपु मल्लवर्येपु' इत्यारभ्य 'कंस परेतं विचकर्ष भूमा'वित्यतस्य नाम ज्ञेयम्॥१०८॥

एवं दुष्टान्मारयित्वा भक्तदु खनिवृत्तिं कृतवानिति तत्सूचक नामाहु ।

**वसुदेवदेवकीदुःखनिवारकाय नम** इति ॥ १०९ ॥

वसुदेवदेवक्यो यदु ख कंसकृतं तस्य निवारको जात इति लौकिकनिरोध दूरीकृत्य स्वनिरोधं कृतवानिति भाव । इदं तु 'मातरं पितरं चैव मोचयित्वा च बंधना'दित्यारभ्य 'सस्वजाते न शंकिता'वित्यतस्य नाम ज्ञेयम् । विशेषस्तु विवरणे द्रष्टव्य ॥ १०९ ॥

अत परं स्वस्य यदुपतित्व प्रकटीकृतमिति तत्सूचक नामाहु ।

**यदुकुलनलिनीविकाशकाय नम** इति ॥ ११० ॥

यदुकुलमेव नलिनी तस्य विकाशक भानुरित्यर्थ । अत्र यदुकुलस्य कमलं विहाय स्त्रीवाचकनलिनीदृष्टान्त उक्त । तेन यथा पतिं विना स्त्री दु खिता भवति, तथैव तावत्पर्यंतं यदु कुलं स्थितम् । अथ च रात्रौ यथा भानुं विना नलिनी तेन प्रचुरतमस्तोमवद्धितता ह्सुरनिकर निरासके भगवत्भास्करे समुदयति सति यदुकुलनलिनीविकासो युक्त एवेति तथा नामोक्तम् किंच । स्त्रीदृष्टाते इदानीं यदुकुले पतित्वधर्म प्रकटीकृतवानित्यर्थ । किंच । नलिनीरसे बद्ध-मूलेति भानुरपि विकाशको भवति नोचेच्छुष्कैव भवेत् । तथा भगवति ये भावयुक्ता रसेन बद्धमूलास्तेषा विकाशको नासुराणामिति सूचितम् । इद 'तुवाच पितरावे'त्येत्यारभ्य 'कृष्णसं कर्षणभुजैर्गुप्ता लब्धमनोरथा । गृहेषु रेमिरे सिद्धा कृष्णरामा गतज्वरा' इत्यंतस्य नाम ज्ञेयम् ॥ ११० ॥

तत कालात्मक भगवदागमने लौकिका कालधर्मा अपि निवृत्ता इति तज्ज्ञापक नामाहु ।

**कालदुःखनिवारकाय नम** इति ॥ १११ ॥

इदं तु 'वीक्ष्यतोहरह प्रीता मुकुन्दवदनाबुजम् । नित्य प्रमुदितं श्रीमत्सदयस्मितवीक्षणम् । तत्र प्रवयसोप्यासन्युवानोतिबलौजस । पिबतोक्षैर्मुकुन्दस्य मुखाबुजसुधा मुहु रिति श्लोकद्वयस्य नाम ज्ञेयम् । तत्र पूर्वश्लोकार्थविवरणे सदयस्मितवीक्षणमिति मुखारविंदे धर्मत्रयमुक्तम् । दया धर्मस्थानीया, स्मितं भक्तिस्थानीयं, वीक्षण ज्ञानरूपमिति त्रिभिर्धर्मैर्लौकिकभावा अपि स्वरू पनिष्ठभावा कृता निरुद्धा एवेत्यर्थ । तादृशाना कालातिक्रम सुगम इति तत्र प्रवयसो प्यासन्युवान इति द्वितीयश्लोक उक्त । एवं सति यदुकुले सर्वेप्यलौकिकधर्मा प्रकटीकृता इति ज्ञापितम् ॥ १११ ॥

अत परं वसुदेवेनैतावत्पर्यंतं जन्मारभ्य संस्कारेषु यद्दातव्य तत्प्रत्यक्षत किमपि न दत्त स्थितमिति पुत्रोपनयनसंस्कारे सर्वं दत्तवानिति तत्सूचक नामाहु ।

**प्रदर्शितसदाचाराय नम** इति ॥ ११२ ॥

यद्यपि भगवत संस्काराणा नोपयोगस्तथापि यदुकुले प्रादुर्भूतस्य तदनुकरण कर्तव्यम् । अन्यथा सदाचारोच्छेदप्रसंग स्यात् । अत प्रदर्शित सदाचारो येनेति 'अथ शूरसुतो राज'न्नित्यारभ्य 'गर्गाद्यदुकुलाचार्याद्वायत्र व्रतमास्थिता'वित्यंतस्य नाम ज्ञेयम् । किंच । प्रकर्षेण दर्शिता सदाचारधर्मो येन, भगवति विनियोगेनैव सदाचाराणामपि प्रकर्ष । स इदानीमेव जात इति तथा नामोक्तमिति भाव ॥ ११२ ॥

द्विजत्वसंस्कारानतरं वेदाध्ययनम् । ततो धनुर्विद्याध्ययनादिक, ततो गुरुदक्षिणेति तत्सूचक नामाहु ।

**सांदीपनिमृतापत्यदात्रे नम** इति ॥ ११२ ॥

इद तु 'अथ गुरुकुले वास'मित्यारभ्य 'तथेति तेनोपनीत गुरुपुत्र यदूत्तमौ । दत्वा स्वगुरवे' इत्यतस्य नाम ज्ञेयम् । अत्र निरोधार्थं माहात्म्यसूचक चरित्रं वक्तव्यमित्येतावत्कथनेनैव पूर्वोक्तमध्ययनादिक सर्वं सूचितमिति भाव ॥ ११३ ॥

अत परं मथुरागमनानतर स्वकीयानामेव सर्वेषा दु खनिवृत्तिपूर्वकमवेक्षा कर्तव्येति प्रथम नंदादीना समाधानार्थमुद्धवं प्रेषितवानिति तत्सूचक नामाहु ।

**नंदादिज्ञानबोधकाय नम** इति ॥ ११४ ॥

इद तु 'गच्छोद्धव व्रज सौम्ये'त्यारभ्य 'विनाच्युताद्वस्त्वितर न चान्यत्, स एव विष्णु परमार्थभूत' इत्यतस्य नाम ज्ञेयम् । अत्र नदादीना भगवति भावस्तु दृढ एव पर लौकिक । स इदानीमलौकिक कर्तव्य इति ज्ञानोपदेश । तेन माहात्म्यज्ञानेन माहात्म्यज्ञानपूर्वक सुदृढ स्नेहो भविष्यतीत्यलौकिकप्रकारेणापि भगवतं प्राप्स्यतीत्येतावदभिप्रायसूचक नामोक्तमिति भाव ॥ ११४ ॥

एवमेव यशोदाया अपि भावो जात, परतु स्नेहोद्रेक एव सदा स्थित इति तत्सूचक नामाहु ।

**यशोदास्नेहरक्षकाय नम** इति ॥ ११५ ॥

इदं त्वि'ति सम्मृत्य संस्मृत्ये'त्यारभ्य'शृण्वत्यश्रूण्यवास्राक्षीत्स्नेहस्नुतपयोधरे'त्यंतस्य नाम ज्ञेयम् । तादृशे ज्ञाने जातेपि स्नेहस्थितौ भगवानेव रक्षक इति तथोक्तमिति भाव ॥११५॥

अत परं गोपिकाना समाधानसूचक नामाहु ।

**गोपिकादिलौकिकभावदोषदूरीकरणाय नम** इति ॥ ११६ ॥

गोपिकाना आदौ यो लौकिकभाव उद्धवावलोकने भगवदीयत्वनिश्चयेन मानरूप तज्जनितो यो दोषस्त्रिदोषरूप, परं साध्यो न त्वसाध्य । अन्यथा अचिकित्स्य एव स्यात् । तादृशस्य दूरीकरण दुर्गकर्तव्यर्थ । इदं तु 'रहस्यपृच्छदुपविष्टमासने विज्ञाय संदेशहर रमापते'त्यारभ्यै'वं प्रियतमादिष्टमाकर्ण्य व्रजयोषित । तानुचुरुद्धवं प्रीतास्तत्संदेशागतस्मृती रित्यंतस्य नाम ज्ञेयम् । विशेषस्तु विवरणे द्रष्टव्य ॥ ११६ ॥

एवमुपदेशेनोद्धवस्याप्युपदेशो जात इति तत्सूचकं नामाहु ।

**उद्धवादिमध्यमभावबोधकाय नम** इति ॥ ११७ ॥

अयं भाव । पूर्वमुद्धव परमभक्त । 'नोद्धवोऽण्वपि मन्न्यून' इत्यादिना स्तुतो भगवत-
स्तथापि स्वामिनीहृदयस्थितभावरूपभक्तिमार्गज्ञानं तु व्रजागमनानंतरमेवासीन्मनसि तथाविधो
भावोपि जात , परंतु तादृश्यवस्था न जातेति स्वस्मिन्न्यूनभाव एव स्फुरितोत एवै'ता पर'मिति
स्तुति कृता । एतदेव पश्चात्तासूभयं दृष्ट्वा स्वस्मिन्नेकमेवेत्याधिक्या'त्ता नमस्यन्निदं जगा'वित्यु
क्तम् । अत एवै'ता परं तनुभृतो' इत्यारम्य सर्वेषा भक्तानामेतदपेक्षया मध्यमत्वमेव निरूपि
तम् । पदसबंधस्तु उद्धवादयो ये भक्तास्तेषा मध्यमो हीनो यो भावस्तस्य बोधको ज्ञापक
इत्यर्थ । उद्धवस्य भक्तभावावलोकनात्स्वस्मिन् तथाज्ञानं जातमिति भाव । अत एव साक्षात्त-
त्पदवंदनायोग्यता मत्वा तत्संबंधिरेणु नमस्कृतवानित्युक्तम् । 'वन्दे नदव्रजस्त्रीणा'मिति ॥ ११७॥

तत उपदेशफलसूचकं नामाहु ।

**स्वनिष्ठमनोदोषनाशकाय नम** इति ॥ ११८ ॥

स्वस्मिन्भगवति निष्ठा स्थितिर्यस्यैतादृशो य मनोदोष पुत्रत्वेन लौकिकभावरूप
गोपिकाना च 'नि स्व त्यजति गणिका' इत्यारभ्योपालभरूपो यो दोषस्तस्य नाशकस्तादृशाय ।
तदारभ्य स्वस्मिन्नलौकिकसाक्षान्नित्यलीलामध्यपातित्वज्ञानेन भगवति च साक्षात्पुरुषोत्तमज्ञा-
नेनात्मनि तदभेदज्ञानेन पूर्वोक्तदोषा सर्वे निवृत्ता इति तद्दोषनाशक स्वयमेव जात इति
तथा नामोक्तम् । अत एवाग्रे 'नंदादयोनुरागेण प्रावोचन्नश्रुलोचना । मनसो वृत्तयो न स्यु'रित्या
रभ्य 'रतिर्न कृष्ण ईश्वरे' इति प्रार्थनोक्तेत्येतावदभिप्रायसूचक नामेद ज्ञेयम् ॥ ११८ ॥

एव मुख्यभक्ताना सान्त्वन कृत्वा राजसत्वात् प्रथमं कुब्जासान्त्वनं चक्र इति तत्सूचक
नामाहु ।

**कुब्जादिमनोरथपूरकाय नम** इति ॥ ११९ ॥

राजसाना मध्ये आदौ कुब्जाया एव मनोरथपूरको जात इति प्रथमं कुब्जाकथनम्॥११९॥

अग्रे क्रमेण सर्वेषा भविष्यतीति तत्सूचकं नामाहु ।

**अक्रूरादिभक्तसन्मानहेतवे नम** इति ॥ १२० ॥

अक्रूर आदिर्येषा तादृशा ये भक्तास्तेषा सन्मानहेतुरूप । इद तु 'त्वं नो गुरु पितृव्यश्चे'-
त्यारभ्य 'स भवान्सुहृदा वैत'दित्यतस्य नाम ज्ञेयम् । आदौ कुब्जाया मनोरथपदमुक्त्वाऽक्रूरे
सन्मानपदमिति यथाधिकार भावभेदो ज्ञापित ॥ १२० ॥

अत्रादिपदेनान्येषामपि सन्माननं सूच्यत इति तत्सूचक नामाहु ।

**भक्तहितचिन्तकाय नम** इति ॥ १२१ ॥

भक्ताना स्वीयाना पाण्डवाना हितस्य चिंतक विचारकर्ता, येन तेषा हित भवति
तत् कर्तव्यमिति । अनेनाक्रूरेण सहाय विचार कृत इति सूचितम् । इद तु 'पितर्युपरते बाला

सहमात्रा सुदु खिता' इत्यारभ्य 'विज्ञाय तद्विधास्यामो यथा श सुहृदा भवे'दित्यतस्य नाम ज्ञेयम् ॥ १२१ ॥

एतद्विचारेण पाडवाना स्थितिर्जातेति तत्सूचक नामाहु ।

**पांडवस्थापकाय नम** इति ॥ १२२ ॥

यथा श सुहृदा भवेदित्येतद्विचारेण पाडवाना स्थापक एव जात इति भाव ॥ १२२ ॥

अत परं भिन्नतया कुतीसात्वन कृतमिति तत्सूचक नामाहु ।

**कुंतीप्रीतिहेतवे नम** इति ॥ १२३ ॥

कुती परमभक्ता। अक्रूरागमने भगवताऽस्मासु स्वीयत्व ज्ञात्वाऽसदवेक्षा कृतेति परमानुग्रह एव कृत इति प्रीत्युद्रेकेण स्तुतिं कृतवती । पश्चाद्दैन्ये जाते भगवत्कृत सान्त्वन कृतमक्रूर विदुराभ्यामिति तथा नामोक्तम्। इदं तु 'पृथा तु भ्रातर'मित्यारभ्य 'सात्वयामासतु'रित्यतस्य नाम ज्ञेयम् ॥ १२३ ॥

एव सात्वनमात्रेण शत्रुकृतदु खनिवृत्तिर्न भवतीति तत्सूचक नामाहु ।

**प्रौढलीलावबोधकाय नम** इति ॥ १२४ ॥

स्वस्य प्रौढलीलाया अवबोधक ज्ञापक । यदि अक्रूरबोधानंतरं धृतराष्ट्र समदृष्टि पाडवेषु भवेत्तदा सम्यगेव, नोचेद्विज्ञाय तद्विधास्यामो यथा शं सुहृदा भवेदिति भगवद्वाक्येन 'सात्वयानासतु कुतीं तत्पुत्रोत्पत्तिहेतुभि'रित्यादिवचनैर्बलेनापि साधयिष्याम इति प्रौढलीलावबोधको जात इति तथा नामोक्तमिति भाव ॥ १२४ ॥

एवं स्तुतौ माहात्म्यज्ञानेन शरण गतं सर्वथा पालयतीति तत्सूचक नामाहु ।

**भक्तपक्षबोधकाय नम** इति ॥ १२५ ॥

भगवान्भक्तस्य पक्षं करोत्येवेति बोधको जात । अत एव भक्तद्वारा सात्वनं कृतं तेषामनुभूतत्वादित्यर्थ ॥ १२५ ॥

एवं भक्ताना सात्वन कृत्वा धृतराष्ट्र बोधितवानिति तत्सूचक नामाहु ।

**धृतराष्ट्रज्ञानबोधकाय नम** इति ॥ १२६ ॥

धृतराष्ट्राय ज्ञानस्य बोधक ।पूर्वं 'भो भो वैचित्र्यवीर्ये'त्यारभ्य 'तस्माल्लोकमिमं तात'त्यन्तमक्रूरकृतं धृतराष्ट्रबोधनम् । पश्चादीश्वराधीनं सर्वं न मम स्वत प्रवृत्तिरिति ज्ञानं धृतराष्ट्रस्येत्युमपबोधक स्वयमेव जात इति तथा नामोक्तम् ॥ १२६ ॥

एवमीश्वरबोधितधर्माधर्मविवेकज्ञानं परित्यज्य तादृशी प्रवृत्ति कथ भवेदिति तत्सूचकं नामाहु ।

**इच्छावादस्थापकाय नम** इति ॥ १२७ ॥

धृतराष्ट्रेणेश्वरेच्छावादमगीकृत्योत्तरितमिति तथैवेश्वरेण स एव स्थापित इति भाव्यर्थसूचकत्वेनोक्तमिति भाव । इदं तु 'यथा वदसि कल्याणी मित्यारभ्ये'श्वरस्य विधिं कोन्वि'त्यंतस्य नाम ज्ञेयम् ॥ १२७ ॥

यद्यपि सर्वेषामीश्वरेच्छा नियामिका तथापि शास्त्रज्ञानेन भगवज्ज्ञानेपि कथ न प्रवृत्तिरि
त्येतत्सूचकं नामाहु ।

**मायाप्रवर्तकाय नम** इति ॥ १२८ ॥

सर्वेषा मायामोहेन भगवन्मार्गेऽप्रवृत्तिरिति भाव । इद तु 'यो दुर्विमर्शपथया निजमा
ययेऽत्यस्य नाम ज्ञेयम् ॥ १२८ ॥

अत एव एवमहं जानामि स एव भगवान्यदुकुलेवतीर्णस्तथापि तन्मार्गे यस्य
मायामोहेन न प्रवृत्तिस्तस्मै नम इति मूले निरूपितमिति तत्सूचक नामाहु ।

**सर्वाभिवन्दितचरणाय नम** इति ॥ १२९ ॥

सर्वैर्ब्रह्मादिभिर्वंदितौ चरणौ यस्येति माहात्म्यज्ञानेन नमस्करणेन स्वप्रवृत्त्यभावात्स्वस्य
मायाधीनत्व ज्ञापितम् ॥ १२९ ॥

अत पर प्रौढलीलामुपसहरति ।

एवं श्रीकृष्णनामानि प्रौढलीलावबोधने । कीर्तितान्यतिपुण्यानि शत विंशतिरष्ट च ॥ १ ॥
अर्थ स्फुट एव । अथ राजलीलोपक्रम कुर्वंति ।

अत पर प्रवक्ष्यामि राजलीलामुपाश्रित । कृतवान्यानि कर्माणि तानि नामानि मुक्तये १
राजलीलामुपाश्रित यानि कर्माणि कृतवान्तानि नामानि तत्कर्मद्योतकानीत्यर्थ ।
प्रवक्ष्यामीति सबध । प्रयोजन मुक्तये । तत्तदधिकारभेदेनानदानुभवायेति भाव ॥ १ ॥

तत्र प्रथमम् । **क्षात्रधर्मप्रवर्तकाय नम** इति ॥ १ ॥ नामोक्त, तस्याय
भाव । एतावत्पर्यंतं भगवान्स्वप्रमेयबलेनैव सर्व कार्यं कृतवान्, न साधनबलेन ।
इदानीं राजलीलाया प्रवृत्त । सा तु प्रमाणरूपेति तत्र साधनमेव मुख्यम्, राजसाना
निरोधेपि भगवत्कृतिरेव साधन नान्यत् । अस्या लीलाया कार्यषट्क कर्तव्यम् । भूभारहर
णम् । साधुरक्षा । दुष्टनिवारणम् । भक्तिप्रवर्तनम् । धर्मरक्षा । अधर्मनिवृत्तिश्चेति । एतदर्थ
मेव अवतार इत्येतत्सर्वं क्षात्रधर्मांगीकारे भवति । स चोपनयनानतरं सकलधनुर्विद्याध्ययनेन
पूर्वं निरूपित । अधुना प्रवर्तको जात इति तथोक्तम् । क्षात्रधर्मपुरस्कारेणैव सर्वं कृतवानि
त्यर्थ । एतत्सर्वं 'चितयामास भगवान् हरि कारणमानुष, तद्देशकालानुगुण स्वावतारप्रयोज
नम् । एतदर्थोवतारोय भूभारहरणाय मे । सरक्षणाय साधूना कृतोऽयेषा वधाय चे'त्यत्र निरू
पितम् च विवरणे । एव सति 'अस्ति प्राप्तिश्च कसस्ये त्यारभ्य 'विरामायाप्यधर्मस्य काले प्रभ
वत क्वचि'दित्यंतस्य नाम ज्ञेयम् । किंच । एतावत्पर्यन्त कंसस्याग्रे सर्वेषा यादवाना क्षात्रधर्म
स्तिरोहित इव स्थित । अत परं सर्वेषु तत्प्रवृत्तिर्भविष्यतीत्यभिप्रायेणापि प्रवर्तकत्वेन नाम
निरूपितम् ॥ १ ॥

अग्रे **दिव्ययुद्धविशारदाय नम** इति ॥ २ ॥ नामोक्तम् ।
तस्यायं भाव । दिव्यं अलौकिकं यद्युद्ध तत्र विशारद प्रवीण । एतच्चातुर्यं 'गृह्णन्ति
षड्गा'दित्यत्र निरूपितं विवरणे । युद्धस्यालौकिकत्वं दिव्यायुधादिना सूचितम् । स्वरूपेणापि ।

यतो युद्ध दिव्य क्रीडारूप तादृशमपि युद्ध क्रीडारूपमेवेत्यलौकिकत्वम्। तदेवोक्तं 'विक्रीडित तज्जगदीशयो'रिति। एतेनाक्लिष्टकर्मत्व च ज्ञापितम्। एव स 'त्येवं ध्यायति गोविंद' इत्यारम्य 'निर्जग्मतु स्वायुधाढ्या'वित्यतस्य नाम ज्ञेयम् ॥ २ ॥

अत परं तत्कार्यरूप नामाहु ।

**जरासंधसमानीतसैन्यघातकाय नम** इति ॥ ३ ॥

इद तु 'ततोमूत्परसैन्याना हृदि वित्रासवेपथु'रित्यारम्य 'अक्षिण्वत्तद्बल सर्वं वृष्णयः कृष्णदेवता ' इत्येतत्पर्यंतस्य नाम ज्ञेयम्। सैन्यघातप्रकारस्तु विवरणे विवृत ॥ ३ ॥

अग्रे। **द्वारकापुरनिर्माणहेतवे नम** इति ॥ ४ ॥ नामोक्तम्। तत्तु 'अष्टादशम-सग्राम' इत्यारम्य 'तं दृष्ट्वाचिंतयत्कृष्ण ' 'तस्मादद्य विधास्यामो दुर्गं द्विपददुर्गमम्।' 'अत-समुद्रे नगरं कृष्णोद्भुतमचीकरत्। दृश्यते यत्र हि त्वाष्टू विज्ञान शिल्पनैपुणम्। यद्यद्भगवता दत्तमाधिपत्यं स्वसिद्धये। सर्वं प्रत्यर्पयामासुर्हरिं भूमिगत नृपे'त्येतत्पर्यंतस्य नाम ज्ञेयम् ॥४॥

तादृशस्थानप्रापणे भक्तानाममूतपूर्वं सुखमभूत्, तज्ज्ञापक नामाहु ।

**भक्ताचिन्त्यसुखदात्रे नम** इति ॥ ५ ॥ भक्ताना तु शत्रुजनितभयेन व्याकुलता जातेति भयमेव निवर्तनीयमपेक्षितम्। भगवास्तु अद्भुतकर्मेत्यचिंत्यम्, मनुष्याणा मनसापि न चिंत्य, तादृश साक्षाद्वैकुंठाविर्भूत सुखं दत्तवानिति तथोक्तम्। इद तु 'तत्र योगप्रभावेण नीत्वा सर्वजनं हरि'रित्येतस्य नाम ज्ञेयम् ॥ ५ ॥

अत परं द्वितीयाध्यायस्य प्रथम नामाहु । **यवनान्तकाय नम** इति ॥ ६ ॥

इद तु 'तं विलोक्य विनि क्रात'मित्यारम्य 'देहजेनाग्निना दग्धो भस्मसादभवत्क्षणा'-दित्यंतस्य नाम ज्ञेयम्। तात्पर्यार्थस्तु विवरणे द्रष्टव्य ॥ ६ ॥

अग्रे। **मुचुकुन्दप्रसादकाय नम** इति ॥ ७ ॥ नामोक्तम्। तत्तु 'को नाम स पुमान् ब्रह्म'न्नित्यारम्य 'जन्मन्यनतरे राजन्सर्वभूतसुहृत्तम । भूत्वा द्विजवरस्त्वं वै मामुपैष्यसि केवल'मित्यन्तस्य नाम ज्ञेयम्। तत 'यवने भस्मसात्कृते भगवान्सात्वतर्षभ । आत्मानं दर्शयामास मुचुकुंदाय धीमते' इत्यारम्य 'प्रेक्षणीयं त्रिलोकस्य सानुरागस्मितेक्षणम्। अपीच्यवयसं मत्तमृगेंद्रोदारविक्रम'मित्यन्त भगवत्प्रसादो निरूपित । ततो भगवता स्वरूपं ज्ञापितम्। तदनंतरं ज्ञात्वा नारायणं देवं गर्गवाक्यमनुस्मर'न्नित्यनेन तस्यापि मन प्रसादो निरूपित । तथाच मुचुकुंदस्य स्वयं प्रसादकर्ता। मुचुकुंदस्य मन प्रसादकर्तेत्यर्थ संपन्न ॥ ७ ॥

अत परं तृतीयाध्यायस्य नामोच्यते। तत्र प्रथमम्।

**सर्वदेवमनोरथपूरकाय नम** इति ॥ ८ ॥

इदं तु 'भगवान्पुनराव्रज्य मथुरां यवनावृताम्। हत्वा म्लेच्छबलं निन्ये तदीयं द्वारिका धन'मित्यस्य नाम ज्ञेयम्। तामसाना वधेन देवताना सात्विकाना मनोरथपूरणं भवत्येवेति तथो-क्तम्। यद्यपि पुस्तकेषु प्रथमं **शिवब्राह्मणवाक्यपरिपालकाय नम** इति नाम पूर्व-

मस्ति पश्चात्सर्वदेवतामनोरथेति नाम, तथापि टीकायामारंभ एव कारिकाभिस्तत्प्रतिलोमक्रमोव गम्यते। तदुक्तं 'त्वीणा मुक्तिर्निरूप्येति मुचुकुंदतप कथा । प्रसंगात्तामसाना हि वधो देवहिताय हि । पलायनं लीलयैव सोप्यनुग्रह ईर्यते' इति। अग्रेप्ययमेव क्रम संगतो भवति। 'नीयमाने धने' 'आजगाम जरासन्ध' इति तथा व्याख्यातम्। तादृशेश्वरस्य पलायनं न सभवतीति तद्धेतुकं नामोक्तम्॥ ८ ॥

**शिवब्राह्मणवाक्यपरिपालकाय नम** इति ॥ ९ ॥

अत्र पुराणांतरकथा प्रसिद्धा। सप्तदशवारं पराजये सति शिवप्रसादार्थं तप कृतवान्तदा शिव प्रसन्नो ब्राह्मणसमाराधनार्थं उपदिष्टवान्ब्राह्मण्य कृष्णस्तद्वाक्यमन्यथा न करिष्यतीति। तदा स गृहमागत्य ब्राह्मणानाहूय स्वसिंहासने उपवेशितवान्। तत संतुष्टास्ते तस्मै तत्सिंहासनमपि दत्वा वरं ददुस्त्वं शत्रुं जेष्यसि त्रैलोक्ये च अजयो भविष्यतीति। तदा पुनरष्टादशे पर्याये संग्रामार्थं तावतीभिरक्षौहिणीभि सहागतवान्, तदा भगवान् ब्रह्मण्यदेव, शिवश्च भक्त इति तद्वाक्यपालनार्थं पलायितवान्, न तु भीत सन्नित्येतावज्ज्ञापकमिदं नाम ज्ञेयम्। ननु तर्हि पुराणांतरीयमेव नामापि भवितुमर्हति, न तु निरोधांतर्गतं, श्रीभागवते अनुक्तत्वात्तत्रोच्यते। अत्र सप्तदशवारं जयकर्तुर्भगवत सर्वसमर्थस्याष्टादशे पर्यायेपि तज्जय किमशक्य। एवं सत्यपि यत्पलायनं तत्तद्वाक्यपालनमेवेति तेन तयोरप्यनुग्रह एव कृत इति निरोधांतर्गतत्वमेव नाम्न इति सर्वमनवद्यम्। एतत्तु 'नीयमाने धने गोभि । आजगाम जरासध' इत्यारभ्य 'मनुष्यचेष्टामापन्नौ राजन् दुद्रुवतुर्द्रुतम्। पद्भ्या पद्मपलाशाभ्या चेरतुर्बहुयोजनम्। पलायमानौ तौ दृष्ट्वा मागध प्रहसन्बली। अन्वधावद्रथानीकैरीशयोरप्रमाणवि'दित्यतस्य ज्ञेयम्॥ ९ ॥

अग्रे॥ **दैत्यमोहनचरित्राय नम** इति ॥१०॥ नामोक्तम्। तत्तु 'प्रद्रुत्य दूरं सश्रान्तौ तुंगमारुहता गिरि'मित्यारभ्य 'सोपि दग्धाविति मृषा मन्वानौ बलकेशवौ। बलमाकृष्य सुमहन्मगधान् मागधो ययां'वित्यंतस्य नाम ज्ञेयम्। पर्वतारोहणप्रयोजन [illegible] विवरणे स्फुटीकृतमिति विस्तरभयान्न लिख्यते॥ १० ॥

अग्रे—**रुक्मिणीमनोरथपूरकाय नम** इति ॥ ११ ॥ नामोक्तम्। तत्तु 'आनर्ताधिपति श्रीमान्रैवतो रेवतीं सुताम्। ब्रह्मणा नोदित प्रादाद्बलायेति पुरोदितम्। भगवानपि गोविंद उपयेमे कुरूद्वह। वैदर्भी भीष्मकसुता'मिति सामान्यत शुकोक्तिकथनानंतरं राज्ञा प्रश्ने कृते पुनस्तदुत्तरे 'राजासीद्भीष्मको नाम' इत्यारभ्याग्रिमाध्याये 'तमागत समाज्ञाय वैदर्भी हृष्टमानसा। न पश्यती ब्राह्मणाय प्रियमन्यन्ननाम सें'त्यतस्य ज्ञेयम्। तत्र 'सोपश्रुत्य मुकुंदस्य रूपवीर्यगुणश्रिय' इत्यनेन स्नेहोत्पत्तिस्वभावादेवासक्तिस्तत्स्वभावादेव मनोरथानामुत्पत्तिस्तत्पूरकस्तु आगमनश्रवणमात्रेण जात इति तथोक्तम्॥ ११ ॥

अग्रे—**रुक्मिणीगांधर्वविवाहाय नम** इति ॥ १२ ॥ नामोक्तम्। तत्तु 'कन्याचात पुरात् प्रागाद्भटैर्गुप्ताम्बिकालयम्। सा चानुध्यायती सम्यङ्मुकुंदचरणांबुजं'मित्यारभ्य

'ता राजकन्या रथमारुरुक्षतीं जहार कृष्ण' इत्यतस्य ज्ञेयम् । तत्र तन्मे भवान् खलु वृत इत्यनेन प्रियया गाधर्वविवाह कृत एव । इदानीं पाणिग्रहणेन स्वयमपि कृतवानिति तथोक्तम् । तथा चार्थ रुक्मिण्या सह गाधर्वविवाहो यस्येति ॥ १२ ॥

अत एवाग्रे । **रुक्मिणीप्राणपतये नम** इति ॥ १३ ॥ नामोक्तम् । रुक्मिणी प्राणाना पतिर्जात । पूर्वं तु यह्यंबुजाक्ष न लभेय भवत्प्रसाद जह्यामसूनित्युक्तत्वादधुना पाणिग्रहणेन तद्रक्षको जात इति तथा नामोक्तम् । अथवा । हरणानतरं शिशुपालपक्षीयजरासंधादीना बलमागतमवलोक्य युद्धावलोकने प्राणस्थितिरेव न भवेद्यदि भगवान्वचनै प्राणाना रक्षा न कुर्यात्पतिर्भूत्वा तद्धर्ममपि प्रकटीकृतवान् । एव सति 'पत्युर्बलं शरासारैश्छन्नं वीक्ष्य सुमध्यमा । सव्रीडमैक्षत्तद्वक्त्र भयविह्वललोचना । प्रहस्य भगवानाह मा स्म भैर्वामलोचने । विनक्ष्यत्यधुनैवैतत्तावकै शात्रव बल'मित्यतस्य नाम ज्ञेयम् । एतदर्थस्तु विवरणे स्फुटीकृत । तत्र सुमध्यमेत्यस्य विचारे विनियोगोन्यथा भविष्यतीति शङ्कया तद्वक्त्रं सव्रीडमैक्षतेत्यग्रे भयविह्वललोचने इत्यनेनापि तद्व्यञ्जितं भवतीति तथोक्तम् ॥ १३ ॥

एतदग्रे । **रुक्मिप्रभृतिदुष्टमानसदुःखदाय नम** इति ॥ १४ ॥

नामोक्तम् । अस्मिन्प्रकरणे रुक्मी मुख्य इति तस्यैवादौ निरूपणम् । तदादयो ये दुष्टा शिशुपालजरासंधादय । तेषा मानसे दु खद । सर्वेषा पराजयेन मानहानिजनितमानसदु खमेव जातमिति तथोक्तम् । इद तु 'भो भो पुरुषशार्दूल दौर्मनस्यमिद त्यजे'त्यारभ्य 'रुक्मी तु राक्षसोद्वाहं कृष्णद्विड् असहन्स्वसु । पृष्ठतोन्वगम'दित्यनंतरं 'प्राणावशेष उत्सृष्टो द्विड्भिर्हतबलप्रभ स्मरन्विरूपकरण वितथात्ममनोरथ । चक्रे भोजकटं नाम' इत्यतस्य नाम ज्ञेयम् ॥ १४ ॥

अत परं भगवान्रुक्मिणी पुरं द्वारिकामानीय विधिवद्विवाह कृतवानिति तद्द्योतकं नामाहु ।

**रुक्मिणीविवाहप्रदर्शितगृहस्थधर्माय नम** इति ॥ १५ ॥

रुक्मिण्या विधिवत् यो विवाहस्तेन प्रदर्शित गृहस्थधर्मो येन । यद्यदाचरति श्रेष्ठ इति न्यायेन स्वय प्रदर्शनेनाग्रेपि सर्वेषु गृहस्थेषु सदाचार प्रवर्तेतेति तथा कृत इति भाव । पूर्वं हरणेन राक्षसो विवाह कृत , पश्चाद्रथारोपणे पाणिग्रहणेन गाधर्व कृत ॥ १५ ॥

एवं सति गृहाश्रमस्थस्य यो वेदोक्तविधिवद्विवाह स तु न जात , तदकरणे स्ववंशे सर्वत्र च तद्धर्मोच्छेदो भविष्यतीति स्वयं वेदोक्तधर्मस्थापक इति तृतीयं वेदोक्तविधिवद्विवाहं कृतवान् । एतज्ज्ञापकं नामाहु ।

**त्रिविधविवाहकर्त्रे नम** इति ॥ १६ ॥

एतन्नामद्वयं तु 'भगवान्भीष्मकसुतामेवं निर्जित्य भूमिपान् । पुरमानीय विधिवदुपयेमे कुरूद्वहे'त्यारभ्य 'द्वारिकायामभूद्राजन्महामोद पुरौकसा, रुक्मिण्या रमयोपेत दृष्ट्वा कृष्ण श्रिय पति'मित्यतस्य नाम ज्ञेयम् । अत्राध्यायसमाप्ति ॥ १६ ॥

अत परं पञ्चाध्यायनामानि निरूप्यन्ते ॥

**कामजनकाय नम** इति ॥ १७ ॥

अयं भाव । भगवान्यदा भार्यास्वीकार कृतस्तदा पुत्रस्वीकारो कर्तव्य इति स पुत्र
प्राकृतो भविष्यतीति संदेहाभावाय पूर्वं हरेण दग्धस्य वासुदेवांशस्य कामस्य जनको जात ।
आत्मा वै जायते पुत्र इति स्वांशमेव स्ववीर्येण प्रकटीकृतवानित्यर्थ । तेनायं पुत्रो न जीव
किंतु स्वांशभूत एवेति । अग्रे न संग्रति । एतत्सर्वं विवरणे द्रष्टव्यम् । इद तु कामस्तु वासु
देवांश इत्यारभ्य प्रद्युम्न इति विख्यात इत्यंतस्य नाम ज्ञेयम् ॥ १७ ॥

अग्रे—**शंबरघातकप्रद्युम्नाय नम** इति ॥ १८ ॥ नामोच्यते । तस्यायं भाव ।
शंबर पूर्ववैरी नारदेन ज्ञापितत्वाद्दशदिनमध्य एव हृत्वा समुद्रे क्षिप्तवान् । तत्र त बालकं
मत्स्योऽगिलत्तं मत्स्यं धीवरो जालेन निगृह्य शंबरायैव न्यवेदयत्तदा स शंबर सूदकार्येऽधिकृता
मायावती प्रति प्राहिणोत् । तदा व्यजनार्थं विदीर्णे तस्मिन्परमसुंदरं बालक दृष्ट्वा विस्मितासी
त्पश्चान्नारदद्वारा ज्ञाततत्त्वा त पालितवती । तत परममनोहर प्राप्तयौवन दृष्ट्वा तस्मै सर्वं तत्त्व
विज्ञाप्य सर्वां विद्या मायारूपा दत्वा शंबरं घातयित्वा उभावपि कामो रतिश्च दंपती द्वारि-
कामागत्य सर्वेषामानंदं कृतवंतावित्येतावदर्थसूचकमिदं नाम ज्ञेयम् । अत एव शंबरघातकश्च प्र
कृष्टद्युम्न आनंदो यस्मात्, पूर्वं तथात्वाभावादिति भाव । इद तु 'त शंबर कामरूपी' त्यारभ्य
'यं वै मुहु पितृसरूपनिजेशभावा' इत्यंतस्य नाम ज्ञेयम् । अत्राध्यायसमाप्ति ॥ १८ ॥

अथ सप्तमाध्यायस्य नामानि उच्यंते ।

**जांबवतीप्राणपतये नम** इति ॥ १९ ॥

इद तु 'इत्युक्त्वा स्वां दुहितरं कन्या जांबवतीं मुदा । अर्हणार्थं स मणिना कृष्णायोपज
हार ह' इत्यंतस्य नाम ज्ञेयम् । कृष्णायोपजहारेति कथनेन सा तदधीनीकृता, तया तु तत्स्वरूपं
दृष्ट्वा सर्वं समर्पितमिति तस्या प्राणाना पतिर्जात इति तथोक्तम् ॥ १९ ॥

अत परं मण्यानयनप्रयोजनज्ञापक नामाह ।

**लोकनिर्मितसर्वार्थज्ञापकाय नम** इति ॥ २० ॥

लोकैर्निर्मिता अनुमानेन कल्पयित्वा स्थापिता वस्तुतो मिथ्याभूता ये सर्वार्था 'दिने
दिने स्वर्णभारानष्टौ स सृजति प्रभो इत्यारभ्य 'स याचितो मणिं क्वापि यदुराजाय शौरिणा ।
नैवार्थकामुक प्रादाद्याच्ञाभंगमतर्कयन्नि'त्यारभ्य 'प्राय कृष्णेन निहतो मणिग्रीवो वन गत,
भ्राता ममे'त्यंताभिशापरूपा तेषा ज्ञापक प्रकाशक । तथा च 'सत्राजितं समाहूय सभाया
राजसंनिधौ । प्राप्तिं चाख्याय भगवान्मणिं तस्मै न्यवेदय'दित्यंतस्य नाम ज्ञेयम् ॥ २० ॥

अत एवाग्रे ॥ **सत्यभामावल्लभाय नम** इति ॥ २१ ॥ तत्तु स चाति
व्रीडितो रत्नं गृहीत्वेत्यारभ्य ता सत्यभामा भगवानुपयेम इत्यंतस्य नाम ज्ञेयम् । वल्लभत्वे
हेतु । सत्येनैव भासते शीलौदार्यगुणान्वितत्वं चेति विवरणे स्फुटीकृतम् ॥ २१ ॥

अत परमष्टमाध्याये प्रथमम् । **सत्राजित्स्वर्गहेतवे नम** इति ॥ २२ ॥
नामोक्तम् । अत्रायं भाव । यद्यपि सत्राजिन्निरोधाधिकारी, तथापि देवांतरे कृतबुद्धि

रिति न निरोधसिद्धिरिति तं देहं परित्यज्य मणिद्वारा भक्ते अक्रूरे स्थित भगवच्चरणरूपेषु वाराणस्यादितीर्थेषु निरुद्धो भविष्यतीति भगवान् तथा कृतवानिति भगवतो हेतुत्वमुक्तम्। एव भिन्नमति शयानमवधीदित्यस्य नाम ज्ञेयम् ॥ २२ ॥

अत एवाग्रिमं नामाहु । **स्यमंतकमणिहर्त्रे नम** इति ॥ २३ ॥

यदि तन्निकटे मणिस्तिष्ठेत्तदाप्यन्यसंबंधस्तिष्ठेदिति निरोधासिद्धिरिति तद्द्वारा तस्य हरण स्वयमेव कृतमिति तथा नामोक्तम्। इदं तु 'स्त्रीणा विक्रोशमानाना क्रंदतीनामनाथवत्, हत्वा पशून् सौनिकवन्मणिमादाय जग्मिवान्' । इत्यतस्य नाम ज्ञेयम् ॥ २३ ॥—अग्रे—

**शुद्धकीर्तिस्थापकाय नम** इति ॥ २४ ॥ नामोक्तम्। तत्तु 'इत्यगोपदिशत्येके' इत्यारभ्य, 'तत्सुतस्तत्प्रभावोसावक्रूरो यत्र यत्र हि। देवोभिवर्षते तत्र नोत्पातो नैव मारिके'-त्यंतस्य नाम ज्ञेयम्। मणिस्थापनेन भक्तेषु शुद्धा कीर्तिरेव स्थापितेति तथोक्तम् ॥ २४ ॥

अतएवाग्रिम नामाहु । **अक्रूरादिभक्तदोषनिवारकाय नम** इति ॥ २५ ॥

इद 'त्विति दूतैः समानीय प्राहाक्रूर'मित्यारभ्य 'स्यमतकं दर्शयित्वा ज्ञातिभ्यो रज आत्मन । विमृज्य पाणिना भूयस्तस्मै प्रत्यर्पयत्प्रभु रित्यतस्य नाम ज्ञेयम्। ग्यक्रूर आह्वानानंतरमागत्य न प्रदर्शयेत्तदाक्रूरस्य महानेव दोष स्यात्, आदिपदेन कृतवर्मादयोपि ज्ञेया । अथवा लोके भगवति मणिविषयिका प्रतीति सर्वस्यापि संदिग्धा तिष्ठतीति तज्ज्ञानतोप्यक्रूरस्य मणिप्रदर्श नाभावादनिष्टमेव भवेदिति भगवान् भक्तदु खासहिष्णुरिति स्वयमाहूय तद्दोष दूरीकृतवानिति तथा नामोक्तम्। फलकथनेनाधिकमाहात्म्यमपि प्रकटीकृतवानित्यपि ज्ञेयम् ॥ २५ ॥

अत परं नवमाध्यायस्य नामोच्यते। एतावत्पर्यंतं गुणत्रयरूपाणां तिसृणा विवाहो निरूपित । रुक्मिणी राजसी, तामसी सत्यभामा तत्प्रसगादेव प्रथमं सात्त्विकी जाम्बुवती । अत परं वियारूपा पंच निरूप्यंते।

तत्र प्रथमं **कालिंदीपतये नम** इति ॥ २६ ॥

इदं त्वध्यायादारभ्य 'रथमारोप्य तद्विद्वा धर्मराजमुपागमत्' इत्यतस्य नामज्ञेयम् ॥ २६ ॥

अग्रे—**पांडवराज्यस्थापकाय नम** इति ॥ २७ ॥ नामोक्तम्। तत्तु 'यदैव कृष्णसंदिष्ट पार्थाना परमाद्भुतम्। कारयामास नगर'मित्यारभ्य 'स तेन समनुज्ञात आययौ द्वारिका नृप' इत्यंतस्य नाम ज्ञेयम् ॥ २७ ॥

अग्रे—**मित्रविंदापतये नम** इति ॥ २८ ॥

तत्तु 'विंदानुविंदावावंत्या'वित्यारभ्य 'प्रसह्य हृतवान् कृष्णो राज्ञा राज प्रपश्यता'मित्यं तस्य नाम ज्ञेयम् ॥ २८ ॥

अग्रे—**सत्यापतये नम** इति ॥ २९ ॥

नामोक्तम्। तत्तु 'नग्नजिन्नाम कौशल्य आसी'दित्यारभ्य 'ता सत्यगृहाद्गवान्निधि सत्यदृशी प्रभु'रित्यंतस्य ज्ञेयम् ॥ २९ ॥

अग्रे—**भद्रापतये नम** इति ॥ ३० ॥ नामोक्तम् ॥
तत्तु 'श्रुतकीर्तेः सुता भद्रामुपयेमे पितृष्वसुः । कैकेयीं भ्रातृभिर्दत्तां कृष्णः सन्तर्दनादि
भि'रित्यतस्य नाम ज्ञेयम् ॥ ३० ॥
अग्रे । **लक्ष्मणापतये नम** इति ॥ ३१ ॥ नामोक्तम् । तत्तु 'सुता च मद्राधिपते
र्लक्ष्मणा लक्षणैर्युताम्' । इत्यस्य ज्ञेयम् ॥ ३१ ॥
एतदग्रे । **रोहिणीपतये नम** इति ॥ ३२ ॥ नामोक्तम् ॥
एषा षोडशसहस्राणां शताधिकानां मध्ये मुख्या । क्वचिदष्टमहिषीमध्ये भद्रास्थाने
मन्त्रशास्त्रे प्रसिद्धेति मुख्यत्वेन पूर्वमुक्ता ॥ ३२ ॥
अत एव तदुक्त्वाग्रे ॥ **षोडशसहस्रनायिकापतये नम** इति ॥ ३३ ॥ नामो
क्तम् । तत्तु भौमं हत्वा तन्निरोधादाहृताश्चारुदर्शना इत्यस्य नाम । अत्र भौममारणानंतर
राजकन्यानामानयनं तदनन्तरं विवाह इति नामापि तन्मारणानंतरमेवापेक्षितम् । अत्र तु
मारणात्प्रागेवैतन्नामोक्तमिति तत्समाधानमुच्यते । भगवतो मुख्यं कार्यं तदेव स्वसिन्निरोधेन
स्त्रिय उद्धर्तव्याः, तास्तु तन्निरुद्धा इति तदुद्धारो मुख्यः, तन्मारणं गौणम् । अत एव मूले
तास्तु चारुदर्शना इति, तस्यार्थस्तु विवरणे भगवता आहृता इति दर्शनमात्रं तासामानयने
चारु दर्शनम् ज्ञानम् सौंदर्यं च यासामिति हेतुरुक्त इति भगवता तासां स्वरूपं ज्ञात्वा स्वसि
न्पतित्वमगीकृत्यैव ता आनीताः, न तु भौममारणानंतरं तज्ज्ञानं जातमिति पूर्वमेव तद्द्योतक
नामोक्तमिति भावः, अत एव नायिकापदमुक्तम् । तेन रसात्मकसकलगुणलक्षणपूर्णा अप्सरो-
रूपा स्वार्थमेवोत्पादिता इति पतिरपि स्वयमेवेति ॥ ३३ ॥
तत्प्रतिबंधमात्रं दूरीकर्तव्यं, तदग्रे कृतमिति तत्सूचकं नामद्वयमाहुः ।
**मुरारये नम** इति ॥ ३४ ॥
**नरकांतकाय नम** इति च ॥ ३५ ॥
इदं तु दशमाध्यायस्य नाम । तत्राद्य तु अध्यायादारभ्य 'शिरांसि चक्रेण जहार लीं
लये'त्यतस्य ज्ञेयम् ॥ ३४ ॥ अपरं 'तद्विसर्गात्पूर्वमेव नरकस्य शिरो हरिः । अपाहरद्गजस्थ
स्य चक्रेण क्षुरनेमिने'त्यतस्य ज्ञेयम् ॥ ३५ ॥
अग्रे **वसुधापूजितचरणाय नमः** ॥३६॥ इति नामोक्तम् ॥ तत्तु ततश्च भूः कृष्ण
मुपेत्य कुण्डले' इत्यारभ्य, 'इति भूम्यार्चितो वाग्भि' रित्यतस्य ज्ञेयम् ॥ इत्यधिकमेकस्मिन्नादर्शे ॥
अग्रे तत्पुत्रायाभयं दत्त्वा राज्यं दत्तवानिति तत्रत्यानां सर्वजनानां सुखं कृतवानिति
तद्द्योतकं नामाहुः । **सर्वजनीनसुखहेतवे नम** इति ॥ ३७ ॥
अथवा । तत्रत्यसर्वसामग्रीप्रेषणेन द्वारकास्थसर्वजनानां सुखोत्पादक इति तथोक्तम् ।
इदं तु 'दत्त्वाभयं भौमगृहं प्राविशत्सकलर्द्धिमत्' इत्यारभ्य 'प्रेषयामास केशव' इत्यतस्य नाम
ज्ञेयम् ॥ ३६ ॥

द्वारिकाया दिव्यमपि सुखं कृतवानिति तत्सूचकं नामाहु ।

**पारिजातापहरणाय नम** इति॥ ३८ ॥

तत्प्रयोजकं नामाहु । **महेंद्रादिदुष्टबुद्धिनिवारकाय नम** इति ॥ ३९ ॥

महेंद्रादयस्त्वधिकारिणो न तु स्वामिन इति भगवता सर्वं वस्तु स्वार्थं तत्र तत्र स्थापितम्। ते तु स्वार्थमेवेति मन्यते। अत एवैकवारयाचित इन्द्रो न दत्तवान्तदा सर्वमेवोत्पाट्यानीतवान्। तेन तन्मदोऽप्यपहृत इति तदर्थमेव तद्धरणमिति तथोक्तम्। इदं तु गत्वा सुरेंद्रभवनमित्यारम्य विबुधान्निर्जित्योपानयत्प्रभुरित्यंतस्य नाम ज्ञेयम्॥ ३९ ॥

पारिजातेत्युपलक्षणम्। त्रैलोक्ये यावतो लक्ष्मीविलासपदार्थास्ते सर्वे प्रतिगृहं स्थापिता इति तत्सूचकं नामाहु । **सर्वरत्नकोशादिपूरितगृहाय नम** इति ॥ ४० ॥

षोडशसहस्राणां महिष्यादीनां च गृहाः सर्वरत्नादिभिः पूरितकोषाः कृता इति भावः। इदं तु स्थापितं सत्यभामाया गृहोद्यानोपशोभिनि' इत्यारभ्याध्यायसमाप्तिपर्यंतस्य नाम ज्ञेयम्॥ ३९ ॥

अग्रे एकादशाध्यायस्य नामद्वयमुच्यते ॥ प्रथमम् **रुक्मिण्यादिस्त्रीमनःपरीक्षकाय नम** इति ॥ ४१ ॥

आदिपदेन सर्वासामेव प्रकारभेदेन परीक्षा कृतेति ज्ञाप्यते।

येन प्रकारेण कृतेत्याकाङ्क्षायामाहु । **लौकिकलीलावाक्यविशारदाय नम** इति ॥ ४२ ॥

इदं तु 'राजपुत्रीप्सिता भूपै'रित्यारम्य'एतावदुक्त्वा भगवा'नित्यंतस्य नाम ज्ञेयम्।अथवा लौकिकानि लीलासंबंधीनि वाक्यानि यस्य। विशिष्टा भक्तिमार्गीया अलौकिकी शारदा यस्येति भिन्नं वाक्यम्। अयं भावः। पूर्ववचनेन तादृग्दशाया दशम्येवावस्था तस्या संजातेति तादृशीं दृष्ट्वा सान्त्वनं कृतम्। 'त्वद्वचः श्रोतुकामेन क्ष्वेल्याचरितमंगन' इत्यनेनेति भगवतैव सान्त्वनद्वारा हृदि प्रविश्य तानि वाक्यान्युत्पादितानीति तथोक्तम्।

अतः परं द्वादशाध्यायनाम। अस्मिन्नध्याये वैदिकं रमणमुच्यते। लौकिकं तु पूर्वमुक्तम्। वैदिके तु 'दशास्या पुत्रानाधेही'ति श्रुतिवाक्यं सत्यं कर्तुं तथाकरोदितितत्सूचकं नामाहु । **श्रुत्यर्थप्रतिपादकदशदशपुत्राय नम** इति ॥ ४३ ॥

इदं तु 'एकैकशस्ताः कृष्णस्य पुत्रान्दशदशाबलाः' इत्यारभ्य 'रोहिण्यास्तनया हरे'रित्यंतस्य नाम ज्ञेयम्॥ ४३ ॥

अग्रे—**क्षत्रियधर्मप्रतिपादकवंशादिककर्त्रे नम** इति ॥ ४४ ॥

अयं भावः। कलौ शुद्धः क्षत्रियो हि न स्थाप्य इति निश्चयात्'स्वार्थं विवाहमकरोत्फलं तस्याप्यसूत्रय'दिति भागिनेयाय रुक्मी स्वकन्यां दत्तवान्, अग्रेपि तथैव जात इति तद्द्योतकं नामेदं ज्ञेयम्। इदं तु 'प्रद्युम्नाच्चानिरुद्धो'भूदित्यारभ्य 'ततोऽनिरुद्धो सहभार्यया वरं रथं समारोप्ये'त्यंतस्य ज्ञेयम्॥ ४४ ॥

अत पर त्रयोदशाध्याय हित्वा चतुर्दशाध्यायस्य नामानि निरूपयन्ति । अत्र राजसाना निरोधार्थं भगवल्लीलोच्यते । सा च चतुर्दशाध्यायपर्यंतमेव । तत्र प्रथमम् ।

**बाणासुरबलांतकर्त्रे नम** इति ॥ ४५ ॥

अनेन पूर्वाध्यायकथापि प्रयोजनत्वेन सूचिता । इदं तु 'बाणार्थे भगवान् रुद्र समुतै प्रमथैर्वृत । आरुह्य नंदिवृषभं युयुधे रामकृष्णयो'रित्यारभ्य 'बाणश्च तावद्विरथश्छिन्नधन्वाविशत्पुर'मित्यंतस्य नाम ज्ञेयम् ॥ ४५ ॥

महादेवस्तु भक्त , रामकृष्णसंबन्धी, तस्य स्वामिना सह युद्धमनुचितमपि भक्तार्थं कृतवानिति यथाग्रे तस्य सम्मानने भवेत्तत्कृतस्वसम्माननं च तद्धेतु स्वयमेव जात इति तत्सूचकं नामाहु ।

**महादेवादिसम्मानहेतवे नम** इति ॥ ४६ ॥

महादेवादिपदेन ज्वरादयस्तत्कृतस्तोत्ररूपं स्वसम्माननं तस्य हेतुरूप । अयं भाव । महादेवो यावच्छक्यं युद्ध करोति । भगवता जृम्भणास्त्रेण मोहमुत्पाद्य बाणबलं सर्वं नाशितम् । तदा ज्वर उत्पादित , सोपि नारायणज्वरेण नाशित ॥ ४६ ॥

तत स कुत्राप्यभयमपश्यन्भगवच्छरणमेव गतवान्स्तोत्रं च कृतवानिति भगवत्सम्मानन च कृतम् । ज्वरस्तु न नाशित इति तत्सम्माननमपि जातं, तत्सूचकं नामाहु ।

**ज्वरादिदोषनाशकाय नम** इति ॥ ४७ ॥

तस्य दोष एव नाशित , न स्वरूपम् । इदं तु 'अलब्ध्वाऽभयमन्यत्र भीतो माहेश्वरो ज्वर' इत्यारभ्य 'इत्युक्त्वोच्युतमानम्य गतो माहेश्वरो ज्वर' इत्यंतस्य नाम ज्ञेयम् ॥ ४७ ॥

अग्रे तु तस्य सर्वथाऽशक्यं मत्वा भक्तस्यानिष्टं भवतीति शंकरोपि स्तोत्रं चक्रे । तदा भगवता प्रसन्नेन तद्वाक्यसम्माननेन तद्रक्षैव कृतेति तत्सूचक नामाहु ।

**प्रल्हादादिभक्तवंशरक्षकाय नम** इति ॥ ४८ ॥

आदिपदेन बलिरपि गृहीत । इदं तु 'यदात्थ भगवंस्त्वन्न करवाम तव प्रिय'मित्यारभ्य 'प्राद्युम्निं रथमारोप्य सवध्वा समुपानयदि'त्यंतस्य ज्ञेयम् ॥ ४८ ॥

अत परं सात्त्विकप्रकरणारंभे पंचदशाध्यायस्य नाम निरूप्यते ॥

**दानादिधर्मबोधकाय नम** इति ॥ ४९ ॥

यद्यपि नृगमोक्षानंतरं दानादिधर्मबोधनं कृत तथापि इदं सात्त्विकप्रकरणम् । राजसाना यथा सात्त्विकधर्मप्रवृत्तिर्भवेत्तथा दानादिधर्मोपदेशार्थमेव नृगमोक्षोपक्रम इति प्रथमं तादृशमेव नामोक्तम् ॥ ४९ ॥

तद्धेतुकमग्रे—**नृगमोक्षहेतवे नम** इत्युक्तम् ॥ ५० ॥

इदं तु 'एकदोपवनं राजन्यदुयदुकुमारका' इत्यारभ्य 'तावदद्राक्षमात्मानं कृकलासं पतन्प्रभो' 'इत्युक्त्वा तं परिक्रम्य पादौ स्पृष्ट्वा स्वमौलिना । अनुज्ञातो विमानाग्र्यमारुहत्पश्यतां नृणा'मित्यंतस्य नामद्वयमुक्तम् ॥ ५० ॥

अत परं स्वकीयाना शिक्षा कृतेति तद्द्योतक नामाहु ।

**ब्रह्मण्याय नम** इति ॥ ९१ ॥

इद तु 'कृष्ण परिजन प्राह भगवान्देवकीसुत । ब्रह्मण्यदेवो धर्मात्मा राजन्यानतु शिक्षयन्'इत्यारभ्य 'नृग ब्राह्मणगौरिवे'त्यंतस्य ज्ञेयम् ॥ ९१ ॥

अत पर षोडशाध्यायस्य नाम निरूप्यते ।

**पुष्टिमार्गप्रवर्तकाय नम** इति ॥ ९२ ॥

तस्याय भाव । अत्र गोपिकास्त्वन्यपूर्वा ज्ञेया । कुमारिकास्तु सग एवानीता । तत्रापि पक्षद्वयम् । ता एव भिन्ना वा । उभयथापि निरोद्धव्या । यद्यपि तास्तु निरुद्धा एव तथापि पुराणांतरकथामाश्रित्योच्यते । भगवता पूर्वमुक्त 'आयास्य इहे'ति तद्वाक्यपूरणार्थं बलभद्ररूपेण स्वयमेव गत इति तासा कामपूर्ति कृतवानिति तथोक्तम् । विशेषस्तु विवरणे द्रष्टव्य । पूर्वं प्रमेयबलेन सर्वं कृतम् । इदानीं प्रमाणबलमाश्रित्य साधनद्वारापि तत्पूर्तिं कृतवानिति बलभद्ररूपेण स्वरूपानदपोषण कृतमिति पुन पुष्टिमार्गप्रवर्तको जात इति तथोक्तम् ॥ ९२ ॥

अग्रे पुन पुष्टिसूचकं नामाहु ।

**यमुनाकर्षणहेतवे नम** इति ॥ ९३ ॥

द्वयमपि षोडशाध्यायस्य नाम ज्ञेयम् ॥ ९३ ॥

अग्रे सप्तदशाध्यायस्योच्यते—**स्पर्धादिदुष्टविमोचकाय नम** इति ॥ ९४ ॥

स्पर्धादिना ये दुष्टा पौंड्रकवासुदेवादय तेषा विमोचक । यथा कंसादयो विमोचितास्तथैतेपीति भाव ॥ ९४ ॥

अत एवाग्रे तत्प्रकारसूचकं नामाहु ।

**पौंड्रककाशीराजहंत्रे नम** इति ॥ ९५ ॥

तन्मित्रं काशीराजस्तत्सहायार्थमागतस्तदा तेन सहितमपि मारितवानिति निरूपणम् । इदं तु 'नंदव्रज गते रामे करूषाधिपतिर्नृपे'त्यारभ्य 'एव मत्सरिण हत्वा पौण्ड्रक ससखं हरिरि'त्यंतस्य नामद्वयं ज्ञेयम् ॥ ९५ ॥ अग्रे—

**देवतांतरवरदसगर्वनाशकाय नम** इति ॥ ९६ ॥

तत्तु 'सुदक्षिणस्तस्य' सुत इत्यारभ्य 'तत्सूर्यकोटिप्रतिभ'मित्यंतस्य नाम ज्ञेयम् ॥९६॥

अग्रे पुन —**काशीदाहकाय नम** इति ॥ ९७ ॥

स्पष्टमेव । तत्तु 'कृत्यानल प्रतिहत' इत्यंतस्य ज्ञेयम् ॥ ९७ ॥

अग्रे—**दुष्टनिवासदोषनाशकाय नम** इति ॥ ९८ ॥

तत्तु 'चक्रं च विष्णोस्तदनुप्रविष्टमित्यं'तस्य नाम ज्ञेयम् । एतेन दुष्टसंबन्धि सर्वं नाशितम् ॥ ९८ ॥

अत परं मुक्तिर्भविष्यतीति तद्धेतुकं नामाहु ।

**मुक्तिहेतवे नम** इति ॥ ५९ ॥

अन्यथा कदया मुक्तिरेव न भवेदासुरसंबन्धात् । किंच । एतत्कथाश्रवणेन मुक्तिर्भवि-
ष्यतीति पाठफलमुक्तम् । 'य एतच्छ्रावयेन्मर्त्य' इत्यनेन तत्सूचकमेवेदं नाम ज्ञेयम् ॥ ५९ ॥

अत परं अष्टादशाध्यायस्य नामानि निरूपयन्ति ।

**दुःसंगदसाविविदाहिवधहेतवे नम** इति ॥ ६० ॥

सपूर्णाध्यायस्यैवैतन्नाम ज्ञेयम् ॥ ६० ॥

अत परं एकोनविंशाध्यायस्य नामानि निरूपयंति । पूर्वाध्याये दुष्टनिवारणलक्षणं
चरित्रमुक्तम् । अस्मिन्नध्याये शिष्टशिक्षणरूपं चरित्रमुच्यते । यद्यपि बलभद्रकृतमिदं चरित्रं
तथापि आवेशरूपेण स्वयमेव करोतीति भगवच्चरित्रमेवेति तत्सूचकं नामाहु ।

**राज्यादिदसकौरवगर्वनाशकाय नम** इति ॥ ६१ ॥

इद तु 'दुर्योधनसुता राज लक्ष्मणा समितिंजय'इत्यारभ्य 'तमेव शरणं जग्मु सकुटुंबा
जिजीषव । सलक्ष्मणं पुरस्कृत्य साबं प्राञ्जलय प्रभु'मिति स्तोत्रपूर्वकं 'त्वा वयं शरणं गता'
इत्यंतस्य ज्ञेयम् ॥ ६१ ॥

अत परं विंशाध्यायस्य नाम निरूप्यते । तत्र सात्त्विकेषु मुख्यस्य नारदस्य निरोधो
वक्तव्य । स च मर्यादाभक्तिमार्गीय । निरोधस्तु ततो भिन्न , अत एव तन्मार्गमोहेन भग
वत्परीक्षार्थं प्रवृत्त इति भगवांस्तस्य मोहं दूरीकृतवान्, तज्ज्ञापकं नामाहु ।

**मर्यादाभक्तिदसभक्तमोहनाशकाय नम** इति ॥ ६२ ॥

मर्यादाभक्त्या दत्तो यो भक्त , दत्तपदेन तदेव परमकाष्ठापन्नं वस्तु ज्ञातवान्न तु तद-
ग्रिममपि, तादृशस्य यो मोह तस्य नाशकाय, इदं तु 'नरकं निहतं श्रुत्वे'त्यारभ्य 'विदाम
योगमाया ते दुर्दर्शामि'त्यंतस्य नाम ज्ञेयम् ॥ ६२ ॥

**अग्रे—जीवाधिकारशास्त्रगर्वनाशकाय नम** इति ॥ ६३ ॥

तस्याय भाव नारदस्तु जीव एव । तदधिकारशास्त्रे तु मर्यादाविरुद्धं न कर्तव्यमिति
तादृशं भगवान्न करोतीति गर्व । मर्यादामार्गीयत्वात् । कथं कृतवान् । पुत्रं मारयित्वा
तत्रत्या स्त्रियो विवाहिता इति संदेह , स्वरूपाज्ञानादि'ति तत्प्रदर्श्य तं गर्वं दूरीकृतवानिति
तथोक्तम् । इदं तु 'ब्रह्मन्धर्मस्य वक्ताह मित्यारभ्य 'कृष्णस्यानन्तवीर्यस्य योगमायामहोदयम् ।
मुहुर्दृष्ट्वा ऋषिरभूद्विस्मित' इत्यंतस्य नाम ज्ञेयम् ॥ ६३ ॥

अथ चैकविंशाध्यायनामनिरूपणम् । तत्र प्रथमम् ॥

**सुधर्मालंकृतचरणाय नम** इति ॥ ६४ ॥

अत्र भगवत आह्निकमुच्यते । भगवता चेत्सर्वेपि धर्मा कृता भवंति तदा निखिल-
लोका अपि धर्मपरा स्युरिति तत्सर्वमाह्निकं कृत्वा समामलंकृतवानिति । 'ब्राह्मे मुहूर्ते उत्पाय

वायुं परमृदय माधव' इत्यारभ्य 'सुधर्माख्या सभा सर्वैर्वृष्णिभि परिवारित । प्रविश्यान्निविष्टाना न संत्यग पड्रूर्मय' इत्यतस्य नाम ज्ञेयम् । चरणाल्कारकथनेन सर्वेषा भक्तिभावभूषणभूषितत्वमुक्तम् । तेन सर्वे भगवत्प्रवणा जाता इति सूचितम् । एवं सर्वेषा निरोध उक्त ॥६४॥

अत पर पूर्वे ये भक्ता अलौकिकप्रकारेण निरोधयुक्ता एव बहिर्जरासधेन निरुद्धास्तेषा त निरोध दूरीकृत्य स्वय निरोध कर्तव्य । स च तदपेक्षाभावेन भवतीति तत्सूचक नाम निरूपयंति ।

**भक्तापेक्षावभासहेतवे नम** इति ॥ ६५ ॥

भक्ताना जरासंधनिरुद्धाना या अपेक्षा, एते मोचनीया इति तस्यावभास अंतस्थाया बहि प्रकाश तस्य हेतुरूप , यदैव मनसि अपेक्षा जाता तदैव तत्प्रेषितो दूत समागत इति अपेक्षा प्रकटासीदिति भाव । अन्यच्च । भक्तो युधिष्ठिरस्तस्यापेक्षा राजसूयकरणेच्छा तस्याव भास प्रकाशस्तस्य हेतु । एतत्तु 'राजदूते ब्रुवत्येवं देवर्षि'रित्यारभ्य 'यक्ष्यति त्वा मखेंद्रेण राजसूयेन पाण्डव । पारमेष्ठ्यकामो नृपतिस्तद्भवाननुमोदता मित्यतस्य नाम ज्ञेयम् ॥ ६५ ॥

एवं कार्यद्वयस्य प्राप्तत्वादुभयमपि सकृदेव कर्तुमशक्यमिव भातीति स्वयमुद्धव पृष्टवानिति तत्सूचक नामाहु ॥

**उद्धवादिबुद्ध्यनुसारिणे नम** इति ॥ ६६ ॥

अथवा । नारदवचनाकरणे ब्रह्मपक्षहानि , जरासधवधार्थ गमने महादेवपक्षहानिरिति यज्ञार्थमेव गमनमनुचितमिति सर्वज्ञोपि रामलीलानुकरणे मत्री प्रष्टव्य इति तथा कृतवानिति तथा नामोक्तम् । इदं तु'त्वं हि न परमं चक्षु'रित्यतस्य ज्ञेयम् । अस्यार्थस्तु विवरणे स्पष्टीकृत ॥ ६६ ॥

अत परं द्वाविंशाध्यायनिरूपणम् ॥

**जीवधर्मावबोधकाय नम** इति ॥ ६७ ॥

अथ मंत्रणमुच्यते, तत्तु राजलीलाया लौकिकप्रकारेण भवति यथा जीवानाम् । अलौकिकप्रकारस्त्वेतादृशमंत्रेण वक्तव्य इति । यथा साधारणजीवाना धर्मा उपपत्त्यनुपपत्तियुक्ति समर्थिता भवंति, तथावबोधको जात , उद्धवद्वारा स्वयमेव तथोक्तवानिति तथा नामोक्तम् । इदं तु'यदुक्तमृपिणा देव साचिव्यं यक्ष्यतस्त्वये'त्यारभ्य 'इत्युद्धववचो राजन्नि'त्यतस्य ज्ञेयम् ६७

अत परं त्रयोविंशाध्यायस्य नाम ।

**हीनधर्मावलंबनजीवकार्यकर्त्रे नम** इति ॥ ६८ ॥

हीनधर्मावलंबनं ब्राह्मणवेषधारणं तेन याचनं कृत्वा राज्ञ उद्धारपूर्वककार्यकर्ता । राज्ञो युधिष्ठिरस्य वा । अन्यथा तत्कार्यं न भवेदिति भक्तपक्षपातो निरूपित । इदं तु'भीमसेनोर्जुन कृष्णो ब्रह्मलिंगधरास्त्रय । जग्मुर्गिरिव्रजमि'त्यारभ्य 'राजन्विस्मयतिर्यानरूला नित्यं तस्य ज्ञेयम् ॥ ६८ ॥

अत परं चतुर्विंशाध्यायनामनिरूपणम् ।

**भक्तज्ञानहेतवे नम** इति ॥ ६९ ॥

इदं तु 'ददृशुस्ते घनश्याम'मित्यारभ्य 'प्रणतक्लेशनाशाय गोविंदाय नमो नम' इत्यंतस्य नाम ज्ञेयम् । तादृशस्वरूपदर्शनेन स्वरूपज्ञाने स्वयमेव हेतुर्जात इति तथोक्तम् ॥ ६९ ॥

एवं नि साधनानुग्रहे कारणं किमित्याकाङ्क्षायामाहु ॥

**पुष्टिनिमित्तज्ञापकाय नम** इति ॥ ७० ॥

अनुग्रहे यन्निमित्तं तस्य निमित्तस्य ज्ञापक । इद तु 'संस्तूयमानो भगवान्राजभिर्मुक्त-बंधनै । तानाह करुणस्ताते'त्यारभ्य 'हैहयो नहुषो वेनो रावणो नरकोऽपरे । श्रीमदाद्भ्रंशिता' इत्यंतस्य नाम ज्ञेयम् । अनेन भवतामपि राज्यभ्रंश मदनुग्रहे निमित्तं जातमिति तथोक्तम् ॥ ७० ॥

अथ पंचविंशाध्यायनिरूपणम् ।

**राजसूयादिप्रवर्तकाय नम** इति ॥ ७१ ॥

राजसूय आदौ यस्य आरभे राजसूय तन्मिषेण धर्मप्रवर्तकाय नम । जरासंधवध राजकुलविमोचनश्रवणेन युधिष्ठिरस्य भगवति परमभक्तिर्जाता, तदनंतरं यज्ञोऽप्याधिदैविको जात । पुनरपि स्वस्मिन्नेव पूजाकरणेन सोपि भगवन्निष्ठो जात इति तथा नामोक्तम् । इद तु 'एव युधिष्ठिरो राजा जरासंधवध विभो । कृष्णस्य चानुभाव तं श्रुत्वा प्रीतस्तमब्रवीदि'त्यारभ्य 'समर्हयत् हृषीकेशं प्रीत प्रणयविह्वल' इत्यंतस्य नाम ज्ञेयम् ॥ ७१ ॥

अग्रे तत्पूजनमसहिष्णुश्चैद्योपराधं कृतवानिति तत्सूचक नामाहु ।

**शिशुपालादिभक्तवैकुंठप्राप्तिहेतवे नम** इति ॥ ७२ ॥

आदिपदेन हिरण्यकशिपुरावणादयोपि ज्ञेया । इदं तु 'इत्थ निशम्य दमघोषसुत स्व-पीठादि'त्यारभ्य 'चैद्यदेहोत्थितं तेजो वासुदेवमुपाविशत्' इत्यंतस्य नामोक्तम् ॥ ७२ ॥

अग्रे षड्विंशाध्यायस्य नाम ।

**दुर्योधनादिदृष्टमानभंगहेतवे नम** इति ॥ ७३ ॥

अयं भाव । भगवतो भूभारहरणं कर्तव्यं, तदर्थमेव राजसूयारंभ । तस्मिञ्जाते तद् वश्यंभावि । तत्र कारणं दुर्योधन एवेति तस्य मानभंगस्य कारणं स्वयमेव जात इति तादृशं नामोक्तम् । इदं तु 'एकदांत पुरे तस्य वीक्ष्य दुर्योधन श्रियम् । अतप्यद्राजसूयस्ये'त्यारभ्य 'स व्रीडितोऽवाग्वदनो रुषा ज्वलन् निष्क्रम्य तूष्णीं प्रययौ गजाह्वयम् । चभूव तूष्णीं भगवान् भुवो भरं समुज्जिहीर्षुर्भ्रमति स्मया दृशे'त्यंतस्य नाम ज्ञेयम् । यद्यप्यभिमानरूपं तस्य दौरात्म्यमेव मानभंगहेतु, राजसूये समागतस्याभिमान कर्तुमनुचित इति, तथापि भूभारहरणप्रयोजकत्वेन भगवत एव हेतुत्वमिति तथोक्तम् । इद तु भगवतस्तूष्णींभावेनावगम्यते ॥ ७३ ॥

किंच । भगवतस्तूष्णींभावस्यान्यदपि प्रयोजनमस्तीति तज्ज्ञापकं नामाहु ।

**युधिष्ठिरादिभक्तगर्वनाशकाय नम** इति ॥ ७४ ॥

यदि *भगवांस्तत्समानन कुर्यात्तदा भूभारहरण न भवेत्, भक्तदु खाभावात्।* यदि च त मारयेत्, तदा युधिष्ठिरादीना तादृशैश्वर्येण गर्वो भवेदिति तस्यानिष्टरूपत्वाद्यत्तच्छलेन सर्वैश्वर्यापहरणेन तन्नाशको जात इति तथोक्तम्। इद तु भगवत्तूष्णींभावस्य तात्पर्यज्ञापकं नाम ज्ञेयम् ॥ ७४ ॥

अथ सप्तविंशाध्यायनिरूपणम् ॥

**प्रद्युम्नादियादवगर्वप्रहारकाय नम** इति ॥ ७६ ॥

इद 'त्वपोवाह रणात् सूतो धर्मविद्दारुकात्मज' इत्यारभ्य 'व्यक्त मे कथयिष्यति हसंस्त्यो भ्रातृजामय' इत्यंतस्य नाम ज्ञेयम्। अत्र प्रद्युम्नस्य गर्व स उपस्थश्च इत्यस्य विवरणे स्फुटीकृत ॥ ७६ ॥

अत परमष्टाविंशाध्यायनिरूपणम्।

**तपस्यादिहसशाल्वादिघातकाय नम** इति ॥ ७७ ॥

इद तु प्रद्युम्नादिनिरोधनिरूपक नाम ज्ञेयम् ॥ ७६ ॥

अग्रे—**पुण्यादिहीनधर्मज्ञापनहेतवे नम** इति ॥ ७७ ॥

तस्याय भाव । अत्र शाल्वमारणात्पूर्वं युद्धे वसुदेवान्यथाभावप्रदर्शने भगवतोपि मोह एव दृष्ट । तेन कस्यापि भगवति प्राकृतबुद्धिर्भवेत्तत्ना तस्यानिष्ट स्यादिति तदभावाय तथा नामोक्तम्। भाग्यादीना हीनो यो धर्म पितरि शाल्वकृत तस्य ज्ञापने हेतु स्वयमेव जात । यतो मायाकृतमिद सर्वं दृष्ट, मायारूपो भगवानेवासुराणामुपास्य इति भगवतैवासुरव्यामोहार्थं तथा दर्शितमिति तथोक्तमिति भाव । इद तु 'ततो मुहूर्त आगत्य पुरुष' इत्यारभ्य 'ततो मुहूर्तं प्रकृतावुपस्थित' इत्यंतस्य ज्ञेयम् ॥ ७७ ॥

सिद्धान्तमूलकमग्रिम नामाहु ।

**मुख्यसिद्धान्तप्रवर्तकाय नम** इति ॥ ७८ ॥

इद तु 'एवं वदन्ति राजर्षे' इत्यारभ्य 'कुतो नु मोह परमस्य सद्गतेरि'त्यतस्य नाम ज्ञेयम्। यद्यप्येतन्नामद्वयं 'हसशाल्वादिघातकाय नम' इति नाम्न पूर्वमपेक्षित, तथापि मुख्य स एव निरोधसाधकत्वाद्दु खनिवारकत्वाच्चेति प्रथम तदेवोक्तम्। पश्चात्तादृग्धर्मदर्शनेन भक्ताना भगवत्यन्यथाभावो भवेदिति तन्निराकरणायैतन्नामद्वयमुक्तमित्येतदपि निरोधसाधकमिति सर्वमनवद्यम् ॥ ७८ ॥

अथैकोनत्रिंशाध्यायनामनिरूपणम्।

**दंतवक्रविदूरथादिमुक्तिहेतवे नम** इति ॥ ७९ ॥

इद तु 'शिशुपालस्य शाल्वस्य पौण्ड्रकस्यापि दुर्मतेरि'त्यारभ्य 'शिरो जहार राजेंद्र सकिरीटं सकुंडलमि'त्यंतस्य ज्ञेयम् ॥ ७९ ॥

अत परमुपसंहरंति । जरासंधोद्यममारभ्य विदूरथपर्यंत क्षत्रियधर्मनाट्योपसंहार कृत इति तत्सूचक नामाहु ।

**क्षत्रियधर्मनाट्योपसंहारकाय नम** इति ॥ ८० ॥

इद 'त्वेवं सौभ न शाल्व च दन्तवक्र सहानुजम्' हत्वे'त्यारभ्य 'विवेशालकृता पुरी मि रयन्तस्य ज्ञेयम् ॥ ८० ॥

अत परं भगवता युद्ध न कृतमिति तदुपसहार एव कृत इति भाव । अत एवाग्रे तत्सूचक नामाहु ।

**न्यस्तशस्त्राय नम** इति ॥ ८१ ॥

एतत्पुराणातरे प्रसिद्धम् । 'विदूरथातमामध्य पूतनादिदनो तुलम् । कृष्णस्तूपारमविति अत्र तु स्निग्धभक्तादीनामतरायराहित्येन निरोधसाधकत्वादुक्तम् ॥ ८१ ॥

अग्रे आवेशद्वारा यत्कार्यं कृतवास्तदाहु ।

**बलदेवतीर्थयात्राप्रवर्त्तकाय नम** इति ॥ ८२ ॥

अयं भाव । इद सात्त्विकप्रकरणम् । तत्र धर्म कर्तव्य । स न प्रवृत्त्यात्मको यज्ञती र्थादिरूप । तयोर्मध्ये यज्ञरूपो धर्म युधिष्ठिरद्वारा राजसूयकरणेन कृत । वसुनैवे विद्यमाने स्वस्य करण नोचितमिति तत्सहायकरणेन स्वयमेव कृत इति भाव । तीर्थानि तु बलदेवद्वारा कृतानि, क्रियाशक्तिरूपत्वेन तत्कृत स्वकृतमेवेति भाव । तत्र हेतु । भगवतस्तु भूभारहरण कर्तव्यम् । तत्र बलभद्रस्य कौरवपक्षपातित्वे विघ्नकरण सभवतीति तथेच्छामुत्पादितवान्यतस्ती र्थयात्रार्थं गतवान् । तदेवोक्तम् । 'श्रुत्वा युद्धोद्यम राम इति ॥ ८२ ॥

अग्रे पुन शाखागमने विघ्न करिष्यतीति सूतमारणेन पुनस्तीर्थयात्रा कारितवानिति तत्सूचकं नामाहु । **सूतघातकाय नम** इति ॥ ८३ ॥

तन्मिषेण तद्धेतु स्वयमेव जात इति तथोक्तम् ॥ ८३ ॥

तावत्पर्यंत कौरवाना युद्धं जातमिति तत्सूचकं नामाहु ।

**पार्थसारथये नम** इति ॥ ८४ ॥

इद तु त्रिंशाध्यायस्य नाम ज्ञेयम् । एतौ भूभारहरणार्थमेव प्रकटौ, तेन भक्तरक्षाभक्त पक्षपातसूचक नामेदं ज्ञेयम् । नरेण सहार , नारायणेन रक्षा, उभयकार्यार्थमेवैकत्र स्थिति ॥८४॥

अग्रेपि पार्थस्य भक्तत्वात्क्षात्रबलेन युद्ध करिष्यामीत्यभिमानेऽनिष्ट भवेदिति तत्र विषादमुत्पाद्य साक्षान्मुखारविंदाद्भक्तिरसात्मकं गीतामृत प्रकटीचकार । येनाग्रेपि जगदुद्धा रो जात , तज्ज्ञापकं नामाहु ।

**अव्यक्तगीतामृतमहोदधिप्रवर्तकाय नम** इति ॥ ८५ ॥

तच्छ्रवणेन मोहनिवृत्त्या भगवदाज्ञया युद्ध कृतवान्न तु स्वक्षात्रधर्माभिमानेनेति पार्थस्य रक्षा कृतेति तथा नामोक्तम् । अत्र महोदधिपदेन यथा सोगाधस्तथाभक्तिरसागाधत्वमत्रापीति भाव । यथा तत्र रत्नानि तथात्र पुष्टिमार्गीयभावा ज्ञेया ॥ ८५ ॥

एवमुपदिश्य युद्धं कारितवानिति तद्द्योतकं नामाहु ।

**कौरवबलांतकर्त्रे नम** इति ॥ ८६ ॥

तद्द्वारा स्वयमेव कृतवानिति भाव । एतावत्पर्यंत बलदेवस्य तीर्थयात्रा स्थिता । तत्रैव श्रुतम् । 'सर्वराजन्यनिधन भार मेने हृत भुवि' इति । भीमदुर्योधनयुद्धमवशिष्टम्–तत्र निवारणार्थं गतवान् । निवारणे कृतेपि तौ तद्वाक्य न जगृहतु । तदा परावृत्य द्वारावतीं ययौ । इद तु भगवत्कार्यं, नोचेद्दुर्योधनपक्षपात कुर्यादेव ॥ ८६ ॥—तत्सूचक नामाहु ।

**इतरपक्षपातनाशकाय नम** इति ॥ ८७ ॥

इतरो दुर्योधन । एतावच्चरित्र प्रयोजनत्वेनावेशद्वारा भगवता कृतम् । तत्प्रयोजन द्योतकत्वेन पार्थसारथये नम इत्यादिनाम्ना तच्चरित्रान्तर्गतत्वेन निरूपण ज्ञेयम् ॥ ८७ ॥

अथैकत्रिंशाध्यायनिरूपणम् ।

**सुदामारंकभार्यार्थभूम्यानीतेंद्रवैभवाय नम** इति ॥ ८८ ॥

अग्रे द्वात्रिंशाध्यायस्य नाम । **हेतुस्थापकाय नम** इति ॥ ८९ ॥

अय भाव । साक्षाद्भगवानस्मै किमपि न दत्तवानिति मार्गे तन्माहात्म्य स्मृत्वा हर्षे णादाने हेतु । 'अधनोयं धनं प्राप्य माद्यन्नुच्चैर्न मा स्मरे'दिति कल्पितवानिति तथा नामोक्तम्। किंच । अग्रेपि गृहागमने तांस्पूर्वश्रिय दृष्ट्वा पत्न्यादिस्थितस्तद्धेतु विचारितवान् । इद 'विलोक्य ब्राह्मणस्तत्र स्वसमृद्धिमि'त्यारभ्य 'महाविभूतेरवलोकतोन्यो नैवोपपद्येत यदूत्तमस्ये' त्यन्तस्य नाम ज्ञेयम् ॥ ८९ ॥

अत पर त्रयस्त्रिंशाध्यायनामनिरूपणम् ।

**देशकालादिधर्महेत्वनुसारिणे नम** इति ॥ ९० ॥

अत्र सात्त्विकनामभीष्टपूरण भगवत्कृत निरूप्यते । तत्र देश कालश्च अगम् । तदर्थं तदनुसारी जात इति तथा नामोक्तम् । तथा चार्थ । देश कुरुक्षेत्रं, काल सूर्योपरागसमय सर्व ग्रासरूप प्रलयसूचक , तत्र यो धर्म स्नानदानादिजनित समस्तदोषनिवर्तकस्तस्य हेतु यत्र, तदनुसारिणे । सर्वे प्रयाति अस्माभिरपि यात्रा कर्तव्येति दोषनिवृत्त्यर्थं ययुरिति भाव । इदं 'त्वथैकदा द्वारिकायामि'त्यारभ्य 'ययुस्ते भारतं क्षेत्र'मित्यंतस्य नाम ज्ञेयम् ॥ ९० ॥

अत पर तादृश्य यात्राया सर्वेषा परमाह्लादकारक उत्सवो भवतीति तत्सूचकं नामाहु ।

**यात्रोत्सवप्रवर्तकाय नम** इति ॥ ९१ ॥

इदं तु 'तं दृष्ट्वैर्वृष्णिप्प्य मर्त्यरोच'त महाभागा इत्यारभ्य' 'मुक्त्वोपविविशु कामं स्निग्धच्छायाङ्घ्रिपाङ्घ्रिषि'त्यंतस्य नाम ज्ञेयम् ॥ ९१ ॥

अत पर तत्र अन्ये समागता यात्रार्थं तेषा मद्दर्शनेनानंददायको जात इति तत्सूचकं नामाहु ।

**अखिलनयनामृतानिधिपूरकाय नम** इति ॥ ९२ ॥

अत परं सप्तत्रिंशाध्यायस्य नाम। **सुभद्राविवाहहेतवे नम** इति ॥ १०४ ॥

'अर्जुनस्तीर्थयात्राया पर्यट'न्नित्यारभ्य 'प्राहिणोत्पारिबर्हाणि वरवध्योर्मुदा बल' इत्यंतस्य नाम ज्ञेयम् ॥ १०४ ॥

यथा भगवान्भक्तप्रीत्यर्थं भगिनीमपि दत्तवान्तथा मार्गांतरभक्तयोरपि भक्ते ऋषिभिः सह स्वतो गत्वा प्रीतिं कृतवानन्यत स्वयममानी मानद इति तत्सूचक नामाहु ।

**जनकादिज्ञानिमनोरथपूरकाय नम** इति ॥ १०५ ॥

ज्ञानिनोऽप्यनुगृह्य भक्तिं दत्तवानित्यर्थ। इद तु 'तयो प्रसन्नो भगवा'नित्यारभ्य उवास कुर्वन्कल्याणं मिथिलानरयोषिता मित्यतस्य नाम ज्ञेयम् ॥ १०५ ॥

तथैव श्रुतदेवानुग्रह कृतवानिति तत्सूचकं नामाहु ।

**श्रुतदेवाद्युपासकसन्मार्गबोधकाय नम** इति ॥ १०६ ॥

श्रुतदेवादयो ये उपासका इदानीं श्रुतदेवेनैवोपासना कृतेति स एवादौ निरूपितस्तेषा सन्मार्गबोधक । यथा मयि भावस्तथा मद्भक्तेष्वपि ब्राह्मणेषु च भाव स्थापनीय इति तथा बोधक। इद तु 'श्रुतदेवोच्युत प्राप्त'मित्यारभ्य 'उपित्वादिश्य सन्मार्गं पुनर्द्वारवतीमगा'दित्यंतस्य ज्ञेयम् ॥ १०६ ॥

अत परमष्टात्रिंशाध्यायस्य नाम निरूपणम्।

**अखिलनिगमनिजजनसंस्तुताय नम** इति ॥ १०७ ॥

अखिलनिगमनिजजनसंस्तुताय। अखिलनिगमा एव निजजना बन्दिनस्तत्पराक्रमैरि त्युक्तत्वात्तद्रूपा, तै सम्यक् स्तुताय। अर्थस्तु विवरणे विवृत । श्रुतिनिरूपितमेव श्रीकृ- ष्णशब्दवाच्य परब्रह्मेति ॥ १०७ ॥

अन्येषामगम्यमिति तादृशं नामाहु ।

**सर्वागम्यस्वरूपाय नम** इति ॥ १०८ ॥

किंच श्रुतीना भगवद्गुणवर्णने कृते भगवान्प्रसन्न स्वस्वरूप ज्ञापितवान्तथापीयत्तया तन्न ज्ञातु शक्यमिति पूर्वं तु 'यतो वाचो निवर्तंते'त्युक्त्वापि पश्चात्तादृशमपि किंचिद्गनिर्वचनीय वस्त्विति 'आनंद ब्रह्मणो विद्वा'निति निरूपितवतीति तथा नामोक्तम्। एतेनेतरश्रुतीनामगम्यत्वमे- व पुष्टिश्रुतीनामेव गम्यमिति भाव सूचित । अतएव 'शब्दार्थयोरुत्तमयो संबंधो यादृशो मत । त विवेचयितुं कृष्ण श्रुतिगीता चकार हे'ति श्रीमदाचार्यचरणैरुक्तम् ॥ १०८ ॥

भगवज्ज्ञापितमेव तज्ज्ञान भवतीति श्रुत्या तत्कीदृश निर्णीतं तज्ज्ञापक नामाहु ।

**ऐश्वर्यादिषड्धर्मस्थापकाय नम** इति ॥ १०९ ॥

अन्ये निर्धर्मकं ब्रह्मेति वदति वाक्यार्थाज्ञानात्। तत्र तु सर्वमखड सच्चिदानंदात्मक कृष्णरूपमेवेति निरूपितम्। यत परे ब्रह्मणि भगवति कृष्णे अलौकिकैश्वर्यादयो धर्मा सर्वे

एवं वसुदेवायाखण्डाद्वैतज्ञानमुपदिश्य देवक्या अपि मनस्तापं दूरीकृतवान् तत्सूचकं नामाहु ।

**देवकीमनःपीडापनोदकाय नमः** इति ॥ ९९ ॥

अयं भावः । भगवता सर्वेषामत्रत्यानामुद्धारः कर्त्तव्य इति स्वभ्रातरः स्वनिमित्तमेव मारिता तेषामप्युद्धारः कर्तव्य इति देवक्यास्तथेच्छामुत्पादितवान् । तथापि गुरोः पुत्र आनीत इति पूर्वं श्रुतमिति तन्माहात्म्यज्ञानेन तथा प्रार्थितवती तच्छोकजनितपीडा त्वत स्थितैव स्त्रीस्वभावात् । भगवता तदानयनाङ्गीकारणैव मनःपीडा निवृत्तेति तथा नामोक्तम् । इदं तु 'कृष्ण रामौ समाश्राव्य पुत्रान्कंसविहिंसितान् । स्मरती कृपणं प्राह वैक्लव्यादश्रुलोचने'त्यारभ्य 'एवं सचोदितौ मात्रा रामकृष्णौ च भारत । सुतलं संविविशतु'रित्यंतस्य नाम ज्ञेयम् ॥ ९९ ॥

अतः परं सुतलप्रवेशस्य प्रयोजनज्ञापकं नामाहु ॥

**देवादिभक्तशापादिदोषनाशकाय नमः** इति ॥ १०० ॥

अयं भावः । एते तु षड्मरीचिपुत्राः सरस्वत्या प्रवृत्तं ब्रह्माणं दृष्ट्वा तत्स्वरूपाज्ञानेन जहसुः । तद्दोषेणासुरीं योनिं प्राप्ताः । हिरण्यकशिपोः जाताः । पश्चात्ते देवक्या उदरे प्रविष्टा कंसेन मारिता इति देवक्यास्तद्दर्शनाकांक्षेति तथा । देवादिः ब्रह्मा स एव भक्तः । यतो भगवानेव कामरूपस्तेन प्रेरितः । स तत्सेवार्थं प्रवृत्तः निष्कपट, न तु विषयासक्त इति तत्कृते यः शापः आसुरयोनिप्राप्तिरूपः । आदिपदेनान्येपि क्लेशा ज्ञेयाः । तद्दोषनाशको जात इति भावः । इदं तु 'तस्मिन्प्रविष्टावुपलभ्ये'त्यारभ्य 'षडिमे मत्प्रसादेन पुनर्यास्यन्ति' इत्यन्तस्य नाम ज्ञेयम् । 'अधस्तलादूर्ध्वानयनं तत्रापि द्वारिका वैकुंठपुरीति तत्र नीता इति तदुद्धार एव कृत इतिभावः १००

अग्रे पुत्रदानज्ञापकं नामाहु ।

**देवकीमृतापत्यदात्रे नमः** इति ॥ १०१ ॥

इदं तु 'इत्युक्त्वा तान्समादाय इंद्रसेनेन पूजितौ पुनर्द्वारमतीमेत्य मातुः पुत्रानयच्छता'-मित्यंतस्य ज्ञेयम् ॥ १०१ ॥

अग्रे पुत्रदर्शनेन तत्स्नेहजो धर्मः प्रकट इति तत्सूचकं नामाहु ।

**देवकीस्तनंधयाय नमः** इति ॥ १०२ ॥

इदं तु 'तान् दृष्ट्वा बालकान्देवी'त्यारभ्य 'अपाययत् स्तनं प्रीते'त्यस्य नाम ज्ञेयम् । किंच, न केवलं स्तनपानं जातम्, किन्तु तेषां स्पर्शेनानिर्वचनीयं सुखं जातमिति तत्सूचकं नामाहु ।

**भक्तार्चित्यसुखदात्रे नमः** इति ॥ १०३ ॥

भक्ताया मातुरचिंत्यं मृतानामानयनं मनस्यपि न विचारक्षमं तादृशं यत्सुखं सुतस्पर्श परिप्लुतेत्यनेनोक्तं तस्य दात्रे । अथवा । भगवन्माहात्म्यज्ञानेन तदानंदानुभव एवाचिंत्यं सुखं तस्य दात्रे । इदं तु 'सुतस्पर्शपरिप्लुते'त्यारभ्य 'दृष्ट्वा देवकी मृतागमननिर्गमम् । मेने सुविस्मिता मायां कृष्णस्य रचितां नृपे'त्यंतस्य ज्ञेयम् ॥ १०३ ॥

अत परं सप्तत्रिंशाध्यायस्य नाम। **सुभद्राविवाहहेतवे नम** इति ॥ १०४ ॥

'अर्जुनस्तीर्थयात्राया पर्यट'न्नित्यारभ्य 'आहिणोत्पारिबर्हाणि वरवध्वोर्मुदा बल' इत्यंतस्य नाम ज्ञेयम् ॥ १०४ ॥

यथा भगवान्भक्तप्रीत्यर्थं भगिनीमपि दत्तवान्तथा मार्गांतरभक्तयोरपि भक्तैः ऋषिभिः सह स्वतो गत्वा प्रीतिं कृतवान्यत स्वयममानी मानद इति तत्सूचकं नामाहु ।

**जनकादिज्ञानिमनोरथपूरकाय नम** इति ॥ १०५ ॥

ज्ञानिनोऽप्यनुगृह्य भक्तिं दत्तवानित्यर्थ । इद तु 'तयो प्रसन्नो भगवा'नित्यारभ्य 'उवास कुर्वन्कल्याणं मिथिलानरयोषिता'मित्यतस्य नाम ज्ञेयम् ॥ १०५ ॥

तथैव श्रुतदेवानुग्रहं कृतवानिति तत्सूचकं नामाहु ।

**श्रुतदेवाद्युपासकसन्मार्गबोधकाय नम** इति ॥ १०६ ॥

श्रुतदेवादयो ये उपासका इदानीं श्रुतदेवेनैवोपासना क्रियते स एवादौ निरूपितस्तेषां सन्मार्गबोधक । यथा मयि भावस्तथा मद्भक्तेष्वपि ब्राह्मणेषु च भाव स्थापनीय इति तथा बोधक । इद तु 'श्रुतदेवोऽच्युत प्राप्त'मित्यारभ्य 'उषित्वादिश्य सन्मार्गं पुनर्द्वारवतीमगा'दित्यंतस्य ज्ञेयम् ॥ १०६ ॥

अत परमष्टत्रिंशाध्यायस्य नाम निरूपणम्।

**अखिलनिगमनिजजनसंस्तुताय नम** इति ॥ १०७ ॥

अखिलनिगमनिजजनसंस्तुताय । अखिलनिगमा एव निजजना बन्दिनस्तत्पराक्रमैरि स्युक्तत्वात्तद्रूपा, तै सम्यक् स्तुताय । अर्थस्तु विवरणे विवृत । श्रुतिनिरूपितमेव श्रीकृष्णशब्दवाच्य परब्रह्मेति ॥ १०७ ॥

अन्येषामगम्यमिति तादृश नामाहु ।

**सर्वागम्यस्वरूपाय नम** इति ॥ १०८ ॥

किंच श्रुतीना भगवद्गुणवर्णने कृते भगवान्प्रसन्न स्वस्वरूपं ज्ञापितवान्तथापीयत्तया तत्र ज्ञातु शक्यमिति पूर्वं तु 'यतो वाचो निवर्तंते'त्युक्त्वापि पश्चात्तादृशमपि किंचिदनिर्वचनीय वस्त्विति 'आनंदं ब्रह्मणोविद्वा'निति निरूपितवतीति तथा नामोक्तम्। एतेनेतरश्रुतीनामगम्यमेव पुष्टिश्रुतीनामेव गम्यमिति भाव सूचित । अतएव 'शब्दार्थयोरुत्तमयो संबंधो यादृशो मत । त विवेचयितुं कृष्ण श्रुतिगीता चकार हे'ति श्रीमदाचार्यचरणैरुक्तम् ॥ १०८ ॥

भगवज्ज्ञापितमेव तज्ज्ञान भवतीति श्रुत्या तत्कीदृश निर्णीतं तज्ज्ञापकं नामाहु ।

**ऐश्वर्यादिषड्धर्मस्थापकाय नम** इति ॥ १०९ ॥

अन्ये निर्धर्मकं ब्रह्मेति वदंति वाक्यार्थाज्ञानात्। तत्र तु सर्वमखडं सच्चिदानंदात्मकं कृष्णरूपमेवेति निरूपितम्। यत परे ब्रह्मणि भगवति कृष्णे अलौकिकैश्वर्यादयो धर्मा सर्वे

करणसामर्थ्यरूपा कर्तुमकर्तुमन्यथाकर्तुं समर्थो सर्वदा सन्देवेति श्रुतिद्वारा स्वयमेव स्थापको जात इति तथा नामोक्तम्। इदं तु वेदस्तुतिसंबंधि सपूर्णाध्यायस्य नामत्रयं ज्ञेयम् ॥ १०९ ॥

अथैकोनचत्वारिंशाध्यायस्य नाम ।

**भक्तदुष्टवैभवनाशकाय नम** इति ॥ ११० ॥

भक्ताना दुष्टवैभवनाशकाय। अय भाव । ' देवासुरमनुष्येषु ये भजत्यशिव शिवम्। प्रायस्ते धनिनो भोजा न तु लक्ष्म्या पतिं हरि'मिति राज्ञा प्रश्ने कृते श्रीशुकेनोत्तरितम्। 'निवृत्तेष्वश्वमेधेषु राजा युष्मत्पितामह । शृण्वन्भगवतो धर्मानपृच्छदिदमच्युत मिति । तदा श्रीभगवानुवाच। 'यस्याहमनुगृह्णामि हरिष्ये तद्धन शनै रित्यारभ्य 'मत्ता प्रमत्ता वरदान्वि स्मरंत्यवजानत' इत्यतम्। शिवस्तु तामसतपस्यादिना शीघ्र प्रसन्नस्तेषा यथाभिलषित वर ददाति यथा बाणादीनाम्। तदैश्वर्यं दुष्ट भवति भक्तानिष्टकारक चेति भगवांस्तन्नाशको भवतीति तथा नामोक्तम्। अन्यथा ये वरदातारस्तानेव पीडयितुमुद्यता भवति ॥ ११० ॥

तत्सूचक नामाहु ।

**भक्तसंकटनिवारकाय नम** इति ॥ १११ ॥

भक्तस्य तत्कृतो य संकटस्तस्य निवारकायेति। भगवतो भक्तस्य रक्षाकरणैकस्वभाव एव नत्वनिष्टोत्पादकत्वमिति सूचितम् ॥ ११० ॥

तत्र दृष्टातरूपं नामाहु ।

**वृकादिदुष्टघातकाय नम** इति ॥ ११२ ॥

महादेवेनाविचार्यैव वृकाय वरो दत्त, स पुन स्वस्यैव पीडाकारको जातस्तदा भगवास्त मारयित्वा भक्तरक्षा कृतवानिति तथोक्तम्। इद तु 'शापप्रसादयो रित्यारभ्य 'मुमुचु पुष्पवर्षाणि हते पापे वृकासुरे' इत्यतस्य नाम ज्ञेयम् ॥ ११२ ॥

एवं संकटनिवारणेन देवा स्तुतिं चक्रु । यत्रान्येपि स्तुतिमकुर्वंस्तदा यस्य संकट दूरीकुर्यात्स तु करोत्येव। किंच पुत्रसंकटनिवारणेन ब्रह्मापि स्तुतिं चक्रे। तदाहु ।

**ब्रह्मशिवादिवंदितचरणाय नम** इति ॥ ११३ ॥

इदं तु 'देवर्षिपितृगंधर्वा' इत्यारभ्य 'मोचित सकटाच्छिव'इत्यंतस्य नाम ज्ञेयम्। अनेन भगवति परमोत्कर्षो निरूपित ॥ ११३ ॥

अन्यदप्युत्कर्षबोधकं नामाहु ।

**सर्वोत्कर्षबोधकाय नम** इति ॥ ११४ ॥

इदं तु चत्वारिंशाध्यायस्य नाम इति। 'सरस्वत्यास्तटे राजनृषय सत्रमासत। वितर्कः समभूत्तेषा'मित्यारभ्य 'एवं सारस्वता विप्रा' इत्यंतस्य नाम ज्ञेयम् ॥ ११४ ॥

अन्यदप्युत्कर्षज्ञापकं नामाहु ।

**विप्रमृतापत्यदात्रे नमः** इति ॥ ११५ ॥

इदं 'त्वेकदा द्वारवत्या त्वि'त्यारभ्य 'विप्राय ददतु पुत्रा'नित्यंतस्य नाम ज्ञेयम् ॥ ११५॥
भगवतस्त्वेकं चरित्रं बहुप्रयोजनगर्भितम् । अर्जुनस्तु निरोधमध्यपाती भक्तस्तस्य त्वस्मि
अहंकारो ह्यनुचित इति तस्य गर्वमेतच्चरित्रेण दूरीकृत्य निरोधः कृत इति तत्सूचकं नामाहुः ।

**अर्जुनादिगर्वप्रहारकाय नमः** इति ॥ ११६ ॥

आदिपदेन भगवदतिरिक्ताः सर्वे ज्ञेयाः । सर्वेषां स्वतः कर्तुमशक्यत्वादिति भावः ।
इदं तु 'निशाम्य वैष्णवं धाम पार्थः परमविस्मितः यत्किंचित्पौरुषं पुंसां मेने कृष्णानुकंपि-
त'मित्यंतस्य नाम ज्ञेयम् ॥ ११६ ॥

एवं धर्मं प्रवर्तयन् भक्तानामानंदं कुर्वन्द्वारिकानायको भूत्वा निवसन्स्थित इति तत्सू-
चकं नामाहुः ।

**द्वारिकानायकाय नमः** इति ॥ ११७ ॥

इदं तु 'सुखं स्वपुर्यां निवसन् द्वारिकायां श्रियः पति'रित्यंतस्य नाम ज्ञेयम् ॥ ११७॥
तत्र निवसन्नायको भूत्वा नानाविलासान् चक्र इति तादृशं नामाहुः ।

**नानाविलासविलसितसुखाम्बुधये नमः** इति ॥ ११८ ॥

इदं तु 'स्त्रीभिश्चोत्तमवेषाभि'रित्यारभ्य 'कृष्णस्यैवं विहरतो गत्यालापस्मितेक्षणे नर्मकेलि-
परिष्वगैः स्त्रीणां किल हृता धियः' इत्यंतस्य नाम ज्ञेयम् ॥ ११८ ॥

एवं चरित्रकरणेन सर्वेषां प्रपंचविस्मृतिः साधितेत्युपसंहरन् तत्सूचकं नामाहुः ।

**निखिलनिजजनप्रपंचविस्मारकाय नमः** इति ॥ ११९ ॥

भगवदासक्तिस्तु यथाधिकारमितिभावः । एवं दशमस्कंधस्य निरोधसाधकानि नामानि
निरूपितानि ॥ ११९ ॥

उपसंहरति इत्येवमिति ॥

इत्येवं राजलीलाया नाम्नामष्टादशं शतम् ।
निरोधलीलामाश्रित्य भक्त्यै भक्ते निरूपितम् ।

राजलीलाया निरोधलीलामाश्रित्य नाम्नामष्टादशं शतं च निरूपितम् । प्रयोजनं भक्ते
भक्तार्थे । तत्रापि निमित्तं भक्त्यै भक्तस्य यथा मयि भक्तिः स्नेहादयो भवंतीत्यर्थः ॥ १ ॥

अतः परमेतत्पाठफलमाहुः ।

बाललीलानामपाठादिति ।

बाललीलानामपाठात् श्रीकृष्णे प्रेम जायते ॥
आसक्तिः प्रौढलीलाया नामपाठाद्भविष्यति ॥ २ ॥

व्यसनं कृष्णचरणे राजलीलाभिधानतः ।
तस्मान्नामत्रयं जाप्यं भक्तिप्राप्तीच्छुभिः सदा ॥ ३ ॥

अर्थस्तु स्पष्ट एव । बाललीलायाः प्रौढलीलायाश्च फलं तामसभक्तानामेवोक्तम् । तत्रासक्तिस्वभावात् मनोरथात्मकं व्यसनमपि तदंतःपात्येवेति तत्स्वरूपमपि भिन्नम् । तदधिकारस्यैव तथात्वात्, एतत्स्वरूपं तु अक्षण्वतामित्यस्य विवरणे मनोरथप्रकारेण प्रतिभातमित्युक्तम् । तत्रैवाग्रे तदंशानां महिष्यादीनां तु क्रमेणेत्युक्तम् । तथा च इयं तु राजलीला प्रमाणरूपा । भक्ता अपि प्रमाणनिष्ठा महिष्यादयो स्निग्धदंपतीभावनिष्ठा एवेति । निरोधोपि प्रमाणरूपः । अतः सर्वेषां स्वस्वरूपस्वमाहात्म्यज्ञापनेन प्रपंचविस्मृतिरेव कृता न तु संकल्पोत्पादिका आसक्तिः । एवं सति प्रपंचविस्मरणेन भगवति माहात्म्यज्ञानपूर्वकस्नेहेन सकलेंद्रियाणां भगवच्चरणारविंदनिष्ठव्यसनमपि संपद्यत इति तत्पाठफलमपि तादृशं निरूपितम् । अधिकारभेदेन व्यसनस्यापि भेदोवगंतव्यः । मर्यादायामपि भक्तानां भगवत्परतारूपं व्यसनं भवत्येवेति सर्वमनवद्यम् । तथा चोक्तं श्रीमदाचार्यचरणैः 'सम्यग्व्यवसिता बुद्धिस्तवे'त्यस्याभासे 'समानशीलव्यसनं दृष्ट्वा राजानं प्रभुं चामिनंदति द्वाभ्या'मिति । अतः परमिदं मंत्रवज्जाप्यमित्याहुः ।

तस्मादिति । अधिकारिणमाहुः भक्तिप्राप्तीच्छुभिरिति ॥

श्रीमदाचार्यचरणकरुणारससिंचितम् ।
आसीदुल्लसिते चित्ते नामालिविवृती मम ।
तत्कृपादृष्टिसंजातपद्यं संगतितो मया ।
विवृतं तच्च ये संतः पश्यंतु सुविचक्षणाः ॥ १ ॥
यदत्र बुद्धिदोषेण सहसेन विसंमतम् ।
मार्जनीयं स्वसौहार्दोद्बुद्धशक्तिः सत्सु मे सदा ॥ २ ॥
श्रीमदाचार्यचरणाः श्रीमान् श्रीविठ्ठलः प्रभुः ।
शरणं मे सदा तस्मात्तत्रैवैतत्समर्पितम् ॥ ४ ॥



श्रीमद्-वल्लभाचार्य-महाप्रभु-प्रकटितम्

# प्रेमामृतम्

## श्रीमत्प्रभुचरणविरचितव्याख्योपेतम्

### परिशिष्टे

१. श्रीपरिवृढाष्टकस्तोत्रं सव्याख्यम्

२. 'भावैरंकुरितं' श्लोकस्य श्रीहरिरायाणां व्याख्या



श्रीमद्-वल्लभाचार्य-महाप्रभु-वंशावतंस-
नित्यलीलास्थित-गोस्वामिश्री १००८-
श्रीव्रजनाथलाल-महाराजश्रीत्येषां-
स्मृतौ-तदात्मजैः-गोस्वामि-
श्री १००८ श्रीमुरलीधरलाल-
महाराजश्रीत्येतैः-प्रकाशितम्



वि. सं. २०३६ श्रीवल्लभाब्दाः ५०३

प्रकाशक :
गोस्वामीश्री १००८, श्रीमुरलीधरलाल महाराज,
५०, गंगा निवास, स्वामी विवेकानन्द रोड,
बोरिवली (प.) बम्बई। ४०० ०९२ भारत

साधारण संस्करण १००० प्रति
राज संस्करण १००० प्रति
श्रीवल्लभाब्दा : ५०३

ग्रन्थ–परिचय लेखक : गोस्वामी श्याम मनोहर

मुद्रक :
बी. वरदराजन
एसोसिएटेड एडवर्टाइजर्स एण्ड प्रिंटर्स
५०५ तारदेव, आर्थर रोड,
बम्बई, ४०००३४.



गोस्वामिश्री १००८ श्रीव्रजनाथलालजी महाराज

॥ श्रीकृष्णाय नमः ॥

॥ श्रीमदाचार्यचरणकमलेभ्यो नमः ॥

# ग्रन्थ-परिचय

वल्लभ सम्प्रदायकी परम्पराके अनुसार प्रेमामृत स्तोत्र श्रीमद्-वल्लभाचार्य महाप्रभुको गोवर्धनगिरिकी शिलापर लिखा हुआ मिला था, जिसे भगवदाज्ञानुसार उन्होंने श्रीचैतन्य महाप्रभुको प्रदान किया था। परवर्ती कालमें गौड सम्प्रदायमें यह स्तोत्र श्रीचैतन्य महाप्रभु-की कृतिके रूपमें ही मान्य हो गया। जो भी हो स्वयम् श्रीविट्ठल-नाथ प्रभुचरण द्वारा इस स्तोत्रपर व्याख्या प्रकट करना, इस स्तोत्रकी श्रीमहाप्रभुकी अन्य कृतियोंके तुल्य महत्ताकी पुष्टि है।

श्रीपुरुषोत्तमनामसहस्रम् जैसे भागवतोक्त सर्गादि दशविध लीला-ओंके मननार्थ भगवन्नामोंका सकलन है, या जैसे त्रिविधनामावली भागवतके दशम स्कन्धमें वर्णित श्रीकृष्णकी लीलाओंके मननार्थ भगवन्नामोंका सकलन है, वैसे ही प्रेमामृत स्तोत्र दशम स्कन्धके अन्त-र्गत तामसफल-प्रकरणकी लीलाओंके मननार्थ भगवन्नामोंका सकलन है। ये वे नाम हैं जो कृष्णविरहके निःश्वासके साथ श्रीराधाके मुख-कमलसे परागकी तरह निःसृत हुए हैं।

इन नामोंके ग्रहण चिन्तन मनन या पठन के सच्चे अधिकारी वे ही भक्त हैं, जिनकी लौकिक विषयोंमें आसक्ति क्षीण होकर श्रीकृष्णमें अनन्य आसक्ति दृढ हो गई हो। अन्यथा श्रीमत्प्रभुचरण सुस्पष्ट शब्दोंमें विधान करते हैं– "प्रार्थये रसिकाः स्वैरं पश्यन्त्विद-महर्निशम्। एतद्रसानभिज्ञस्तु माद्राक्षीदपि वैष्णव."।

इस ग्रन्थके परिशिष्टके रूपमें श्रीमहाप्रभुविरचित श्रीपरिवृढाष्टक, जिसपर श्रीगोपेश्वरजीकी व्याख्या उपलब्ध होती है, भी प्रकाशित हो रहा है। यह श्रीनाथ–श्रीगोवर्धननाथकी व्रजलीलाओंमें रति

जगानेवाला ग्रन्थ है। यह भी प्रेमामृतकी तरह फलप्रकरणकी लीलाओंके वर्णनपर ग्रन्थ है।

द्वितीय परिशिष्टमें श्रीमत्प्रभुचरणविरचित "भावैरंकुरितम्" श्लोककी श्रीहरिरायजीकृत व्याख्या प्रकाशित हो रही है। भक्ति-वर्धिनी में जो (१) बीजभाव (२) प्रेम (३) आसक्ति तथा (४) व्यसन ये चार अवस्थायें भक्तिकी दिखलायी गयी हैं, उसकी सात अवस्थाओंमें व्याख्या यहां की गयी है. (१) भाव (२) प्रेम (३) प्रणय (४) स्नेह (५) राग (६) अनुराग (७) व्यसन। इन्हें क्रमशः अंकुर, कन्दल, शाखा, पल्लव, कलिका, प्रसून तथा फल रूप माना गया है।

इनका प्रथम संस्करण वि. सं. १९७५ मे प्रकाशित हुआ था। प्रस्तुत संस्करण उसीका ऑफसेट प्रोसेस द्वारा पुनर्मुद्रित रूप है। उक्त प्रथम संस्करणके सम्पादक–प्रकाशक थे श्रीमूलचन्द तुलसीदास तेलीवाला तथा श्रीधीरजलाल व्रजलाल साकलिया। इस पुनः प्रकाशन के अवसर पर इन महानुभावोका हम कृतज्ञतापूर्वक स्मरण करते है।

---

# प्रस्तावना ।

१ आ संग्रहमां प्रेमामृत तथा परिवृढाष्टक एम बे ग्रन्थरत्नुं विवरणसहित मुद्रण कर्युं छे प्रथम ग्रन्थ प्रेमामृत या कृष्णप्रेमामृत छे आ ग्रन्थ उपर श्रीमद्विठ्ठलेश्वरप्रभुचरण श्रीगुसांईजीए एक अतीव सुन्दर विवरण रच्युं छे ते विवरण साथे 'प्रेमामृत' अहिं प्रकट कर्युं छे आ प्रेमामृत-ग्रन्थमां मुख्य श्रीस्वामिनी श्रीराधाजीए विरहावस्थामां प्रभुना गायला नामोनो संग्रह छे सांप्रदायिक गाथा एम छे के आ नामो श्रीगिरिराजजीनी शिला उपर कोतरेला हता ते नामोनो संग्रह श्रीगुसांईजीए कर्यो अने उपर आपश्रीए अत्र मुद्रित करेलुं सुन्दर विवरण योज्युं श्रीप्रेमामृत ग्रन्थनो प्रचार गौड संप्रदायमां पण होवो जोइए संवत् १७२७ वैशाख सुदि दशमीने मंगळवारे बळिराम नामना पुरुषना हस्ते लखेलो आ ज ग्रन्थ अमने प्राप्त थयो छे, तेमां इतिश्री आ प्रकारे छे, 'इति श्रीजगज्जीवनानन्दे चन्द्रश्रीकृष्णचैतन्यमुखपद्मविनिर्गते श्रीगोपीनायकनामामृतलहरी संपूर्णा।' अर्थात् आज प्रेमामृत ग्रन्थनुं आ इतिश्रीप्रमाणे नाम श्रीगोपीनायकनामामृतलहरी छे, अने तेनुं प्राकट्य श्रीकृष्णचैतन्यना मुखद्वारा थयुं छे श्रीमत्प्रभुचरण 'राधागीतानि नामानि' एटलुं ज कहीने ग्रन्थना कर्तृत्वसंबन्धमां मौन राखे छे, अने 'इत्याह' एम ग्रन्थकारमाटे एकवचन प्रयोजे छे, एटले ए श्रीमदाचार्यनी श्रीवल्लभाधीश्वरनी कृति होवानुं संभवतुं नथी आचार्यश्री जे ग्रन्थना कर्ता होय छे तेनी टीका लखती वखते श्रीगुसांईजी वगेरे सर्वथा बहुवचन प्रयोग करे छे आ प्रकारे आ ग्रन्थना कर्तृत्वसंबन्धमां सन्देह छे गौड संप्रदायमां श्रीस्वामिनीजीनुं प्राधान्य प्रभु करतां विशेष मनाय छे तेथी सामान्यरीते श्रीस्वामिनीजीना नामनुं गान श्रीप्रभु करे एम ते संप्रदायनुं मर्म छे, तेथी आ ग्रन्थ जो उपर जणावेली इतिश्री प्रमाणे श्रीकृष्णचैतन्यकृत ज होय तो तेथी सूचन एटलुं ज थाय छे के ए ग्रन्थना प्राकट्यमां श्रीमदाचार्य श्रीवल्लभाधीश्वरनी श्रीचैतन्य उपर असर छे गमे तेम हो परन्तु आ ग्रन्थ श्रीमदाचार्यकृत तो नथी लागतो आ ग्रन्थना विवरणमां श्रीगुसांईजी कोई अन्यना आ ग्रन्थ उपर करेला व्याख्यानने दूषण आपे छे आचार्यजीनो ज जो आ ग्रन्थ होय तो एवो अन्य टीकाकार कोण होइ शके? एवो टीकाकार आ संप्रदायमां सर्वथा अज्ञात रहे ए संभवतुं नथी आ ग्रन्थमां श्रीराधानुं नाम प्राय प्रधान छे, श्रीमदाचार्यचरण निज ग्रन्थोमां राधा नामनो प्रयोग करता दिसता नथी, परन्तु ज्यां ज्यां प्रसंग आवे छे त्यां त्यां शास्त्रीय मुख्य शक्ति, वा मुख्य स्वामिनी वा लक्ष्मी इत्यादि शब्दो प्रयोजे छे आ कारणथी पण आ ग्रन्थना श्रीमदाचार्यजीना कर्तृत्वविषे सन्देह थाय छे श्रीमत्प्रभुचरण श्रीगुसांईजीए श्रीजयदेवना गीतगोविन्दनी अष्टपदी तथा रामानुजीय वेदान्ताचार्यना व्यासादेश उपर विवरण योजेला प्रसिद्ध छे तेथी कदाचित् जो आ ग्रन्थ श्रीकृष्णचैतन्यनो ज होय अने तेनी स्वाभाविक सुन्दरताने लीध आपे विवरण योज्युं होय तो ते सर्वथा असंभवित तो कही शकाय एम नथी गमे तेम हो परन्तु आ ग्रन्थ परम रमणीय छे अने श्रीगुसांईजीना विवरणथी आ ग्रन्थ पुष्ट थयलो होवाथी एनी रमणीयतामां अने भगवदीयतामां काइक और वधारो थयो छे आना पाठमां अधिकार तेवा भाग्यवान् संसारासक्तिरहित प्रभुप्रेममां मुग्ध भगवदीयोनो ज छे आ ग्रन्थादिना वाचनादि करनारे श्रीमत्प्रभुचरणनी आज्ञानुं अनुसंधान अवश्य करवुं

'प्रार्थये रसिका स्वैरं पश्यन्त्विदमहर्निशम् ।
एतद्रसानभिज्ञस्तु मा द्राक्षीदपि वैष्णव ॥'

२ प्रेमामृतग्रन्थनुं प्राकट्य तृतीय पीठाधीश्वर नित्यलीलास्थ श्रीमद्बालकृष्णलालजीना स्मरणार्थ नटपुरना वैष्णवोद्वारा थयुं छे. आ ग्रन्थनुं मुद्रणखर्च नटपुरना वैष्णवोए अर्प्युं छे.

३ श्रीप्रेमामृतविवरणनु मुद्रण चार पुस्तकोना आधारे थयु [illegible] १ प्रथम पुस्तक नडियादस्थ डाहीलक्ष्मी पुस्तकालयस्थ शास्त्री भाइलालना सम्रहमांथी रा [illegible] तनसुखराम मनसुखराम त्रिपाठी एओनी कृपाथी प्राप्त थयलु आ पुस्तक बहु सुन्दर प्राचीन तथा प्राय शुद्ध छे, परन्तु केटलेक स्थले पंक्तिओ लेखकदोषथी त्रुटित छे २ आ पुस्तक पंडित गट्टूलालना संग्रहमांनु आ पुस्तक पण प्राय शुद्ध छे एमां प्रथम पत्र नथी ३ आ पुस्तक भगवद्धर्मपरायण शास्त्री कल्याणजीए आप्यु छे आ पुस्तक प्राचीन तथा प्राय शुद्ध छे ४ आ पुस्तक भगवद्धर्मपरायण मनमोहनदास दलपतराम दलाल बी ए, एमणे आपेलु आ पुस्तक नूतन छे मनमोहनदासभाइए निजपठनार्थ उक्त पुस्तक पोताने हस्ते लखीने शोधेलु छे आ पुस्तकनी प्रेसकॉपी नडियादस्थ चन्दुलाल चुनीलाल शाह एमणे करी आपी हती आ सर्वनो उपकार अमे स्वीकारीए छीए

१ द्वितीय ग्रन्थ श्रीपरिवृढाष्टक छे आ सुन्दर स्तोत्रना द्रष्टा श्रीमदाचार्यजी छे एना उपर मात्र एक टीका प्राप्त थाय छे आ टीकामां तत्कर्ता सर्वविद् योगिश्रीमद्गोपेश्वरजीनु पांडित्य भक्ति पक्ति प्रकाशे छे योगिश्रीगोपेश्वरजी संप्रदायमां श्रीपुरुषोत्तमजी पछी थयला धुरन्धर विद्वान् छे एओश्रीनो प्रादुर्भाव १८३६ ना ज्येष्ठ शुक्ल पचमीने दिवसे थयो हतो, अने ठेक आ शतकना आरभमां पण भूतलने अलकृत करता हता एओश्रीए घणा ग्रन्थो सिद्ध कर्या छे श्रीमदणुभाष्यना श्रीपुरुषोत्तमजीना भाष्यप्रकाश उपर टीकारूपे महान् रश्मि ग्रन्थ प्रकट कर्यो छे आ रश्मिनी एओश्रीना हस्ताक्षरनो अमारी पासे हालमां प्रभुकृपाथी विराजे छे आ महान् ग्रन्थनु पूर लगभग ५०००० श्लोकनु छे, अने ए ग्रन्थ पूर्ण थयो त्यारे श्रीगोपेश्वरजीनु वय ६० वर्षनु थयु हतु आवा परम परिश्रमथी सिद्ध थयला ग्रन्थनु रक्षण अने उद्धार करवानी प्रेरणा श्रीमदाचार्यचरण तद्वंश्योने अने तदनुयायी धनवान् वैष्णवोने करे एज प्रार्थनीय छे आ सिवाय तैत्तिरीय संहिता उपर आपश्रीए नवा धींनामनो विवरण ग्रन्थ योज्यो छे एओश्रीनो भक्तिमार्तण्ड काशीमां रत्नगोपालभट्टे प्रकट कर्यो छे भक्तिरस एक अन्य ग्रन्थ एओश्रीनो दृष्टिगोचर थाय छे श्रीगोपेश्वरजीए परिवृढाष्टकनी टीका श्रीय दुनाथजीनी आज्ञाथी वा पाठान्तर प्रमाणे 'आग्रहथी करी दिधी छे श्रीयदुनाथजी ए एओश्रीना पितृचरण श्रीगोकुलोत्सवजीना पितृव्यचरण थाय आ ग्रन्थमां प्रभुनी आठ वा सात प्रकारनी लीलाओनु निरूपण श्रीमदाचार्यजीए कर्यु छे आ स्तोत्रना प्रथम श्लोकनु सुन्दर प्राचीन चित्र मुबईना मोटा मादरवाला गोस्वामिश्रीगोकुलनाथजी पासे विराजे छे

२ परिवृढाष्टकविवृतिना मुद्रणमा त्रण पुस्तकनु साहाय्य मल्यु छे प्रथम पुस्तक पंडित गट्टूलालजीनी सस्थामांथी हरीच्छाथी प्राप्त थयु हतु आ पुस्तकमा आरभना पाच अने अन्तिम पाच विनाना सर्व पत्र जीर्ण अने उधाइए खाधेला हता पुस्तकनी शुद्धि पण साधारण छे द्वितीय पुस्तक श्रीनाथद्वारस्थ वैष्णव केसरबाईनु छे ए पुस्तक अमने भगवद्धर्मपरायण शास्त्री अचलराम भूधरजीए आप्यु छे आ पुस्तकमा व्याकरण विनानो भाग प्राय शुद्ध छे तृतीय पुस्तक कोटास्थ श्रीमन्मथुरेशजीना पुस्तकसग्रहमानु छे त्यांना मुख्याजी पंडित गोकुलदासजीनी कृपाथी प्राप्त थयलु आ पुस्तक शोधनमां ठीक उपयोगी थई पड्यु आ टीकानु पुस्तक मुद्रणमाटे भगवद्धर्मपरायण शास्त्री कल्याणजीए सहर्ष लखी आप्यु हतु आ सर्वनो उपकार अमारा उपर थयलो छे आ विवरणना व्याकरणना शोधनमां निर्णयसागरना विद्वान् शास्त्रीजी वासुदेव लक्ष्मण पणशीकरनो अमारा उपर बहु ज उपकार थयो छे

३ आ विवृतिनु मुद्रणखर्च श्रीगोकुलेशचरणपरागानुरागी वैष्णव आधारसुखाना मूल रहीश धा छोटालाल दानीए कर्यु छे तेमनो पण उपकार स्वीकारीए छीए

मुम्बई,
पवित्रा एकादशी
१९७५

मूलचन्द्र तेलीवाला.
धैर्यलाल साकलीया.

श्रीकृष्णाय नमः ।

श्रीगोपीजनवल्लभाय नमः ।

श्रीमदाचार्यचरणकमलेभ्यो नमः ।

# प्रेमामृतम् ।

## श्रीमद्विट्ठलेश्वरविरचितविवरणसमेतम् ।

नमस्तारुण्यकैशोरलावण्यनिभृतात्मनोः ।
परस्परं प्रणयिनोर्गोपीमाधवयोर्दृशे ॥ १ ॥
राधागीतानि नामानि मत्प्राणसदनान्यहम् ।
कथञ्चित्कालगत्यर्थं व्याख्यास्येऽत्र यथामति ॥ २ ॥

एतद्रसरसिकजनमनःसन्तोषार्थं राधिकोक्तनामानि प्रकटयितुं भूमिकां रचयन्नेव नामोत्थानप्रकारमाह एकदेति ।

**एकदा कृष्णविरहाद्ध्यायन्ती प्रियसङ्गमम् ।**
**मनोबाष्पनिरासाय जल्पतीदं मुहुर्मुहुः ॥ १ ॥**

यदा मानो बभूव कदाचिद्राधायास्तदनन्तरं भगवतापि मानापनोदनार्थं यत्ने कृतेपि तद्रसस्वाभाव्यान्न मानमत्यजद्भगवांश्च दूत्यादिप्रेषणेन संमाननार्थं निकुञ्जमगमत् स समय एकदेतिपदेनोच्यते । एतेन अधुनापि ताभिः सह भगवान् पूर्ववत् क्रीडतीति सूचितम् । तेनैकदाकृष्णविरहादिति समस्तं पदं ज्ञेयम् । परमानन्दविरहे युक्तमेव दुःखमिति ज्ञापनार्थं कृष्णपदम् । अत एव तद्विरहक्लेशस्तत्सङ्गमादेव गमिष्यतीति निश्चित्य तस्य च सपद्यभावेन तदपगमार्थं प्रियसङ्गमं ध्यातवती । एतदेवाह ध्यायन्तीतिपदेन । भगवत प्रीतेरेव दुःखहेतुत्वम्, प्रियस्यैव दुःखनिवृत्तिरिति ज्ञापनार्थं प्रियपदम् । यद्वा । प्रिय-एव प्रियत्वादन्यस्याप्रियत्वात्तद्ध्यानमेवाभून्नान्यस्येति ज्ञापनार्थं प्रियपदम् । यद्वा । प्रियसङ्गमं प्रियसङ्गमोपायं ध्यायन्तीत्यर्थः । एकदेति पदेन यदा काचित्सख्यपि नासीत् तदेत्यपि सूचितम् । तेन कुत्रचित्कथनस्याप्यभावेन मनस्येव बाष्पं पूर्णमभूत् । तन्निरासायेदमग्रे वक्ष्यमाणं स्वयमेव जल्पति । न तु कस्याप्यग्रे कथयतीत्यर्थः । स्वयमपि जल्पने तद्द्वारा बाष्पस्यापि बहिर्निस्सरणे किञ्चित्स्वास्थ्यमिव भवतीति तथा । जल्पनोक्त्या विकलत्वं सूच्यते । एकवारं जल्पिते तदनन्तरं मूर्च्छायां जातायां ततः कथञ्चित् जागरणे च सति

पुनर्जल्पतीति ज्ञापनार्थं मुहु पदम् । वीप्सया जल्पितमूर्च्छाजागरणपुनर्जल्पितानामावृत्तिर्ज्ञापिता । सङ्गमसाधनत्वेनापि जल्पतीति ज्ञातव्यम् । यथा पञ्चाध्याय्या गोपिकागीतम् ॥१॥

**कृष्णः कृष्णेन्दुरानन्दो गोविन्दो गोकुलोत्सवः ।**
**गोपालो गोपगोपीशो वल्लवेन्द्रो व्रजेश्वरः ॥ २ ॥**

जल्पितमेवाह **कृष्ण** इति । स्वार्थमेव प्रादुर्भूतो भगवान् कृष्णशब्दवाच्य इति । कृष्णपदार्थः कचिद्विवृत, परमानन्दवाचकत्वेन च, 'कृषिर्भूवाचक' इत्यादिना तथा चास्मदर्थमेव प्रकटत्वेन परमानन्दत्वेन च नास्मदु ख द्रक्ष्यतीति भाव । स्वरूपेण तथात्वमुक्त्वा धर्मैरपि तथात्व वदन्ती स्वस्य तारकाभाव भावयन्ती तथैष्टत्वेन स्वेनेष्टितभगवतो नामाह **कृष्णेन्दु**रिति । स्यामिन्दुत्वेनालौकिकत्वात् तारकाभूताना गोपीनामपि तथात्व सूचितम् । तेन निष्कलङ्कत्वशश्वत्पूर्णत्वाह्लादकत्वादीनि सूचितानि । एव धर्मधर्मिभावमुक्त्वा धर्मतामेवाहु **आनन्द** इति । तथा च पूर्वं स्वार्थं प्रकटीभूय पूर्वविरहतापमिन्दुत्वेन शमयित्वानन्दपूर्णा करोतीति नामत्रयेण क्रमेणोक्तमधुनापि तथैव कुर्विति भावेन पूर्वोक्तस्वार्थप्राकट्ये प्रमाणभूत नामाह **गोविन्द** इति । इद नामैव तत्र मानम् । ( नामानन्तरमिन्द्रादिभिरस्मत्पतित्वेनाभिषिक्त ।) अन्यथेन्द्रादिभि स्वपतिर्भगवान् अस्मत्पतित्वेन कथमभिषिक्त । अतोऽस्मान्परित्यज्य न लक्ष्म्यादिष्वपि भजन भगवतो युक्तमिति भाव । किञ्च । पूर्वमिन्दुत्वनिरूपणेनाधुना चेन्द्रत्वनिरूपणेन यथेन्द्रभर्तृकायामेव दिशि चन्द्रोदयनियम । तथा भगवत श्रीगोपीजनवल्लभस्य गोकुल एव प्राकट्यम्, न मथुरादिष्वपीति सूचितम् । अपि च । चन्द्रोदयकार्यं हि मार्गादिप्रकाश । अस्य चालौकिकत्वेनालौकिक एव स प्रकाश । तादृश सोऽतिदुर्लभो ब्रह्मादेरप्यस्मास्वेव भजनमार्गं प्रकटोऽभून्नान्यत्र । यद्यन्यत्रापि स्वय प्रकट स्यात् स्वमार्गमपि तत्र प्रकटयेन्नत्वेवमिति निगर्व । तेन गोपदमुपलक्षकम् । तथा चोक्तम् 'इति गोगोकुलपद गोविन्दमभिषिच्य से'ति । अत पर स्वदु खदर्शनाक्षमताया हेतुभूत नामाह **गोकुलोत्सव** इति । यो यत्रत्योत्सवरूपो यत्र येनोत्सव स तत्रत्य दु ख कथ द्रक्ष्यतीति भाव । ननु सर्वेश्वरस्य कथ गोकुलमात्रेश्वरत्वमत आह **गोपाल** इति । स्वय तादृशोपि पुरुषोत्तमोपि सन् गोपालरूपो य स्वयमेव जात । तेनास्मास्वेव पक्षपातो नान्यत्रेति ज्ञायत इति भाव । तेन गोपान् लाति आदत्ते आत्मीयतया स्वीकरोतीति तथेत्यर्थो ज्ञेय । एव सामान्यतो भगवत स्वामित्वमुक्त्वा विशेषेणाह **गोपगोपीश** इति । गोपाना वयस्याना गोपीना चेश स्वामीत्यर्थ । यद्वा । गोपसम्बन्धिन्यो या गोप्यो गोपभार्यास्तासामीश स्वामीत्यर्थ । तेन न केवल कुमारिकाणामेवेश, किन्तु सर्वासामपीति भाव । स्त्रिय उक्त्वा वृद्धानाह **वल्लवेन्द्र** इति।

---

१ दु खनाशकत्वम् । २ अलौकिकत्वम् ।

वल्लवानां कुलवृद्धगोपानामिन्द्रः कुलदैवतमित्यर्थः । तदुक्तम् । 'वन्द्यमानचरणः पथि वृद्धै'-रिति। अन्यथा तेषां वन्दनं न घटेत। अतःपरं कियदवधि गणना कर्तव्या। पशुतृणपर्यन्तस्य सर्वस्यैव व्रजेश्वर इत्याह व्रजेश्वर इति । ईश्वरो राजवन्नियामक इत्यर्थः । एतेन गोपेत्या-दिनामत्रयेण गोकुले भर्तृत्वं पूज्यत्वं राजत्वं च भगवत एवेति । स्वस्य सर्वात्मना तदेकस्वा-मित्वसर्वाधिकगोकुलोत्कर्षौ सूचितौ । अन्यत्रैतत्त्रितयस्यैकत्राभावेन विभक्ततदीयत्वकत्वात् । तेन व्यतिरेकालङ्कारोऽपि । यथा जगद्भगवन्निर्मितमिति जगदीश्वर इत्युच्यते भगवान्, तथा अयं सर्वोऽपि व्रजोऽनेनैव स्वरूपेण निर्मितो न साधारणनिर्मातृस्वरूपेणेत्यधिपादिपदेषु सत्स्वपीश्वरपदप्रयोगात् सूच्यते । तथा चोक्तं श्रीवाराहेण 'अन्यैव काचित्सा सृष्टिर्विधातु-र्व्यतिरेकिणी'त्यादि ॥ २ ॥

ननु यद्येवं तदा स्वयमेव मिलिष्यति कदाचित्का त्वरेत्याशङ्कायामेव पूर्वानुभूतं किञ्चित् स्मृत्वाह प्रत्यहमिति ।

**प्रत्यहं नूतनतरस्तरुणानन्दविग्रहः ।**
**आनन्दैकसुखस्वामी सन्तोषाक्षयकोशभूः ॥ ३ ॥**

अहःशब्दोऽत्र दिवसवाची । तथा च सम्पूर्णरात्रिरमणेऽपि प्रातर्यदा भगवान् जिग-मिषति, तदा यथा नूतनागतेऽभिलाषा ततोऽधिका सा भवतीति तत्स्मृत्वेदमुक्तम् । यद्यपि भगवतः प्रतिक्षणमपि तथात्वमेव, तथापि पूर्वोक्तसमयविरहभीरुत्वेन सर्वातिशयितस्या-नुभवैकवेद्यस्य भावविशेषस्य जायमानत्वात्तथोक्तम् । तेन प्रतिक्षणं नूतनत्वं प्रत्यहं नूतन-तरत्वमिति भावः । अहःशब्दः क्षणोपलक्षक एवेति केचित् । तन्न । मुख्यार्थोपपत्तौ गौणस्यायुक्तत्वात् । अव्ययप्रयोगेण सम्पूर्णरात्रिरमणेऽपि भगवति विरतिक्लमादयो व्याव-र्तिताः । यत्र सङ्गमेऽप्येवं तत्र का वार्ता विरह इत्याशयः । अतःपरं क्लमाद्यभावे उपपत्तिमाह तरुणेति । तरुणः पूर्ण इत्यर्थः । तेन गणितानन्दानामक्षरादेर्व्यावृत्तिः । तथा च तादृश-स एव विग्रहो यस्य स तथा । पूर्णत्वे वक्तव्ये यत्तारुण्यं निरूपितं तेन भगवतः स्वस्मिन्ने-वानुरागः, प्राकट्यं चास्मदुपयोग्येवेति भावः सूचितः । भगवतः किशोरत्वेन तरुणीरमणसा-मर्थ्याभावशङ्का च परिहृता । एतेनैव भगवतो बाल्येऽपि गोपीभिः सह स्वच्छन्दरमणं सूचि-तम् । अत एव 'यर्ह्यम्बुजाक्षे'ति श्लोके 'त्वयाभिरमिता' इत्यन्यसमक्षमस्थितौ हेतुभूतं स्ववि-शेषणम् । न चाधुनिकमेव तत्तत्र हेतुः । तत्र चरणस्पर्शरमणयोरवधित्वहेतुत्वे तदा सम्भवतो यदि प्रथमदिवससञ्जातचरणस्पर्शसमानकालीनं रमणमपि स्यात् । तेन तयोस्तत्त्वान्यथानु-पपत्त्यैव तथा मन्तव्यमिति निगूढाशयः । तत्सम्बन्ध्यपि तथैवेत्याह आनन्दैकेति । आनन्दोऽन्तःकरणदेहादिसर्वव्यापकः । सुखमव्याप्यवृत्ति । तथा चानन्दरूपं यत्सुखं तत्स्वामी तदीश्वरस्तदुपभोक्ता तद्दाता चेत्यर्थः । एतेन भगवदीयं यत्किञ्चिदपि सुखं सर्वांशव्यापी-

१ गोकुलभिन्ने । २ भर्तृत्वं पूज्यत्वं राजत्वं च तस्य । ३ विभक्तभगवदीयकत्वात् ।

त्युक्त भवति । अत एव भागवते वेदस्तुतौ 'महिमामृतसमुद्रविप्रुषे'त्युक्तम् । स्वामित्वेन भगवत एव तत्तया, नान्यस्येति सूचितम् । भगवत्स्पर्शमात्रेपि स्वस्य स्वादिसत्ताज्ञानाभावे-नैकपदप्रयोगः । तदुक्तम् । 'नीवीं प्रति प्रणिहिते च करे प्रियेण सख्यः शपामि यदि किंचिदपि स्मरामी'ति तेन स्वस्योत्तमनायिकात्व ज्ञापितम् । यद्वा । नामद्वयमिदम् । 'क्लेशोधि-कतरस्तेषा मित्यादिवाक्यैर्ब्रह्मानन्दस्यापि दुःखानुविद्धत्वदर्शनात्तस्मादप्युत्कृष्टमिदमित्येकप-देन सूचितम् । एतादृशमपि सुख स्वामित्वादस्यमेव ददाति, नान्यस्मा इत्युक्तम् । स्वा-मीति नामान्तरेण दानोत्तरसमय स्मृत्वाह सन्तोषेति । सन्तोषस्य येऽक्षयकोशास्तदुत्प-त्तिस्थानम् । मूलनिरूपणेन भगवतैव सन्तोषो नान्येनेति ज्ञापितम् । कोशत्वेनैक-स्यापि भगवदीयस्यानेकविधसन्तोषाधायकत्व सूचितम् । अक्षयत्वेनोत्तरोत्तर सन्तोषेपि पूर्वपूर्वसन्तोषानुवृत्तिः सूचिता । एतेन नित्यलीलात्व सूचितम् ॥ ३ ॥

एव सन्तोषस्मरणे पूर्वानुभूतभगवज्जन्मसामयिक सन्तोष स्मृत्वाह आभीरेति ।

आभीराभिनवानन्दः परमानन्दकन्दलः ।
वृन्दावनकलानाथो व्रजानन्दनवाङ्कुरः ॥ ४ ॥

आभीराणां योऽभिनव· पूर्वाननुभूतजातीय आनन्दः, परमानन्दश्च तत्कन्दलस्तन्मूल-कारणमित्यर्थ । इदमनाकूतम् । नन्दगृहे पुत्रोऽभूदिति तैर्यदैव श्रुत तदैव तेषां तादृश आनन्द समजनि । येन प्रामाणिका वृद्धा अपि महान्त नृत्य कृतवन्त । तया च तादृ-शस्य तद्धेतोरन्यस्य पूर्वमज्ञातत्वेन तत्कालीनस्य तस्याभिनवत्वम् । तदनन्तर पुष्टे भगवत्ये-तादृशोऽस्माक स्वामी सममून्महद्भाग्यमस्माकमिति परमोऽतिशयित आनन्दोऽभूदिति तत्त्वेति । यद्वा । पूर्वोत्तरपदयो कर्मधारयो नामद्वय वा । आभीराणां पूर्वोक्तानन्दरूप एव, स्वस्य च तद्धर्मेव जानत्वात्तत्प्रतीक्षयैव चात्र स्थितत्वात्तस्मिन्प्रकटे जाते स्वस्य परमानन्दो-ऽभूदिति गोपिकानां परमानन्दकन्दल इति जन्मकालीनानन्दवाचकत्वमेव पदद्वयस्यापीत्यु-भयत्र समानम् । स्वय कन्दलत्व निरूपयन्त्यान्येषु पूर्वोक्तानन्ददातृत्त्वेनैव प्रकटो नास्म-द्विषयरूपेणापीति सूचितम् । ततो गृहद्वनाद्वृन्दावनमागत्य सुख दत्तवानिति क्रमेण तत्स्मृ-त्वाह वृन्दावनेति । वृन्दावनस्य कलानाथश्चन्द्र इत्यर्थः । यथा गगनैकदेशे सत्त्वेपि चन्द्रस्याखिलतत्प्रकाशकत्वम् । तथा भगवतोपि वृन्दावन इति सूचितम् । यद्वा । यद-नुरञ्जनार्थं यत्कृत्य तस्य स एव नाथ । तेनायमपि वृन्दावने भगवदनुरञ्जनार्थमेव कल्प-कोकिलादिकूजनमयूरादिनृत्यादय इति भगवानेव तन्नाथो राजवद्द्रष्टेत्यर्थः । यद्वा । वृन्दावनरूपा या कला तस्या नाथ इत्यर्थ । षोडशकलात्मको हि चन्द्रः । तेनास्य चन्द्रस्य पूर्व श्यामत्वेन निरूपणात् वृन्दावनस्यापि तथात्वात् युक्त कलानाथत्वमस्य । षोडशनाम्नैत-न्निरूपणेनैतस्यापि कलासु षोडशत्व सूचितम् । तेन यथा पञ्चदशकलासु सत्स्वपि षोड-

१ जन्मकालीनस्य. २ आनन्दस्य ३ स्वामिनानां ४ भगवदर्थमेव.

श्यभावे पूर्णव्यपदेशो न, तस्मिन्सत्येव तद्व्यपदेशस्तथेहापीति भाव. । एतादृशो गोपी-
नामेव हृदयेऽस्ति, नान्यत्रापीत्याह व्रजेति । व्रजसम्बन्ध्यनङ्गकल्पतरोर्नवाङ्कुर इत्यर्थः ।
पूर्वं कामस्याङ्गराहित्येन भगवति प्रकट एव साङ्गत्वेन तस्य नवाङ्कुरत्वम् । एतेनानङ्ग-
रूपत्वमेव भगवत उक्तम् । अत एव नवपदम् । अन्यथाङ्कुरपदेनैव चरितार्थता स्यात् ।
श्रीरघुनाथदत्तवर एव बीजम् । अनङ्गरूप एव नवाङ्कुरो हृदये समभूत् । ततः प्रत्यह
प्रेमरसेन सिच्यमानस्तत्रैव विततोऽभूदिति हृदयम् । अत्र व्रजपदेन व्रजस्था गोप्य
उच्यन्ते । न हि गोपीव्यतिरिक्ते कस्मिन्नप्येतादृशकामसम्भव. । एतेन यदि भगवान
स्वयमेवैतादृशकामरूपो हृदि प्रादुर्भवत्येतासामिव, तदा तेन कामेन भगवद्रमणम्, न लौकि-
केन । नाप्यय भावोऽन्यस्य सम्भवत्यपि विनैतादृशरूपामिति सूचितम् ॥ ४ ॥

तत्र हि पूर्वमङ्कुरः, ततः पुष्पफलादि, तेन प्रथममनङ्गरूपेणैवाङ्कुरतेत्यङ्कुरतामुक्त्वा
पुष्पतामाह **नयनेति** ।

**नयनानन्दकुसुमो व्रजभाग्यफलोदयः ।**
**प्रतिक्षणातिसुखदो मोहनो मधुरद्युतिः ॥ ५ ॥**

नयनानां य आनन्दः स एव कुसुम यस्य स तथा । एतेन भगवता विना
नान्यस्मान्नयनानन्द इति सूचितम् । तथा च सन्ध्यायां यदा भगवानागच्छति तत्का-
लीन स्मृत्वेदमुक्तमिति ज्ञेयम् । अत एव कुसुमरूपता । फलस्याग्रे भविष्यमाणत्वात् ।
अत. पर फलरूपतामाह व्रजेति । अत्र पञ्चमीबहुव्रीहिर्नोपादेय. । तद्व्यतिरिक्तस्य ताद-
शस्यासम्भवात् । किन्तु । व्रजभाग्यरूपफलरूपश्चोदयो यस्य स तथेति । उदयपदेन
चन्द्रत्व लक्ष्यते । तेन दिनसजातविरहतापहारकत्व सूचितम् । फलत्व मुख्य तापहरण
प्रासङ्गिकमिति ज्ञापनार्थं तथा निरूपितम् । तथा चोक्त 'यदुपतिर्द्विरदराजविहार' इति
श्लोके । यद्वा । व्रजपदेन व्रजस्था गोप्य एवोच्यन्ते । तथा च यदा रात्रौ सङ्केतस्थले भगव-
दुपभोगोपयोगिसर्ववस्तुसम्पन्ना. प्रतीक्षन्त्यो गोप्यो निजनिजस्थले तिष्ठन्ति, तदा भगवान-
कस्मात्प्रकटो भवति तत्रेतीम समय स्मृत्वेदमुक्तम् । अत एव फलत्वमुक्तम् । युक्तञ्च
सन्ध्यायां पुष्पता, रात्रौ फलतेति । अत्रैवायमप्यर्थो ज्ञेय. । यत् व्रजस्य साधारणस्यैव
भाग्य तस्यापि फलरूप उदयो यस्येति । तत्कालीनोदयस्यासाधारणत्वात्तथा तत्त्वञ्च
भगवति व्रजे भाग्यरूपे प्रकटेऽप्येतद्रसानभिज्ञत्वात् व्रजस्य तदापि प्रार्थनीयत्वयोग्यत्वम् ।
अस्य सर्वतोऽपि महत्त्वादिति हृदयम् । आगमनोत्तरसमय स्मृत्वाह **प्रतिक्षणेति** । प्रति-
क्षण केवलसङ्गमसुखादप्यतिशयितसुखदातेत्यर्थ. । तस्मादतिशयितत्व परिरम्भणादिभिः ।
पूर्वपूर्वक्षणादुत्तरोत्तरक्षण एकस्मिन्नेव परिरम्भादावतिशयितसुखानुभावक इति तथा ।
यद्वा । प्रतिक्षणपदेन सङ्गमादिना प्रतिक्षण सजात सुख लक्ष्यते । तथा च पूर्वोक्तावस्था-
यामत्युत्कण्ठितायास्तदा समागतमात्रस्यैव भगवतो दर्शनेन यत्सुख तस्यानुभवैकवेद्यस

सर्वातिशयितत्वेनानुभवात्तादृशसुरद इत्युक्तमित्युदयमामयिकसैनेदं नाम । तदुत्तरस्य समयं स्मृत्वाह **मोहन** इति । तदैव विविधचन्धादिभिर्मोहन इत्यर्थः । सर्वांशेनैव तथेति न विशेषनिर्देशः । तेन यथैव मोहन गोपीनां भवति तथैव करोतीति भावः । एवं मोहनोक्तौ मर्मस्पर्शेन मूर्च्छायां जातायां कथञ्चिज्जागरणे च जातेऽस्यार्त्या भगवदागमनस्यैव हृदिस्थत्वेन तदेव स्मृत्वाह **मधुरे**ति । भगवतस्तदा शृंगारं कृत्वा समागतत्वेन प्रकृत्यैव च तादृश्येव द्युतिरिति तथा । आगमनात्पूर्वमेव द्युत्यैवागमनज्ञानात् द्युतिनिरूपणम् । यद्वा । सर्वशक्तिपूर्णस्योदितकामस्य तेजसोऽसह्यत्वे साम्याभावात् रमणे कथं रसोत्पत्तिरित्यत आह **मधुरे**ति । कोटिसूर्याधिकतेजोवत्त्वेपि न सूर्यवत्कठिनत्वम्, अपि तु सर्वदैव मधुरत्वमित्यर्थः । यद्वा । यदा भगवानागमनमुक्त्वान्यत्र रात्रिं गमयित्वा प्रातरायात्यत्र, तदा मानवत्यां राधायां तादृश मोहन करोति, येन झटिति वशे भवतीति स्मृत्वोक्त **मोहन** इति । तदैव सुरतचिह्नाङ्कितस्य विपर्यस्तवाससः अलसस्य मदनरणजयजनितस्मयघूर्णायमानरजनिजागरसरागनयनस्य सुस्मितमुखाम्भोजस्य द्युतिरतिमधुरेति मधुरद्युतित्वम् । यद्वा । रतिसमय एव जघनादिगतिलोलवपुषो द्युतिर्मधुरा मनोहरेत्यर्थः ॥ ५ ॥

अतः परं क्रमेणाधरसुधापानं स्मृत्वाह **सुधे**ति ।

**सुधानिर्यासनिचयः सुन्दरः शीतलाकृतिः ।**
**नवयौवनसम्भिन्नश्यामामृतरसार्णवः ॥ ६ ॥**

पूर्वोक्तानङ्गकल्पतरोः सुधारूपो यो निर्यासस्तन्निचयस्वरूप इत्यर्थः । यद्वा । सुधाया एव निर्यासः सार इति यावत् । तन्निचयभूत इत्यर्थः । यथा रसद्रव्यस्यैव दुग्धादेर्मथनेन तत्सारभूतो नवनीतचयस्तथेति हृदयम् । अधरामृते तस्मादधिकत्व स्पष्टम् । अत एव मुरल्या वेणुरिति नाम । वश्च इश्च वयौ तावणू यस्मादिति वेणुपदार्थः । तत्त्व चास्याधरसम्बन्धादेवेत्यधरस्यैवामृतकामरसाणूकरणसामर्थ्यमिति 'बर्हापीडे'ति श्लोके निरूपितम् । निर्यासत्वनिरूपणेनात्र सम्बद्धोत्रैव लग्नो भवति, नान्यत्रेति सूचितम् । तदुक्तम् । 'इतररागविस्मारण नृणा'मिति । एव मुख्यविशेषमुक्त्वा सामान्यतोनुभावकत्वमाह **सुन्दर** इति । सर्वांशेनैव तथेति न विशेषनिर्देशः । अत एव सर्वाङ्गे शास्त्रोक्ताश्चेष्टास्ताभिः क्रियन्ते । तेन सर्वासक्तिविषयत्वमप्यस्य ध्वनितम् । तथात्वेपि पुरुषसौन्दर्यं स्त्रीणामेवोपयोगीति विशेषतस्तासामेवासक्तिविषय इति तात्पर्यम् । एव सौन्दर्योक्तौ तस्य प्रथमासक्तिहेतुत्वेन तत्स्मृतिरभूत् । तत्र च पूर्वं सुन्दरत्वेनासक्तौ जातायां पश्चाद्विरहेणात्यातुरतायां साक्षादप्राप्तौ चित्रेप्याकृतिदर्शनेन तादृशबाधकतापो व्यगमदित्याह **शीतलाकृति**रिति । यद्वा । अतिदुःखेनेषत्कुद्धाह **शीतले**ति । आकृतिः पर शीतला, न

१ भगवत । २ सर्वासक्तिविषयत्वेपि ।

स्वयमित्यर्थः । प्रथमतः शीतलाकृतित्वेनान्तरप्येवमेव भविष्यतीति ज्ञात्वा प्रवृत्तायां स्त्रियां पश्चाद्यथाकथञ्चित्तां मारयत्येवैतच्च दृष्टं पूतनादाविति भावः । एतदेव 'भ्रमति भवानचला-कवलाये'ति गीतेष्युक्तम् । यद्वा, शीतलाकृतिः साधारणलोकप्रतीत्या कामादिरसानभिज्ञ इत्यर्थः । एकान्ते तु परमचतुर इति भावः । एतेन स्वस्य भगवतोपि निःशङ्का प्रवृत्तिर्द-र्शिता । एवमाकृतेरपीष्टदातृत्वं निरूप्य वयसोपि तथात्वमाह नवेति । सम्भिन्नः संवलित इत्यर्थः । तेन वयःसन्धिरुक्ता । नवत्वेनानङ्कुरितकूर्चकत्वाद्रतिसमयेऽतिशयितसुखानुभाव-कत्वावजनकत्वमुक्तम् । तदुक्तम् । 'अनङ्कुरितकूर्चकः शृतसितोपलाढ्यं पय' इत्यादिना । तेन संवलितभावादिभिरप्यतिमोहन इति भावः । अधुना समुदितस्वरूपमात्रनिविष्टा तत्रापि वर्णमात्रस्यापि रसरूपत्वमित्याह श्यामामृतरसार्णवेति । यथा दुग्धादेः सितस्तथा श्यामरूपो योऽमृतस्य रसो मन्थनेनैव निर्गतस्तस्यापि सारभूत इति यावत् । तस्यैवार्णव इत्यर्थः । श्यामत्वोक्त्या प्रसिद्धसितसुधारसतोऽत्यलौकिकत्वं सूचितम् । तेन तत्स्थितन-यनकुण्डलवदनरदकरचरणादीनामप्यलौकिकमीनमकरमणिकमलादित्वं रसस्य च निःसीम-त्वमेतद्रसमग्नस्य पुनरनुत्थानं च ध्वनितम् । यद्वा । श्यामाः षोडशवार्षिक्यो गोप्यस्तत्स-म्बन्ध्यमृतरसोऽधरामृतरस इति यावत् । सोर्णवो यस्मिन्नित्यर्थः । एतेनातिसरसासंख्य-गोपीभोक्तृत्वमुक्तम् ॥ ६ ॥

एवं वर्णं निरूप्य विपरीते भगवति स्वप्रतिबिम्बं जातम् । तत्र चाकचक्यं स्मृत्वाह इन्द्रेति ।

**इन्द्रनीलमणिस्वच्छो दलिताञ्जनचिक्कणः ।**
**इन्दीवरसुखस्पर्शो नीरदस्निग्धसुंदरः ॥ ७ ॥**

इन्द्रनीलमणिवत् स्वच्छो निर्मल इत्यर्थः । तेन यथा मणिर्बहिरन्तरप्येकरूपस्तथा भगवानप्येकरस इति सूचितम् । गोपीजनवेष्टितस्य कनकजटितमहामणिशोभावत्त्वं च । निकटस्थवस्तुप्रतिबिम्बवतो मणेः सादृश्यनिरूपणेन स्वप्रतिबिम्बितत्वं सूचयन्त्यान्तर्भगवतो गोप्यात्मत्वमपि सूचितम् । तदुक्तं भगवता 'ये त्यक्तलोकधर्माश्च मदर्थे तान् बिभर्म्यह-मिति, 'मयि ते तेषु चाप्यह'मित्यादि च । मणिदृष्टान्तेन यथा श्यामत्वेन सुन्दरत्वेनैवान्य-लोकप्रीतिविषयो न तद्गुणज्ञपरीक्षकजनस्यैव । तथा भगवानपि सुन्दरादित्वेनैव तथा सर्वेषां न, किन्तु तत्स्थितरसिकशिरोमणित्वादिविदुषां गोपीनामेवेति सूचितम् । एवं रूपनैर्मल्ये निरूप्य क्रमेण चिक्कणतामाह दलितेति । दलितं घर्षितमित्यर्थः । तेन यथा स्नेहद्रव्येणैव कज्जलो-त्पत्तिः, तथा भगवतोप्यस्मत्स्नेहेनैव प्राकट्यमिति सूचितम् । यद्यपि पुनः स्नेहादिदानेन घर्षितमेव कज्जलमञ्जनशब्दार्थस्तेन न पूर्वपदापेक्षात्र । तथापि तस्मादप्यतिचिक्कण इति ज्ञाप-नार्थं दलितपदम् । केवलकज्जलवाचकमेव वात्राञ्जनपदम् । अञ्जनदृष्टान्तेन यथा स्त्रीणामेव नयनभूषणार्थं तज्जन्म, तथा गोपीजनवल्लभस्यापि प्राकट्यमत्र गोपिकार्थमेवैतन्नयन एव स्थिर-

त्वमेतद्रहिताया दुर्भगात्वं चेति सूचितम् । यद्वा । अञ्जनपदं गोपीनयनस्याञ्जनवाचकम् । तया च दलितं द्विधाकृतं नयनोपरितनाधस्तनरेखाभ्यामेतादृशं तदपि चिक्कणं येन स तथा । यदा भगवान् मिलति, तदैव तत्तया । नोचेद्विरहतापेन सहजचिक्कणमपि तन्द्रुक्षमिव भवतीनि तयोक्तम् । अत्रैव सादृश्यार्थोऽपि ज्ञेयः । तेन यथा सहजचिक्कणमपि तद्भगवत्तेन, तथा भगवानपि स्वरूपेणैव तथा, न तु स्नेहद्रव्योपरक्त्येनि सूचितम् । यद्वा । नयनक्षमेव तदग्रेण दलितं द्विधाकृतं तस्मात् स्वस्मिन्नानीतमिति यावत् । तादृशेन तेन चिक्कणो हृदयः स्निग्ध इत्यर्थः । तेन प्रातरन्यगृहात्तया समागतेऽपि न स्नेहाभावः, किन्तु स्निग्धत्वमेवेत्यपि ध्वनितम् । अथवा । कदाचित्प्रियं स्नापयन्ती प्रियाङ्गे जलबिन्दुमात्रमपि स्थिरं नापश्यत् । तत्स्मृत्वेदमुक्तवतीति । अत एवाग्रेऽङ्गप्रोञ्छनं कुर्वाणा सर्वाङ्गीणस्पर्शसुखमन्वभूदिति तत्स्मृत्याह इन्दीवरेति । इन्दीवरादपि सुखरूपः स्पर्शो यस्य स तथा । तेन सौगन्ध्यं शैत्यं सुखदत्वं चालौकिकत्वं च ध्वनितम् । यद्वा । इन्दीवरस्यापि सुखस्पर्शो येनेति । विरहे तस्यापि कठोरत्वोष्णत्वेनैव भानाद्भगवति मिलित एव सुकुमारत्वशीतलत्वेन भानात्तथात्वम् । यद्वा । इन्दीवरपदेन गोपीनयनानि लक्ष्यन्ते । तया च तेषां सुखरूपः स्पर्शः सम्बन्धो यस्य स तथेत्यर्थः सम्पद्यते । एतच्च तदैव प्रोञ्छनानन्तरं सर्वासां सर्वाङ्गदर्शनेन सुखातिशयोऽभवदिति तत्स्मृत्वोक्तम् । तदनन्तरं कटिप्रदेशे सूक्ष्ममेव पीताम्बरं परिधाय स्थितं केशप्रसाधनं कारयन्तं स्मृत्वाह नीरदेति । नीरदपदेनात्र वर्षन्मेघ उच्यते । तेन यथा सोऽन्तःस्नेहवांस्तप्तानां जीवनं नीरं ददाति । तथा भगवानपि विरहतप्तानां जीवनरूपामृतदृष्टिं वर्षतीति तद्वदन्तःस्निग्धः तद्वत्सुन्दरो बाह्यतः पीताम्बरेण स विद्युद्घनशोभावानित्यर्थः । एतेन यथा दृष्टेः पूर्वमपि केवलं मेघदर्शनादपि तापनिवृत्तिस्तथा भगवत्कृपादृष्टेः पूर्वमपि भगवदागमनादेव सर्वतापनिवृत्तिरिति सूचितम् । यद्वा । नीरदे स्निग्धाः स्नेहवन्तो मयूरादयस्तैः कृत्वा सुन्दरस्तत्पिच्छधारणनृत्यकूजनाद्यनुकरणेन भगवति समागते मेघबुद्ध्या नृत्यन्तः कूजन्तश्चावृत्य तिष्ठन्तीति वा तथा । यद्वा । नीरदवत् स्निग्धो गिरा तद्वत्सुन्दरो वपुषेत्यभिप्रायः ॥ ७ ॥

तदनन्तरं सर्वाङ्गमिस्तिलकं निधाय चिबुकमारभ्य चरणतलपर्यन्तं चतुःसमेन लेपनं कृतमिति तत्स्मृत्वाह कर्पूरेति ।

**कर्पूरागरुकस्तूरीकुङ्कुमाक्ताङ्गधूसरः ।**
**सुकुञ्चितकचन्यस्तोल्लसच्चारुशिखण्डकः ॥ ८ ॥**

एभिरक्तं यदङ्गं तेन कृत्वा धूसरत्वेन प्रतीतिविषय इत्यर्थः । पीतस्याङ्गरागस्येन्द्रनीलवपुषश्च दीधितयो यदा मिलिता भवन्ति, तदैकस्यापि रूपं पृथगाविर्भवतीति तथा प्रतीतिः, न तु स्वयं तथेति ज्ञेयम् । अक्तपदेनाङ्गरागस्य स्निग्धत्वं सूचितम् । एवमप्यतिसुन्दर इति ज्ञापनार्थं एतन्निरूपणम् । यद्वा । चतुःसमेनाक्तं यदेकमप्यङ्गं तेनैव पूर्वोक्त-

रीत्या धूसरेण सर्वाङ्गप्रतिबिम्बितेन कृत्वा सर्वांशेनैव तथा प्रतीतिविषय इत्यर्थ । अत एवाङ्ग-पदम् । वस्तुतस्तु चतु समे वक्तव्ये पृथक्पृथक् निरूपणेन कामि कर्पूरम्, काभिरगरुधर्षित, काभि कस्तूरिका, काभि कुङ्कुममानीतमिति ज्ञायते । तथा च येव समागच्छति सैव स्वीय वस्तु सर्वाङ्गे, काचित् काचिदेकस्मिन्नेवाङ्गे समर्पयतीति तथा । ते(न) नैकरूप इत्यर्थ । ( एतेन 'इन्द्रनीलमणी त्यादिनामपञ्चकेनार्थकाममोक्षधर्मभक्तिरूपपञ्चपुरुषार्थरूपत्व भगवत उक्तम् । अस्यैवात्र मुख्यत्व, नान्येषामिति ज्ञापनाय व्युत्क्रमेण तेषा निरूपणम् । ) तदनन्तरमानरसशिस्र शृगार कृत इति स्मृत्वा तदेव निरूपयति सुकुञ्चितेत्यादिना । यद्वा । एव समुदिते स्वरूपे निरूपितेपि अतिप्रचुरत्वेन तापस्यानपगमे प्रत्यङ्ग वर्णन मकरोत् । तत्र यद्यपि भगवत पुरुषत्वेन चरणमारभ्य वर्णनमुचितम् । तथापि तापहरणार्थमेतन्निरूपणेन पूर्वं दिनविरहताप दूरीकर्तु सन्ध्याया यदा भगवानागच्छति तदा दूरत प्रथममत्युच्चमुकुटस्यैव दर्शनम्, तत आननादेर्भवतीत्यधुनापि तथैवागत्य ताप हरत्वित्यभिप्रायेण मुकुटमारभ्य तापहारकमेव स्वरूप वर्णयति सुकुञ्चितेति । सुष्ठु कुञ्चिता ये कचास्तैर्ग्रस्त उच्चैर्लसश्चारुर्मनोहर शिखण्डो यस्य स तथा । केशाना कुञ्चितत्वेपि यस्य केशस्य यत्र स्थितस्य सुन्दरत्व तत्रैव तस्य स्थितिरित्युपसर्गेण सूचितम् । शिखण्डस्य ग्रस्तत्व तद्वलितमध्यपतितमूलत्वम् । मूले ग्रस्तोग्रतोपि श्वासमियेवाग्रत उच्चैर्निर्गतो लसन् जात शोभित इत्यर्थ । शोभितत्वोक्त्या शोभासाधनकुसुमगुञ्जामणिपल्लवादय सूचिता । अत एव चारु सर्वेषा मनोहर । एतादृश शिखण्डको मयूरपिच्छकृतमुकुट यस्येति वराङ्गवर्णनम् । रूपप्राधान्य यत पिच्छस्य सर्वोच्चैर्धारणेनात्र भगवतोपि रूपस्यैव प्राधान्य पुरुषार्थदानादौ, न तु माहात्म्यज्ञानमपीति ज्ञापितम् । अत एव रूपग्राहकचक्षुष्मतामिदमेव फलमिति 'अक्षण्वता'मिति श्लोक एताभिरेव निरूपितम् । यद्वा । सुकुञ्चितपदेन केशवर्णनम् । कचग्रस्तपदेन कुसुमानाम्, उल्लसत्पदेन चाकचक्यवद्गुञ्जामणीनाम्, तथा चैभिश्चारु शिखण्डो यस्येत्यर्थ । तेषा मुकुटावयवत्वेन तच्छोभाजनकत्वमेव मुख्यम्, न स्वातन्त्र्येण मुख्यतेति न पृथङ्नामनिर्देश । शोभाजनकत्व च कुञ्चितत्वादिधर्मैरेवेति तेषामुद्देश । एतेनैतेषा क्रमोपि ज्ञेय । प्रथम कच, तदुपरि तथाभूतानि कुसुमानि, तदुपरि गुञ्जा, तदुपरि तच्चन्द्रिका इति ॥ ८ ॥

एव मुकुट निरूप्यालकपङ्क्तिस्थकर्णोपरिभागभूषणे वर्णयति मत्तेति ।

**मत्तालिविभ्रमत्पारिजातपुष्पावतंसकः ।**

**आननेन्दुजितानन्तपूर्णशारदचन्द्रमा'** ॥ ९ ॥

मत्ता ये अलय तैर्विभ्रमद्विलास कुर्वदितस्तत पतत्प(त)त्र यत्पारिजातपुष्प तस्यावतस कर्णाभरण यस्य स तथा । एतद्रसेनैव मत्ता इति ज्ञेयम् । तथा च तेनैव मत्ता अपि तत्त्यक्तुमशक्तास्तदामोदलम्पटा मत्तत्वेन चेतस्तत पतन्ति । तेनाधारस्यापि तथात्वम् ।

१ ज्ञानस्येति पाठान्तरम् ।
२ प्रेमा०

अतलसस्य तु तथात्वे महती शोभैव जातेति ज्ञापयितुं विभ्रमत्वदम् । न हि विलास धुर्न-
दशोभित भवतीति भाव । मत्तत्वयो विभ्रमन्तो यन्ति वा । मत्तत्वेन सशब्दत्व स्याज्ञान
च ज्ञापितम् । एतेन यथापऽ्कृष्णगानपि सर्वोत्कृष्टपारिजातपुष्पस्य केवलदेवभोग्यस्य
तत्रापि स्वकर्णाभरणरूपस्य रस पाययसि, मत्तानपि तान् निवारयसि, दोष च न गणयसि,
किन्तु तत्कृतशोभामेव बिभर्षि । तथास्मानपि भवत्प्रेमास्वादजनितमदानधुना तदप्राप्या-
ऽनथाभूतान् भवदेकशरणान् स्वयं रस कुतो न पाययसीति हृदयं ज्ञापितम् । भगवदाग
मनसमये प्रथमत समुदितानतशोभा एव दृग्गोचरेति समुद्रितमानन वर्णयति आनने-
न्द्विति । आननमेव इन्दुस्तेन जिता अथ कक्षीकृता अनन्ता पूर्णा शारदचन्द्रमसो येन इति
योजना । अयमर्थ । असख्यपूर्णशारदचन्द्रमसा सौन्दर्यमेकेत्र पृथक्कृत्यैकस्मिश्चन्द्रे
एव यदि क्रियते, तदा सोऽपि चन्द्रो भगवदाननसौन्दर्यसमानसौन्दर्योऽपि न भवतीति ।
शरदि गगननैर्मल्यतारादिकृता शोभाऽधिका भवतीति शारदेत्युक्तम् । इन्दुपदेन तापहारि-
त्वकुमुदविकासकत्वरतिसुखद्रमणगमनप्रकाशकत्वरसोद्दीपकत्वादीनि सूचितानि । तथाच दिवा
विरहतापहरत्वेन नयनानां कुमुदत्वेन रात्रौ रमणेनान्धकारेऽपि तदर्थं गमनेन च सखीतद्
हितकारीति भाव सूचित । एतेनैव परित स्थितवचोद्ग्रथितकुसुमाना नितान्तनक्षत्रत्व
द्योतितम् । किञ्च । पूर्वं श्यामामृतरसार्णवत्वेन विग्रहस्य निरूपणेन तदुपरिस्थिताननस्य
चेन्दुत्वनिरूपणेन उद्यच्चन्द्रशोभावत्त्व सूचितम् । तेन गोपीकुङ्कुमादिना कुण्डलमण्यादि-
प्रभया वा सर्वदा सरागत्व सूचितम् । श्यामासम्बन्धीति व्याख्याने गोपीजनामृतरसस्यैव
अर्णवत्वनिरूपणेन भगवन्मुखचन्द्रदर्शनादेवास्य वृद्धिरिति सूचितम् । विभावकत्वमीप
त्पाण्डुरत्वमप्यनेन सूचितम् । तदुक्तम् । 'बदरपाण्डुरवदन' इति । यदा गोप्यो भगवत्स-
मुखमुपविश्य भगवच्छिरसि ललाटादौ वा मुकुटादिनिर्माणश्रमजलादिमार्जनादिक हस्त
द्वयेन कुर्वन्ति, बन्धविशेषे वा मुखस्य परितो हस्तद्वयमेकं वा भवति, तदात्यलौकिकपरिवे-
षशोभावत्व सूचितम् । स्थलविशेषचुम्बने कोकरूपकुचद्वयवियोजकत्व च । जितत्वनिरूप
णेन यथा पराजितस्य सर्वस्वग्रहणेनातितुच्छत्व भवति, तथा भगवदाननस्याग्रेऽस्यापि
चन्द्रस्य तुच्छत्व भवतीति ज्ञापितम्, सूर्यस्याग्रे दीपस्येव । एतेनैतच्चन्द्रविरुद्धधर्मवत्त्व
सूच्यते । तेन भगवदाननावलोकन विना विरहतापेनातिशुष्कतया परस्पर वियुक्तयो
कोकरूपकुचयोस्तादृशयोरेवाननहृदयकमलयो दर्शनमात्रेणातिप्रमोदसश्लेषकारित्वविकासक
त्वाभिसारानुकूलत्वादीनि ध्वनितानि । अत एव जित्वा लाञ्छितान् कृत्वा स्वमृजदित्यपि
ध्वनि । यद्वा । आननेन्दुना जिता वशीकृता या गोप्यस्तासु विरहतापनिराकरणेन तथेति ।
तथा च यथा तरणिजनिततापमेक एवेन्दुर्दूरीकरोति, तथा भगवान् स्वविरहतप्ताना
तापदूरीकरणार्थं दर्शनाश्लेषादिनाऽमरयच्च द्रवत् शीतल इति भाव ॥ ९ ॥

---

१ प्रापयतीति पाठ ।

एवं समुदितमानन वर्णयित्वा प्रत्यवयववर्णनं करोति सार्धपञ्चभिः **श्रीमदिति** ।

**श्रीमल्ललाटपाटीरतिलकालकरञ्जितः ।**
**लीलोन्नतभ्रूविलासो मदालसविलोचनः ॥ १० ॥**

श्रीमति ललाटे पाटीरस्य चन्दनस्य यत्तिलकं तेनालकैश्च कृत्वा रञ्जित इत्यर्थः ।
ललाटे तिलकादिकृतैर न शोभा, किन्तु म. स्वतोप्यतिसुन्दर इति ज्ञापनार्थं श्रीमत्पदम् ।
तिलक भ्रूमध्यकेशपर्यन्तम् । तत्केनलपाटीरप्रयोगात् श्वेत पीत वा । केवलप्रयोगः प्राधान्येन ।
अलकतिलकयो सामानाधिकरण्यनिरूपणेन यथा अलका आकर्णं स्थितास्तथा भ्रूमध्यकेश-
पर्यन्त समानरेखाद्वयात्मक तिलक विधाय पुनस्तिर्यक् त्रिचित्ररेखाभिराकर्णं कृतमिति
ज्ञायते । मुखाम्बुजस्य परितः पङ्क्त्याकारेण स्थिता. कुञ्चिताः कचा अलकाः । तथा चैताभ्यां
रञ्जितो, यथा मञ्जिष्ठेन वस्त्र तथेत्यर्थ । प्रोञ्छनमार्जनादिनापि तयोरतथाभावो न भवतीति
भावः । यद्वा । तथाभूताभ्यां ताभ्या कृत्वा रञ्जित., सर्वेषां रागविषयीभूत इत्यर्थः ।
यद्वा । तथाभूततिलकश्चासावलकरञ्जितश्चेति कर्मधारयः । अत्रापि रागविषयत्व-
मेवार्थः । तथा च रागस्य जीवधर्मत्वेन तत्सारूप्यवत्त्वमधुपत्व ध्वन्यते अलकानाम् ।
तेन भगवन्मुखस्याब्जत्व ध्वन्यते । तत्र तिलकस्य रेखाणां च पीतत्वेन केसरपरा-
गत्वे ज्ञेये । रागविषयत्वनिरूपणेन सरसत्व ज्ञापितम् । तेषां सरस एव तस्मिन्नास-
क्तेरतथाभूते विरक्तेः । शश्वत्सुस्थिराणां तथात्वनिरूपणेन च सर्वदा सरसत्व ज्ञापि-
तम् । तेन प्रसिद्धकमलविलक्षणत्व ज्ञायते । एतेन यथा सरस एव देशे कमल
तिष्ठति, सर्वदा प्रादुर्भवति च, तथा प्रेमरससरसहृदयेष्वेतस्यापि प्राकट्य स्थैर्यं च, नान्य-
त्रेति । सर्वदा कोकरूपगोपीकुचसाहचर्यसौगन्ध्यकोमलत्वादीनि च सूचितानि । क्रमप्राप्तां
भ्रुवमाह लीलेति । लीलायां वेणुवादनलीलायामुन्नता या भ्रूस्तस्यां मन्द्रमध्यतारस्वरानुकू-
लनरूपो विलासो यस्य स तथा । अथवा । तदेव सङ्केतस्थलादिसूचन विलासः । यद्वा ।
मिथ्याकोप एव लीला । तेनोन्नतायां तस्यां स यस्य तथेति । तदा विलासश्चान्त.कोपा-
भावेन किञ्चिद्धास्य तदभिनयेन च किञ्चिद्वक्रत्वम् । लीलयैवोन्नता भ्रूरित्यप्यर्थो ज्ञेयः ।
न तु कदाचिदपि कोपेनापि तथेति भाव. । यद्वा । लीलायां क्रीडायामतिशयितमदनमदे-
नोन्नता या भ्रूस्तस्यां बन्धादिसूचनलक्षणो विलासो यस्येत्यर्थः । यद्वा । लीलया रात्रिजनितसु-
रतक्रीडया कृत्वा प्रातरुन्नता या भ्रूस्तस्यां विलास आलस्यादिभावो यस्येति । रजनिजा-
गरमुकुलायमाननयनयोरतिबलेन विकासने प्रयत्नादोन्नतत्वम् । यद्वा । लीलासु गोपैः सह
क्रियमाणासु मध्ये उन्नत उत्कृष्टो भ्रूविलास. सङ्केतस्थलादिसूचन यस्य स तथेत्यर्थः ।
अत्यार्त्या स्थातुमशक्तौ गोपसहितस्यापि प्रियस्य समीपमागतायां राधायां भ्रुवैव सङ्केतादि-
सूचनेन समाधान कृतवानिति तत्स्मृत्वोक्तमधुनापि करोत्विति हृदयेन स्वस्येतदेव हित-
मिति सर्वोत्कृष्टत्वनिरूपणमस्मिन् । क्रमप्राप्ते नेत्रे वर्णयति मदेति । असह्यगोपीमुखा

म्भोजमधुपानजातो यो मदस्तद्युक्ते तेन वा अलसे विलोचने यस्येत्यर्थः । तदेकपरतातिरिक्तकार्याक्षमत्वमप्यलसपदार्थो ज्ञेयः । तेन भगवन्नयनयोः सततं गोपीपरत्व गोपीनां चातिसरसत्व सूच्यते । यत्र नयनाभ्यामपि दूरतोपि पाने मदजनकत्व, तत्र साक्षादधरादिसुधापाने किं वक्तव्यमिति निगूढाशयः । अत एव 'बहु मनुते ननु ते तनुसङ्गतपवनचलितमपि रेणु' 'त्वमसि मम जीवन'मित्यादीनि जयदेवोक्तिष्वपि वचनानि विलसन्ति । न च कश्चिचातुर्यमेव तत्रेति वाच्यम् । तस्य वस्तुन एव तथात्वात् । किंच, महतामेव कृतसुकृतानां भगवदनुगृहीतानामेवात्र विश्वासेन बहिर्मुखस्याविश्वासेपि न नः कापि हानि । खेदमात्र परमिति सक्षेप । यद्वा । मदो गोपीनां मानस्तस्मिन्नलसे अक्षमे विलोचने यस्येति । पूर्वमेव पर मानादिः । भगवद्दृष्टिपातमात्रेणैव विगतमाना सर्वा भवन्तीति तथा । यद्वा मदो गर्वस्तेन चालसे विलोचने यस्येति । मध्यमपदलोपी । गर्वो लोचननिष्ठ एव । स च कमलखञ्जनमदनजयेनेति भाव । यद्वा । मदालसा गोप्यस्ता विलोचनयोर्विलोचने वा यस्येत्यर्थ । यदा स्वय मिथ्याकृतावधिना भगवता लीलासङ्केतस्थलस्थेन दूतिकायां प्रेषितायामपि गोप्यो न मन्यन्ते, तदा तद्विरहेण सर्वत्र गोपीदर्शनेन तथा । तदुक्त केनचित् 'पर्यङ्के से'त्यादिना 'सा सा सा सा जगति सकले कोयमद्वैतवाद' इत्यन्तेन पद्येन । एतेन तदा तादृशो भवानधुनास्मद्वियोग भवद्विरहजसन्ताप चास्माक कथ सहत इति हृदय सूचितम् ॥ १० ॥

अत्र क्रमप्राप्तयोरपि नयनयो स्मृतावनयो सौन्दर्यातिशयस्य प्रातर्दृष्टत्वेन तत्सामयिक एव ते वर्णयति । तदा च प्रथममालस्येन तयोर्मुकुलितत्वेन पश्चादीषत् प्रवृत्तदृष्टित्वेन पूर्वं तादृशे ते वर्णयित्वा दृष्टिं वर्णयति आकर्णेति ।

**आकर्णारक्तसौन्दर्यलहरीदृष्टिमन्थरः ।**
**घूर्णायमाननयनः साचीक्षणविचक्षणः ॥ ११ ॥**

आकर्णारक्तेत्यत्र कर्मधारयो नयनवाचकत्व च ज्ञेयम् । तथा च कर्णावधिके ईषद्रक्ते ये लोचने तत्सौन्दर्यलहरीरूपैव या दृष्टि सा मन्थरा अल्पगतिमती यस्येत्यर्थ । अत्र सौन्दर्यस्यैव हृदि स्थितत्वेन तत्र चोक्तधर्मद्वयस्यैव प्राधान्यमिति तयोरेव ग्रहण, न नयनयो[1] । दृष्ट्या लहरीत्वनिरूपणेन सौन्दर्यस्य समुद्रत्व ध्वनितम् । तेन सौन्दर्यस्य निःसीमत्व, दृष्ट्याश्च सरसत्व ज्ञापितम् । यत्र दृष्टि पतति त देश शीतल यथास्थित सरस च करोतीति सूचितम् । तरङ्गशब्द पुल्लिङ्ग विहाय स्त्रीलिङ्गलहरीपदप्रयोगेणान्तरङ्गकार्यकरण स्वसजातीयत्वेन स्त्रीष्वेवैतस्या दृष्टे ( यथा पीतन ), न तयान्येष्वपीति ज्ञापितम् । एतेन दूतीत्व दृष्टे गोपिकासमानयने सूचितम् । अत एव गोप्यो भगवद्दृष्टिपातमात्रेण तद्वशगा सत्यो भजन्ते व्रजनाथम् । न दूतिकान्तरप्रेषणमपेक्षन्त इति निगर्व । तेन भगवदङ्गैकदेशसौन्द-

---

१ प्रवृत्तेरिति पाठ ।

यँकदेशेनैव यत्र सर्वं विहाय गोप्यो भजन्ते, तत्र सर्वाङ्गसौन्दर्यं दृष्ट्वा भजने किं चित्र-
मिति भावः । सौन्दर्यलहरीत्वनिरूपणेन यथा दुग्धाम्भोधितरङ्गा दुग्धरूपा एव, तथा
दृष्टिरपि सौन्दर्यरूपैवेति सूचितम् । पूर्वभावयोग्यमन्थरपदस्यान्ते निरूपणेन रात्रिजागर-
णादिना भगवान् परं तूर्ष्णीं तदा तिष्ठति । नयने तु तादृग्गत्याप्यनेकं कार्यं कुरुत इति
सूचितम् । लहरीपदेन प्रान्तदृष्टिः सूचिता । लहरीणामब्धिप्रान्तयोरेव भावात् । यद्वा ।
पूर्वोक्तलहरीरूपा या दृष्टिर्गोपीनां सा मन्थरा येन स तथा । नयनवर्णनप्रकरणत्वाद्यदा
भगवन्नयनदर्शनानन्तरमेवातिसौन्दर्यवशेन तत्रैव गोपीदृष्टिः स्थगितासीत् तत्स्मृत्वेदमुक्तमिति
ज्ञेयम् । गोपीनयनानि भगवन्नयनभावापन्नानीत्यपि सूचनार्थं भगवन्नयनवर्णनप्रकरणे
तासां नयनवर्णनम् । स्वभावचपला अप्यशक्यस्थिरत्वा अपि तदृदृष्ट्यो यत्र मन्थरा
भवन्ति तत्रान्येषां का वार्तेति । भगवत्यलौकिकधर्मवत्त्वं लहरीपदेन सूचितम् । भगव-
दृष्टिवर्णनपक्षेपि तादृशी दृष्टिर्मन्थरा यस्येत्यत्र तासां भगवानिव मन्थरत्वहेतवो गोप्य एव ।
तथाचारादुक्तालौकिकधर्मवत्त्वमेतास्वपि सूचितमिति संक्षेपः । यद्वा आकर्णा भगवतः
कर्णपर्यन्तं वर्तमाना या गोप्यस्तासु रक्ता चासौ तादृशी दृष्टिश्चेति कर्मधारयः । कर्णपर्यन्तं
वर्तमानत्वं विपरीते । तथा च तत्कालीनसौन्दर्यलहरीरूपा रतिरभसवशेनातिचञ्चला या
दृष्टिः सा भावाधिगमसमये मन्थरा यस्येत्यर्थः । एवं भोगावसानसामयिके नयने वर्ण-
यित्वा तदुत्तरसामयिके वर्णयति **घूर्णायमानेति** । अतिशयेन गोपीसहस्रसम्भोगरसासव-
पानेनैव तथात्वम् । तत्त्वं च पक्ष्ममध्य एवेतस्ततः सालस्यगतिविशेषवत्त्वमेव । यद्वा । घूर्णा
घूर्ण(वर्त)माना मानवत्यो गोप्य इति यावत् । ता अयमाना गतिमत्यो येन स तथा । मान-
समयेपि यदैव भगवन्नयने पश्यन्ति, तदैव स्थातु न शक्नुवन्ति, तेन मानाबलन्ति, निरभिमाना
भवन्तीत्यर्थः । भगवन्मिलनार्थं गतिमत्यो भवन्तीति वा । क्षणानन्तरं भगवान् किञ्चिद्दृष्टिं
प्रसारयतीति मत्वाह **साचीक्षणेति**। साचीक्षणमीषद्वक्रेक्षणं, तेन कृत्वातिविलक्षणोऽशक्य-
निर्वचनतत्कालीनसौन्दर्यं इत्यर्थः । यद्वा । तादृशेन कृत्वा विगतानि लक्षणानि चेष्टादीनि
चिह्नानि येन स तथा । एतादृशनयनदर्शनानन्तरमेव सर्वे चित्रिता भवन्तीति तथा ।
यद्वा । साचिः अल्पमीक्षणं यस्मिन्समये स प्रातःसमय इति यावत् । तदा कज्जलकुङ्कु-
मरेखादिना विशिष्टानि लक्षणान्यङ्गानि यस्य स तथेति । तदैव विलक्षणोऽशक्यनिर्वच-
नसौन्दर्य इति वा । यद्वा । साचीक्षणपदेन पूर्वन्यायेनान्धकाररात्रिरुच्यते । तथाच
तस्यां वेः पक्षिणो मयूरादेर्लक्षणं तद्वत् कूजनं यस्येत्यर्थः । एतच्च यदा दिवसे कृतसङ्केतो
रात्रौ तादृशनिबिडनिकुञ्जस्थो गोपीः प्रतीक्षते भगवानेताश्च नीलनीव्यादिपरिधानेन
सज्जीभूता गृहादागच्छन्त्यो रात्र्यन्धकारेण गहनवनत्वेन च तत्स्थलं ज्ञातुमशक्ता भवन्ति,
तदा भगवानन्याज्ञानार्थं कृतसङ्केतमेव मयूरादिरवमनुकरोतीति तथा । तदैव तादृशाया-
सेनाप्यस्मदिष्टकारी, अधुना कुतो नेति भावः । मार्गप्रापणनयनकार्यकर्तृत्वेन कूजनादेर्नय-

नप्रकरण एवोक्तिः । यद्वा । मानेनेषद्वक्रेक्षणा या गोप्यस्तासु विलक्षणोतिचतुरो मानापनोद-
नादावित्यर्थः ॥ ११ ॥

तत्सामयिकीं स्वावस्थां स्मृत्वाह अपाङ्गेति ।

**अपाङ्गेङ्गितसौभाग्यतरलीकृतचेतनः ।**
**ईषन्मुद्रितलोलाक्षः सुनासापुटसुन्दरः ॥ १२ ॥**

अपाङ्गः स्वभावेनेषद्वक्रनयनाञ्चलेक्षणं तद्रूपमेव यदिंगितं चेष्टितं, तेन यत्सौभाग्यं सौन्दर्यं, तेन तरलीकृता चेतना सर्वेषां चैतन्यं येन स तथा । एतादृशसौन्दर्यदर्शनानन्तरमत्यार्त्या प्राप्त्या च मूर्च्छायामपगमस्तत्स्थिरेण तदपगमे समागम एव तरलत्वं चेतनायाः । यद्वा । अपाङ्गानां यदिंगितं सुरतेच्छारूपभावविशेषज्ञापकालसवलितत्वादिः । स एव यत्सौभाग्यमस्माकं गोपीनां, तेन तरलीकृताः पूर्वसिद्धपातिव्रत्यकुलधर्मादिशून्याः कृता यास्ता एव तासां चेतनः प्राणरूप इत्यर्थः । एतेन भगवत्प्राप्तावेव तासां जीवनं, नान्यथेत्युक्तं भवति । अत एवान्तर्गृहगतिजातप्रतिबन्धानां तासां तथा । अत एव ताभिरप्युक्तं 'भवदायुषां न' इति । यद्वा । तरलास्तरङ्गास्तद्वांस्तरली समुद्र इत्यर्थः । तथाचापाङ्गेंगितरूपो यः सौन्दर्यसमुद्रस्तेन कृता चेतना येन स तथा । भगवद्विरहेणापगतचेतनासु गोपीषु भगवानागत्य यदैव तादृशापाङ्गेन निरीक्षते, तदैव सर्वासां चैतन्यं भवतीति तथा । कृतपदेन अस्याश्चेतनाया नूतनत्वं ध्वन्यते । यद्वा । अपाङ्गेंगितस्य सौभाग्यमेति द्वन्द्वः । ताभ्यां तरलीकृता चेतना बुद्धिर्येनेत्यर्थः । प्रातरन्यगृहादागते भगवति मानेन अहं न वदिष्यामि किमपीति कृतायामपि बुद्धौ भगवदपाङ्गसौन्दर्याभ्यां बुद्धेस्तथा न स्थैर्यं भवतीति तथा । यद्वा । अपगतमङ्गं यस्य सोपाङ्गोनङ्ग इति यावत् । तथाच तत्सम्बन्धि यदिंगितं क्रीडारूपचेष्टितं तेन जनितं तद्रूपमेव वा यत्सौभाग्यमस्माकं तस्मिन्सति तरलीकृता चेतना सावधानता येनेत्यर्थः । महासुरतक्रीडाभिरतिश्रान्तानां रजनिजागरजनितनिद्रास्खलद्गतीनां गोपीनां न तथा सावधानतेति तथा । एवमुक्ता नयनसौन्दर्ये निरूप्यमाणे यदा कदाचिदखिलगोपीमध्यमुपविश्य पादप्रसारादिना हास्यं कुर्वन् लीलया हास्यविशेषार्थं तासु मन्तोपार्थमीक्षते निर्मीत्येनमनो गोपीरपश्यत्तदा सौन्दर्यविशेषोऽनुभूत इति तत्स्मृत्वाह ईषदिति । अल्पमुद्रिते लोले चपले चाक्षिणी यस्य स तथा । यद्वा । ईषन्मुद्रितत्वं सुरतान्ते लोलत्वं नितम्बिनीकदम्बस्य 'क्षिप्यति कामी'त्यादिगीतोक्तप्रकाररमणे । तथा चेषन्मुद्रिताक्षो लोलाक्ष इत्यक्षपदावृत्त्या नामद्वयं पर्यवस्यति । यद्वा । लोला लक्ष्मीः शोभेति यावत् । अग्रिमपदं भावप्रधानम् । तथाचेषन्मुद्रितपक्ष्मता या शोभा तद्युक्ते नेत्रे यस्येत्यर्थः । दीर्घनयनयोरीषन्मुद्रणेऽधिका शोभानुभवसिद्धा । यद्वा । पूर्वमनागतासु गोपीषु वदसि नानागमनसमयं मिथ्यावचनं विधायेतरस्त्रीसङ्गमं गृहीतेत्यभिसारिणीन्य नेत्रे नानाप्रमाणार्थिन्यः किं वक्ष्यन्ति किं वदिष्यन्तीति शा(प)नायं तावत् एव लोलाक्षो भव-

तीतस्तत. पश्यति, तदा भगवन्तं शयानं मत्वा स्वरह कथमन्योन्यं चुम्बनाश्लेषादिकं च कुर्वन्ति । तदा भगवानकस्मादुत्थाय निद्रां मत्वा स्वचुम्बनं कुर्वाणा काश्चिद्दृत्वा चुम्बति, ताभिरन्योन्यमुक्तं चानुवदति, तदा सर्वासाम योन्येक्षणपूर्व. सव्रीडहाससुक्तो महान् रस उत्पद्यत इति तत्स्मृत्वोक्तमिदम् । यद्वा । यदाञ्चलैनेषदाच्छन्नं ईषत्प्रकटे राधाहृदयप्रदेशे सति भगवान् वारंवारमपश्यत् । तत्स्मृत्वोक्तमीषन्मुद्रितेति । ईषदाच्छन्ने गोपीहृदयमण्डले लोलाक्ष इत्यर्थ । क्रमप्राप्ता नासिकामाह सुनासेति । शोभने ये नासापुटे ताभ्या कृत्वा सुन्दरोतिमोहन इत्यर्थ । शोभनत्वं कनकसूत्रितमुक्ताफलत्वं, साम्योन्नतत्वं च, पुटपर्दन पर्णद्वयकृत रसद्रव्यस्थापने पाने वा साधनीभूत वस्तूच्यते । इह च तत्त्वनिरूपणेनोभयपा श्वानयवयोरत्र पर्णन्च तद्वत्पत्तलत्वञ्च नासाया. सौन्दर्यामृतस्थानभूतत्वञ्च ध्वन्यते । अत एव तत्कृत सौन्दर्यमेव निरूपितमग्रे ॥ १२ ॥

एव सौन्दर्ये निरूप्यमाणे कदाचित्पूर्वं नासामुक्ताफलकुण्डलप्रभाभ्यामतिशयितसौन्दर्यं दृष्ट्वा सहजसुन्दरे गण्डमण्डले चुम्बनमकरोत्तत्स्मृत्वा अधरात्पूर्वं गण्डमण्डलं निरूपयति । एतस्य च कुण्डलतत्प्रभाव्याप्तत्वेन तयोश्च कर्णस्थत्वेनैकसरणे सम्बन्धित्वेन नयमपि स्मृत्वाह गण्डेति ।

गण्डप्रान्तोल्लसत्कर्णमकराकृतिकुण्डलः ।
प्रसन्नानन्दवदनो जगदाह्लादकाननः ॥ १३ ॥

गण्डयोर्यौ प्रान्तदेशौ तत्रोल्लसद्देदीप्यमाने कर्णसम्बन्धिमकराकृतिकुण्डले यस्य स तथा । कर्णविशेषण चोल्लसत्पदम् । तेन कर्णयो कुण्डलकृतैव न शोभा किन्तु स्वतोप्यतिसुन्दरे त इति ज्ञापितम् । यथा नयनयोरतिमरसत्व न तथा कर्णयोरिति तथान्यनानुभवेन कस्यचित् कुबुद्धि स्यात् तन्मा भूदिति कर्णयोर्मकराकृतिकुण्डलधारणम् । तेषा सरस एव देशे स्थितेस्तत्साम्यवतोस्तयो सततं तत्र स्थित्या तयो रसमयत्व ज्ञाप्यते । तेन यथा नेनमात्रदर्शनेपि महाप्रसस्तथा कर्णयोरपीति भाव । ततश्चुम्बनेनातिप्रसन्नस्य भगवत. तादृशाननं दृष्ट्वात्यानन्दिता स्वयमप्यभूदिति तत्स्मृत्वाह प्रसन्नेति । प्रसन्नमानन्दरूप च वदन यस्य स तथेत्यर्थ । कदाचित्स्वस्य कृतापराधत्वेपि भगवदानन प्रसन्न दृष्ट्वा आनन्दितामूत्तत्स्मृत्वा वेदमुक्तम् । एतेन केनचिदपराधेनाधुना भगवान्न मिलतीति शङ्का निरस्ता । यद्वा । प्रकर्षेण सन्ना सूक्ष्मा कृशा इति यावत् । तथा चैतादृश्यो या गोप्यविरहेणातिकर्शिताना तासा भगवन्मुखावलोकनेनैव स्तासामानन्दरूप वदन यस्येत्यर्थ । विरहेणातिकर्शिताना तासा भगवन्मुखावलोकनेनैव महानानन्द उत्पद्यत इति तथा । तेन प्रकृतोपयोगीद नाम । यद्वा । प्रसन्न प्रकट इत्यर्थ. । तथाच तादृशानन्दरूपमेव वदन यस्य स तथेति । यद्वा । प्रसन्ना या गोपिका तयानन्दयुक्त वदन यस्य स तथा । यदा कदाचित्पूर्वं समयबन्ध कृत्वान्यत्र समग्रा निशा नीत्वा प्रात. समागते भगवति मानादिनाप्रसन्नायामिव जाताया भगवता 'वदसि यदि किञ्चिदपी-'

त्यादिगीतार्थानुकरणेन कृते मानापनोदने पूर्ववदुत्फुल्लवदना प्रकटानुरागाभवत्तदा भगवान्प्यानन्दितोभवदिति तत्स्मृत्वोक्तम् । अधुना मत्प्रार्थनायामपि कुतो न करोतीति भावः । एवमेतादृशस्मरणेनातिसन्तापे जातेऽत्यार्ता तदपगममिच्छन्ती भगवदाननस्यैव चन्द्रत्वं निरूपयति । एतदेव मम तापापहारि, न त्वन्यदपीत्यभिप्रायेण । अत एव न पौनरुक्तिदोषः । **जगदि**ति । जगतः सर्वस्यैवाह्लादकर्तृ आननं यस्य स तथा । सर्वेन्द्रियान्तःकरणव्यापकानन्दविशेष आह्लादः । अस्य सर्वेश्वैवैतत्कर्तृत्वं कोकरूपगोपीहृदयसंश्लेषकत्वेन, गोपीमुखकमलादिविकासकत्वेन, रात्रावपि वृन्दावनस्थकोककमलाद्यानन्ददातृत्वेन, तेन प्रसिद्धचन्द्रादतिशयः सूचितः । तस्मिन्नेव तदभावात् । एतेन यथा स तदर्थमेव सृष्टस्तथा भगवन्मुखचन्द्रोऽस्मदाह्लादनार्थं प्रकटः, स चेत्स्वकार्यं करिष्यति, न तदा स्वावतारप्रयोजनमपि न सेत्स्यतीति भावः । एतदेवोक्तं 'व्यक्तं भवानि'ति श्लोकेन 'व्रजवनौकसामि-' त्यादिना च । जगत आह्लादो येन तादृग् वानन यस्येत्यर्थः प्रकरणविरोधादुपेक्ष्यः ॥१३॥

एवमाह्लादकत्वेन चन्द्रत्वं तस्मादतिशयञ्च निरूप्य अतः परं प्रकाशकत्वेनापि तद्‌द्वयं निरूपयति **सुस्मेरे**ति ।

**सुस्मेराधृतलावण्यप्रकाशीकृतदिङ्मुखः ।**
**सिन्दूरारुणसुस्निग्धमाणिक्यदशनच्छदः ॥ १४ ॥**

सुस्मेरैरतिसुन्दरैर्मदनचन्द्रादिभिराधृतं यल्लावण्यं सौन्दर्यं प्रकरणान्मुखारविन्दस्यैव तेन प्रकाशीकृतानि प्रकाशयुक्तानि कृतानि दिङ्मुखानि दशापि दिशो येनेत्यर्थः । चन्द्रादिकृतप्रकाशयुक्तान्यपि तानि भगवन्मुखारविन्दतादृशप्रभयैव तादृग्यतद्युक्तानि भवन्तीति ज्ञापनार्थं सुस्मेराधृतेति विशेषणम् । अन्यथा लावण्येत्याद्येव वदेत् । दिङ्मात्रे वक्तव्ये मुखोक्त्या तासामपि स्त्रीत्वेन यत् तासां मुखानि प्रकाशयुक्तानि करोति तन्नास्माकं मुखानि कुतो न करिष्यतीति भावः सूचितः । तेन स्त्रीणामेव हितकारीति सूचितम् । तेन त्वस्य भगवत्सगाशालतावलम्बनकदम्बनिटपीयतीदं नाम । यद्वा । सुस्मेरैः पूर्वोक्तैरेव आ ईषद्धृतं लावण्यं यस्य तत्तथा । तथाच प्रकरणात्तादृङ्मुखारविन्देनेत्यग्रे पूर्ववत् । मन्मथादयो भगवन्मुखारविन्दसौन्दर्यकोट्यंशांशधारणेन लोकेऽतिसुन्दरा इति कथ्यन्त इत्यर्थः । एतेन तमिस्रायामपि रमणे भगवतो विभासकत्वेनापि न चन्द्रस्यापेक्षेति सूचितम् । यद्वा । सुस्मेरा गोप्यस्ताभिः कृत्वा यद्भगवता स्वस्मिन् धृतं लावण्यं तेन तयेति । गोपीजनवेष्टितस्य गोपीकृतशृंगारस्य तत्सम्भोगजनितकुङ्कुमकज्जलादिरेखावतो वा यल्लावण्यं तदत्र विवक्षितम् । यद्वा । सुस्मेरानिमित्तं यद्धृतं लावण्यमित्यर्थः । तथाचोक्तम् 'तासामाविरभूदि'त्यनेन । 'अनुग्रहाय भक्तानामि'ति श्लोकेन च । यद्वा । पूर्वनाह्लादस्मरणेन कदाचिद्भगवान् राधिकामिलनाह्लादेन महामदनोन्मूलत्सामयिकं स्मृत्वाह सुस्मेरेति पूर्ववत् । अत एव प्रकाशवर्णनम् । अत एव तदा दन्ताः प्रकटा दृष्टा इत्यधरस्य

तथा दृष्ट इति तदेवाह सिन्दूरेति । स्निग्धानि चिक्कणानि शोभनानि स्नेहविषयाणि वा यानि माणिक्यानि आरक्ता मौल्यमणिविशेषाः तत्सदृशानि यानि दशनानीत्यन्तेन दशनवर्णनम् । तथा च सिन्दूरवदरुण. सुस्निग्धमाणिक्यदशनानां छद आच्छादकोऽधरो यस्येत्यर्थः । यद्वा । सिन्दूरेत्यादिपदान्युभयत्र सम्बध्यन्ते । तथाच पूर्वोक्तरूपाणि दशनानि तच्छदश्च यस्येत्यर्थः । अधरे माणिक्यदृष्टान्तश्चाकचक्येन । एतेन यथा मणिः प्रियः सर्वस्यापि, परन्तु मर्मज्ञोऽस्य कश्चिदेवैतद्वार्ताभिनिविष्टः परीक्षकजन., तथा भगवानपि प्रियः सर्वस्य, परं मर्मज्ञा महासुरतसञ्जातदन्तक्षताधरपाना गोप्य एवेति सूचितम् । तेन स्नेहातिशयोपि सूचितः । सिन्दूरदृष्टान्तेनैतद्रहिताया दुर्भगात्व सूचितम् । यद्वा । सिन्दूरारुणो यः अधरः तस्मिन् स्निग्धाः स्नेहवत्यो गोप्य इति यावत् । तासु माणिक्यरूपदशनानां छदः समूहो यस्य । दशनानि तच्छदश्च यस्येति वार्थः । अत्र माणिक्यपदेन यथा माणिक्याभरणैरधिका शोभा, तथा दशनाधरचिह्नैरपीति सूचितम् ॥ १४ ॥

एव भगवता क्रियमाणे राधया सीत्कारे कृते 'व्यथते किं'मिति यदाब्रवीद्भगवांस्तदा तस्मादप्यधिक सुखमनुभूतमिति तत्स्मृत्वाह पीयूषेति ।

**पीयूषाधिकमाध्वीकसूक्तः श्रुतिरसायनः ।**
**त्रिभङ्गललितस्तिर्यग्ग्रीवस्त्रैलोक्यमोहनः ॥ १५ ॥**

पीयूषादमृतादप्यधिक मधु यस्मिन्नेतादृश तद्रूपैव वा शोभनोक्तिर्यस्येत्यर्थः । पीयूषाधिक्य तदसाध्यसाधकत्वम् । एतदेव 'सिञ्चाङ्ग न' इति श्लोके निरूपितम् । 'त्वदङ्गसङ्गामृतमात्रे'ति । 'एतानसतनुज्वर' इति च गीतगोविन्देपि निरूपितम् । देवामृतासाध्यानङ्गजीवनत्व च स्पष्टम् । उक्तौ शोभनत्व भगवतोच्चारणे क्रियमाणे दरप्रकटरदप्रभापङ्क्त्या नवमणिमयतोरणशोभावत्त्वम् । मङ्गल एव तोरणविधानात् । एवमुक्तिस्मृतौ यदा कदाचिद्विरहेण मूर्छितासु गोपीषु भगवानागत्य मधुरया गिरा तामपाकरोत्, तत्स्मृत्वाह श्रुतीति । श्रुति' श्रवणेन्द्रिय तत्सम्बन्धी रसायनो महौषधरूप इत्यर्थः । यद्वा । पीयूषेत्याद्येकमेव नाम । तथा च तादृशोक्त्या गोपीनां श्रुतिषु तथेत्यर्थः । यद्वा, सूक्त्या माध्वीकत्वनिरूपणेन मुखस्यातिसरसकमलत्व ध्वन्यते । तादृशस्य तस्य सभ्रमरत्वनियमेनानापि नयनचुम्बनसञ्जातनीलिमाधरत्व सूच्यते । अत एवावधिं कृत्वान्यत्र गते भगवत्यत्यार्त्यां मूर्छितायां तस्यां प्रातस्तादृश आगत्य वचनैरेव समाधत्त इति महौषधरूपत्वमपि सङ्गच्छते । तादृशसूक्तिरूपो यः श्रवणसम्बन्धी रसस्तत्सायनरूप इति वार्थ. । पुलिङ्गप्रयोगश्छान्दसः । एव सूक्तिनिरूपणे रासपूर्वकालीनप्रथमागतगोपीविषयां 'स्वागतं वो महाभागा' इत्युक्तिं भगवत. सस्मार, तदा च भगवान् वचनेन निवर्तयन्नपि तत्कालीनत्रिभङ्गस्वरूपेण मोहयित्वा स्वकीया. कृत्वा रस दत्तवानिति तथैवाधुनापि करोत्वित्यभिप्रायेण तदेव स्वरूपमाह त्रिभङ्गललित इति । त्रिष्वङ्गेषु ग्रीवाकटिचरणेषु यो भङ्गोऽन्यथाभावः, त्रिधा वा

भङ्गत्रिभङ्गस्तेन ललितोतिसुन्दर इत्यर्थः । तदा वेणुनाद एवातिभरेण तस्य च वामपरावृत्तस्य श्रीमोहकत्वेन तदा तथैव भगवता कृतत्वेन तत्र च ग्रीवायास्तिर्यङ्नियमेन तत्कृतशोभातिशय सूचयाह **तीर्यग्ग्रीव** इति । अत एव श्रीभागवते 'वामबाहुकृतवामकपोल' इत्यादिना देवश्रीमोहको वामपरावृत्त एव वेणुनादो वर्णितः । ननु द्वयोश्चतुर्षु वाङ्गेषु भङ्गित्वं न कुत इत्याशङ्क्य त्रिभङ्गतात्पर्यरूप नामाह **त्रैलोक्यमोहन** इति । अत्रायमर्थः । लोकत्रयरूपाङ्गत्रयेन्यथाभावसम्पादनेन लोकत्रयस्यार्यमार्गरूपपूर्वरूपत्यागरूपान्यथाभाव एव सम्पाद्यते । अपि च । त्रिष्वप्यङ्गेष्वेकैकमप्यङ्ग त्रैलोक्यस्यापि तथा करणे समर्थम् । तथाहि । त्रयीरूपत्रिवलीवत्कण्ठेन्यथाभावसम्पादनेन त्रैलोक्यस्यापि त्रयीनिरूपितकर्ममार्गत्याजनम् । निर्गुणोपासकसमाधिरूपकटिनाम्योस्तथात्वसपादनेन तस्य ज्ञानमार्गत्याजनम् । अतिसूक्ष्मतया शून्यतायामेव तद्रूपतेति न भागवतविरोधः । मर्यादाभक्तिरूपदक्षिणचरणकमलस्य अन्यथाभावसम्पादनेन पुष्टिरूपसुस्थिरवामपदाश्रितीकरणेन च मर्यादारूपविहितभक्तित्याजन पुष्टिरूपकामादिमार्गेण भजन च सम्पाद्यते । अत एव गोपीनामेवार्थं इदं स्वरूप प्रकटीकृतमिति ज्ञेयम् । अन्यत्र मर्यादादित्यागाभावात् । अनेन स्वरूपेणान्येषामपि मनोहरण तु यथा कामिनी कामुकानुरञ्जनार्थमेव मृगमदलेप कुरुते, नान्यार्थं, परन्तु तस्याप्रतिबन्ध्यस्वभावत्वेन गन्धः सखीनामप्यनुभूतो भवति, पर तद्भोक्ता स एव तथेति निर्णयः ॥ १५ ॥

एवं स्वमोहकरूपमुक्त्वा तत्सहायीभूताधरामृतसहितवेणुनादं वर्णयति **कुञ्चिताधरे**ति ।

**कुञ्चिताधरसंसिक्तकूजद्वेणुविनोदवान् ।**
**कङ्कणाङ्गदकेयूरमुद्रिकाविलसद्भुजः ॥ १६ ॥**

कुञ्चितो योधरस्तेन सम्यक्सिक्तः, अत एव कूजन् शब्दायमानो यो वेणुस्तस्मिन्ये विनोदा विविधमूर्च्छनादयस्तद्वानित्यर्थः । वादनप्रकारविशेषेण कासाञ्चिदाह्वान कासाञ्चिन्मोहन कासाञ्चिज्जडता कासाञ्चिच्चैतन्यमिति वा विनोदशब्दार्थः । तदुक्त 'निशम्य गीत तदनङ्गवर्धनमि'ति 'कुजगतिं गमिता न विदामः' 'अस्पन्दन गतिमतां पुलकस्तरूणामि'त्यादिना च । अधरस्य सेककरणत्वनिरूपणेन अमृतत्व ध्वनित, सेकस्य द्रवद्रव्यसाध्यत्वात् । अत्रान्यस्य तत्सम्भवेनेत्तत्त्वमेव निष्प्रत्यूहम् । स्वय साक्षात्सिक्तवेणुजनितशब्दश्रवणेनाप्यस्मासु सार्द्रताकरण सेके सम्यक्त्वम् । यथा कोकिलादिकूजनेन रसोद्बोधो रमणामिद्धस्तथा वेणुनादेन तद्बोधोस्मदनुभवसिद्ध इति कूजत्पदप्रयोक्त्या भावः । मोहनसहायत्वेन अस्य निरूपणेन अस्मदादीनामेव मोहने भगवतो न कश्चित्प्रयास इति ज्ञापनार्थ विनोदपदम् । एव वेणु वर्णयित्वा तदाधार वर्णयति कङ्कणेति । कङ्कणोपर्यङ्गद तदुपरि केयूरमिति क्रमः । मुद्रिका अङ्गुलीयाः । आदिपदेन नखमुक्तिरुच्यते । तस्या गोप्यत्वात्तथोक्तम् । तथाचैभिर्विलसन्तौ शोभायमानौ भुजौ यस्येत्यर्थः । अङ्गुल्यादीनां

एवं वेणुवर्णने यदा कदाचि-
भुजावयवत्वेन मुद्रिकाणामपि तच्छोभाकरत्वमुक्तम् । यद्वा । एवं वेणुवर्णने यदा कदाचि-
द्भगवान् वेणुना स्वनाम्नैव गृहीत्वा समाह्वयत्, तदा तच्छ्रुत्वा रहस्यागत्य भगवद्भुजयोः
स्वभुजौ धृतवती, भगवांश्च राधाभुजयोः स्वभुजौ, तदा स्वकीयैर्भगवदीयैश्च कङ्कणाङ्गदादि-
भिरतिशोभा भगवद्भुजे दृष्टेति तत्स्मृत्वाह कङ्कणेति । तेन कङ्कणादीन्यत्र गोपिकाया
उच्यन्ते । एवं क्रमोपि सङ्गच्छते । बाहुमध्यस्थकेयूरोपरि तस्या मुद्रिकादेः स्थितेः, अत्र
आदिपदेन सुवर्णकङ्कणकाचकङ्कणनखशुक्तिप्रभृतयो मद्धृदयस्था अनेक उच्यन्ते । तेन
सुमृक्तं लसद्भुज इति । यद्वा । मुद्रिका आदिर्येषां ते तथेति । तद्गुणसंविज्ञानो बहुव्रीहिः ।
तथाच कङ्कणाङ्गदकेयूराश्च ते मुद्रिकादयश्चेति कर्मधारयः । तेन भगवदीयत्वपक्षेपि
नाक्रमः ॥ १६ ॥

तदा क्रमेण कौस्तुभादेर्दृष्टत्वात् क्रमेण तद्वर्णयति स्वर्णसूत्रेति ।

**स्वर्णसूत्रसुविन्यस्तकौस्तुभामुक्तकन्धरः ।**
**मुक्ताहारोल्लसद्वक्षःस्फुरच्छ्रीवत्सलाञ्छनः ॥ १७ ॥**

सुवर्णमयसूत्रेण सुष्ठु विन्यस्तो यः कौस्तुभो मण्याभरणं तेनामुक्ता व्याप्ता कन्धरा
स्कन्धभागो यस्येत्यर्थः । तादृशकौस्तुभमुक्ता आसमन्तान्मुक्ता विशाला च सा यस्येति वा
कर्मधारयः । यद्वा । पूर्वं स्वर्णसूत्रेण सुविन्यस्तो यः कौस्तुभः पश्चात् रतिसमये एतज्जनि-
तान्तरायासहिष्णुतया उत्तारितत्वात्तेन आसमन्तात् मुक्ता त्यक्ता कन्धरा यस्य स तथेति ।
मुक्ताहारेति । मुक्ताहारैरुच्चैरतिशयेन लसत् शोभायमानं यद्वक्षस्तस्मिन् स्फुरत् प्रकाश-
मानं श्रीवत्सरूपं लाञ्छनं यस्य स तथा । यद्वा । मुक्ताहारोल्लसद्वक्षसा स्फुरन्ती या श्रीः
तद्वत्सलाञ्छनः । यथा सा भगवन्नखपदाद्यङ्कितवक्षाः, तथा भगवानपि तन्नखपदकुङ्कुमकज्ज-
लाद्यैस्तथेत्यर्थः । स्वकन्धरधृतबाह्वोः स्मृतावस्योक्तत्वात्तदा च राधाकरस्पर्शजनितरोमाञ्चानन्दा-
दिना निसर्गत एव किञ्चिदुच्छूनावधिक तथा भूतौ भगवतो हृद्यौ दृष्टाविति श्रीदृष्टान्तः ।
गोपीः परित्यज्य श्रीदृष्टान्तकर्ण्या अय भावः । तथाहि । यदि कस्याश्चिद्गोप्या निकटे
स्वान्नाथस्तदा ममैतादृग्दुःखमेव न स्यात् । अन्योन्यं सर्वासां निष्कपटप्रीतेः विरहस्वभावात्,
दुःखसम्भवे वा प्रिय एव सोढुं न शक्नुयात् । तत्सहनेपि वा ताः सोढुं न शक्नुयुः, चला-
दप्यत्रानयेरन् प्रियम् । सपदि चैतदभावाल्लक्ष्मीसमीप एवास्तीत्यलं विस्तरेण ॥ १७ ॥

**आपीनहृदयो नीपमाल्यवान् बन्धुरोदरः ।**
**संवीतपीतवसनो रशनाविलसत्कटिः ॥ १८ ॥**

आसमन्तात् पीनं स्थूलं हृदयं यस्य स तथेति । स्तनयोर्मध्यदेशो
**आपीने**ति । आसमन्तात् पीनं स्थूलं हृदयं यस्य स तथेति । आसमन्तात्पीना गोपीकुचास्ते हृदये यस्येति ।
वर्णितः । तस्योन्नतस्यैव सुन्दरत्वेन तथा । यद्वा । आसमन्तात्पीना गोपीकुचास्ते हृदये यस्येति ।
गोपीनामापीनहृत्स्वयत इति वार्थः । तदधःस्थां मालामाह **नीपे**ति । नितरामतिशयेन इं कामं
पातीति नीपस्तद्रचितमालावानित्यर्थः । नीपशब्देन सूक्ष्मकदम्बकुसुमानि तद्वृक्षोप्युच्यते ।

तथाच हृदि कामजन्यकामरक्षकधारणेन सर्वदा सकामत्वं सूचितम् । तेनैवमपि स्वेष्टत्व सूचितम् । बन्धुरेति । बन्धुर निम्नोन्नत मध्ये किञ्चिदुन्नत पार्श्वयोरधश्चेषन्निम्नमेतादृशमुदर यस्य स तथा । यद्वा । बन्धुपदेन हरिनामवत्त्वसाधर्म्यवन्त सिंहा उच्यन्ते । तान् राति 'रलयोरभेद' इति न्यायेन लाति आदत्ते आत्मसात्करोति कार्श्येन तद्बन्धुरम् । एतादृगुदर यस्येत्यर्थ । सवीतेति । सवीत वेष्टित पीत वसन यस्य स तथा । यद्वा । दिदृक्षाविषयाङ्गा न्तरायत्वेन कदा वा भगवानिद दूरीकरिष्यती उत्कण्ठिततया गोपीना दृष्टि पीतवसनमा वृत्यैव तिष्ठतीति सवीतत्व पीतवसनस्य । तथाच कर्मधारय सम्पद्यते । यद्वा । यदा कदाचिन्मानकृतविरहकातरया राधया अकस्मात्प्रकटो दूराद्धावन्त्या समागत्य परिरब्धो भगवास्तदा स्वहृदयभुजकङ्कणाञ्चलादिभि पीत वसन सवीतमभूत् तत्स्मृत्वा सपद्यपि तथा कथ भवेदिति समनोरथ नामोक्तमिदम् । एतादृशदृष्टिसवीतस्वसातिगोप्यत्वेन सवीतत्व मानमुक्तम् । अथवा । इहोत्तरीयस्य वर्णनम् । तदाश्लेषान्तरायत्वेन पूर्व दृष्ट्यैव सवीतत्व ज्ञेयम् । यद्वा । सवीत सर्वदा धृतमेव वर्तमान गुप्तरसावस्थानमिति यावत् । तत्र पीत वसन यस्य स तथा । यद्वा । सम्यग्भूत कामरसरूप यद्वसमृत तद्वान् सवीत । पूर्वो क्तप्रदेश एव । तस्मिन् वीत विगत पीत वसन यस्येत्यर्थ । कर्मधारयो वा । समभिव्याहा रवशात् पीतवसनेनैव, तेन वेष्टितत्व ज्ञेयम्, गोपीभिर्वा । उक्तरीत्या सवीत गोपी जनश्चासौ पीतवसनश्चेति । यद्वा । सम्यक् वीत त्यक्त गृहादिक सन्ध्यायामभिसारे याभिस्ता सवीता गोप्य इति यावत् । तासु पीत वसन यस्येति । रात्रिजागरणेन रतिश्रान्त्या चासावधानतया प्रातरुत्थानसमये भगवदीय वस्त्र तासु तदीय वस्त्र भगवतीति तथा । यदा भगवान् पूर्व विविधबन्धैस्तासु परमरसप्राकट्य करोति, तदा तद्रसस्वभावा त्तथा रसाधिक्ये स्त्रीणा तथात्वात्तथैव रसो भवतीति तथा । यद्वा । सम्यक् वीत त्यक्त पीतवसन रतिसमये येन स तथा । रशनेति । पूर्व महामणिहीरकादिजटिता कनकसूत्र खचितबदरीमोदरमुक्तापटलमध्या । शृङ्खलितरतिपतिजयघण्टिका घुघूरुप्रोता कनकमयी रशना तया विशेषेण रसन्ती शोभायमाना कटिर्यस्य स तथा । विपरीते गोपीना रशनया वा तथा । स्वत सुन्दरघनमेचककट्या विविधरत्नमण्यादिभिरधिका शोभा भवतीति विपदार्थ । ( यद्वा । विपदेन पक्षिण उच्यन्ते । तथा च तान् लाति स्वस्वनसजातीयस्वनत्वेन सधर्मतया गृह्णातीति रा । एवञ्च, रशनपदेन सह कर्मधारय सपद्यते । तथा सती शोभायमानेत्यग्रे पूर्ववत् । रशना विलसन्ती यया तादृशी कटिर्यस्येति वा । तस्या रशना कृतैव न शोभा, किन्तु सा स्वत सुन्दरा । प्रत्युतैतत्कृता शोभा रशनायामिति मान । ) यद्वा । गोपीना रशनासु तथा सा यस्येत्यर्थ । तया विलसन्त्यो या गोप्यस्ता कट्या यस्येति वा । अथवा नृत्य स्मृत्वेदमुक्तम् । अत एव भ्रमरिकाग्रहणेन चाकचक्याधिक्येन शोभाया विशेष उक्त, तदा कटेश्चलनात् ॥ १८ ॥

एव कटिं वर्णयित्वा क्रमप्राप्त तदध स्थित पीताम्बर वर्णयति अन्तरीयेति ।

**अन्तरीयघटीबन्धप्रपदान्दोलिताञ्चलः ।**

'अन्तरीयोपसव्यानपरिधानान्यधोंशुकं' इति कोशादन्तरीयपद कटिस्थपीताम्बरपरमि-
त्यध्यवसीयते । तथाच तस्य या घटी विस्तारे प्रान्तदेशो लोके 'धरीकिनारी'ति शब्दवाच्यस्तस्यां
यो बन्धो बन्धन तेन प्रपदे पादाग्रे आन्दोलितमञ्चल यस्येत्यर्थ । कटिस्थपीताम्बरो-
स्तस्यैव तत्र स्थित्यन्यथानुपपत्त्या बन्धनप्राप्तावपि यद्बन्धनिरूपण तेन यथा नृत्यसमये कम-
लाद्याकारेण बध्यते, तथा बन्धनमनाप्युच्यते । अत एव चाञ्चलस्य प्रपदे आन्दोलनम् ।
आन्दोलनोक्त्या मधुरनृत्य ज्ञाप्यते । घटीबन्धपदमेव वा बन्धनप्रकारविशेषवाचकम् ।
तथा चान्तरीयस्य घटीबन्धने बन्धनप्रकारविशेषेण तथा तद्यस्येत्यर्थ । यद्वा । घटीपदेन
गोपीनीव्युच्यते । तथाच यदा सर्वासूपविष्टासु स्वरह कथामन्योन्य शृङ्गारादिक च कुर्वा-
णासु मध्ये भगवांस्तासामेव नीव्यादिपरिधानेन तद्वेष कृत्वोपरिस्थूलवस्त्रेण वदनकमल
गोपयन् कतिपयसखीना स्वशिक्षिताना मध्ये मूलैता यथा न जानन्ति तथा शनै शनैर्मधु-
रया गत्या समायाति कौतुकार्थं, तदाञ्चलस्येव दृष्टत्वात्तरस्मृत्वेदमुक्तम् । अन्तरीयस्योपरि या
घटी नीवी तस्या बन्धे सति प्रपदपर्यन्त आन्दोलितमञ्चल यस्मिन्निति । यद्वा । रहसि
कदाचिद्भगवान् राधा चान्योन्यमाक्षेप कुरुत । तदा भगवदन्तरीयस्योपरि या नीवी
राधायास्तस्या अञ्चल तदा तथैवेति तरस्मृत्वेदमुक्तम् । तदैतादृशसुखदोऽधुना किमिति न
तथेति भाव । यद्वा । अन्तरीये अन्तरीयस्थाने या घटी तस्या यो बन्ध इत्यग्रे पूर्ववत् ।
एतच्च रजनिजागरजनितालस्येनासमशरसमरजयजनितश्रमेण चाङ्गीकृतानवधानत्वस्य घूर्णा-
यमाननयनस्य स्वपीताम्बर त्यक्त्वा गोपीवसनमेवाययातथ वेष्टयित्वा गच्छतोञ्चल
तथेति तरस्मृत्वेदमुक्तम् । यद्वा । नामद्वयमिदम् । तदा पादान्ते विसर्गो ज्ञेय । तथाचा
न्तरीयघटी या गोपिकायास्तस्या बन्ध करतलबन्धो यस्य स तथा । एतच्च प्रथमसमागमे
व्रीडाया वा अन्तरार्ताया मिथ्यामानकृतवसनङ्गीकाराया वा निर्बन्धकरणे । यथा तदैव
स्वनिर्बन्धेन तथाकरण, तथाधुनाऽस्मन्निर्बन्धेन तथा कर्तव्यमिति भाव । यद्वा । अञ्चलपदेन
गोपिकाञ्चलमेवोच्यते । तथाच यदा भगवान् रहसि समायाति ताश्च कुङ्कुमादिसुगन्धद्र-
व्यजलैश्चरणकमले प्रक्षाल्य स्वाञ्चलेन प्रोञ्छन कुर्वन्ति, तदा भगवत प्रपदे आन्दोलित
तासामञ्चल भवतीति तरस्मृत्वेदमुक्तम् । अधुनापि तथैव कुर्वित्यभिप्रायेण ॥ १९ ॥

अग्रे ऊरुजान्वादीना समयविशेष एव प्राकट्येनान्यदा पीताम्बरेणावृतत्वेनाति-
गोप्यत्व तेषु जानन्तीतिताननुक्त्वा चरणारविन्दमेव वर्णयति । अथवाधुना तादृशावधाना-
भावेन पीताम्बरप्रसङ्गेनापि प्रपदस्मरणे जाते तत्सबन्धिचरणारविन्दमेवाग्रे स्मृत वर्णयति,
पूर्वं विस्मृत्य, अरविन्देत्यादिना श्लोकद्वयेन ।

अरविन्दपदद्वन्द्वकलक्कणितनूपुरः ॥ १९ ॥
बन्धूकारुणमाधुर्यसुकुमारपदाम्बुजः ।
नखचन्द्रजिताशेषदर्पणेन्दुमणिप्रभः ॥ २० ॥
ध्वजवज्राङ्कुशाम्भोजराजचरणपल्लवः ।

अरविन्दरूपं यत्पदद्वन्द्वं तस्मिन् कलक्कणितान्यव्यक्तमधुरत्वेन शब्दायमानानि नूपुराणि यस्य स तथा । अरविन्दपदेन तापहारकत्वसरसत्वगोपीकुचकोकसहचरत्वादीनि सूचितानि । विरहतपनोद्भवे एवैतस्यापि प्राकट्यमित्यपि ज्ञापितम् । कमलस्य यथा सर सदेशमात्रे उत्पत्तिं तद्विशेष एव कुत्रचित्तथा । तथैतद्रसेनैव सरसहृदयविशेषस्य प्राकट्यमिति सूचितम् । तस्य च यथान्तर्ने जलमात्रमपि तु मकरन्दं तथा बन्धादिषु हृदयादिस्थापने यो रसस्तद्वत् । न तु ज्ञानविषयानन्दसामान्यवत् । तेन तदविषयत्वं तस्मादुत्तमत्वं च सूचितम् । अत एव द्वन्द्वत्वमुक्तम् । तेषामद्वैतदृष्टित्वात् । किञ्च । विकसितादेव हि कमलात् मकरन्दप्राप्तिः । स च तरणिकिरणसामानाधिकरण्ये । अत्र च विरहतापस्य तथात्वेन ज्ञानिना च तदभावेन कुतो तद्रसास्वादे । अपिच । सति तापे हि तदपहारिकमलाद्यन्वेषणं, तेषु तदभावस्योक्तत्वात् नात्रोपयोगं तेषां कश्चिदिति तत्त्वम् । तेन गोपीनामेव हृदये विकासो रसदातृत्वं चास्येति भावसर्वस्वम् । गोपीकुचकुङ्कुममेव परागोत्र । ध्वजादिरेषां केसरा । अत एवैताभिरेव 'पूर्णा पुलिन्द्य' इति श्लोके तादृशकुङ्कुमस्यैव तापहारकत्वमुक्तम् । मकरन्दसवलितस्यैव परागस्य तथात्वेन अत्रापि पूर्वोक्तसवलितत्वं 'दयितास्तनमण्डितेने'ति पदेन सूचितम् । अत एव एतद्दर्शनमात्रेण स्मरजापि स-गच्छते, लिम्पनेन तदभावश्चेत्यलं विस्तरेण । कनकहीरकेन्द्रनीलमणिपरिष्कृतानि परितो विलम्बिमुक्तागुच्छानि तदग्रे विविधपदविरचितसूक्ष्मपुष्पाणि नूपुराणि तानि भ्रमरा इवेषच्चलनेऽप्यव्यक्तमधुरं शब्दं कुर्वन्तीति तथा । यद्वा । अरविन्देषु गोपीनां हृदयकमलेषु सल्लालनादौ करकमलेषु वा यत्पदद्वन्द्वं भगवतस्तस्मिन्नित्यग्रे पूर्ववत् । समयविशेष स्मृत्वेदमुक्तम् । यद्वा । अरविन्दानां पदं स्थानं यमुनापुलिनमिति यावत् । तस्मिन् यानि द्वन्द्वानि भगवतो गोपीनां च रासे । तेषु तथेति । नृत्यं स्मृत्वेदमुक्तम् । एवं चरणस्योपरिभागो वर्णितः । यद्यप्यग्रे नखवर्णनमेव युक्तम् । क्रमप्राप्तत्वात् । तथापि यत्तलवर्णनं तत्रिभङ्गं स्मृत्वेति ज्ञेयम् । तत्र दक्षिणचरणतलस्यैव प्रथमं दर्शनात् । पश्चात्सानामिति चरणतलं वर्णयति । अथवा । पूर्वं कदाचिद्विरहसंतप्तहृदया रहस्युपविष्टस्य भगवतश्चरणतलं विहरतया पश्यतीव परमार्त्या स्वहृदयेऽस्थापयत् । तेन च तापापगमे तच्चरणमञ्जलौ गृहीत्वा पश्यन्ती पूर्वं तलमपश्यत्, पश्चान्नखानि । पुनः स्पष्टत्वेन तलमिति पूर्वानुभूतम् । अधुनापि तादृगेव सन्तापोऽस्तीति चरणस्मरणमात्र एव प्रकरणात्तत्स्मृत्वाधुनापि तथा कथञ्चिद्वेदिति ममनोरथं भवानि निस्मृत्य तत्सेव वर्णयति, ततो नखानि,

पुनस्तत्तम् । अत एव पुनरप्यम्बुजत्वनिरूपणम् । बन्धूकेति । बन्धूकोक्त्या रक्तपुष्प-विशेषः । तद्वत्तस्मादपि चारुणं माधुर्यरूपं च सुकुमारं चेति सर्वत्र कर्मधारयः । तथाचैतादृशं पदाम्बुजं यस्येत्यर्थः । यद्वा । बन्धूकारुणपदेन कुङ्कुममुच्यते । तेन माधुर्यं सौन्दर्यं येषां ते गोपीहृद्यास्तेषु सुकुमारं कमलाकरस्पर्शेपि म्लानिमिव भजमानं सुष्ठु कुत्सितो मारः कन्दर्पो यस्मादिति वा एतादृशं तद्यस्येति । एतेनातिकठिनेषु तेषु तादृशं पादाम्बुजं ददातीति गोपीनामर्थे भगवान् स्वक्लेशमपि न गणयतीति सूचितम् । अम्बुजार्थे श्लेषोपि ज्ञेयः । तत्रारुणेन सूर्येण तथा । नखचन्द्रेति । नखरूपेणैकेनापि चन्द्रेण जिताः तुच्छीकृता अशेषदर्पणेन्दुमणीनां प्रभा येन स तथा । नैर्मल्यचाकचक्यतापहारकत्वम-ण्डलाकारत्वान्यानभिभाव्यप्रभत्वेषु कस्मिन्नप्यंशे न न्यूनतेति दर्पणादित्रयग्रहणम् । सामा-न्यतः साम्याभाव उक्ते एकेन द्वाभ्यां वा साम्याभावेपि बहुभिर्मिलितैस्तैः साम्यं भविष्य-तीति शंका स्यात् तद्व्युदासायाशेषपदं, तेनासम्भावितसाम्यत्वं पर्यवसति । दर्पणजयोक्त्या स्वाधरशोणिमाप्रतिबिम्बवत्त्वं सूचितम् । न ह्येवं दर्पणे । अत एव श्रीभागवते उत्तुङ्गरक्तेति नखविशेषणं, एतेनैवात्र प्रतिबिम्बितं बिम्बादपि कोटिगुणितं सुन्दरं भवतीति सूचितम् । दर्पणे तथाभावात् । इन्दुजयोक्त्या निर्मलत्वशश्वदखण्डत्वसूर्यप्रभाद्यनभिभाव्यत्वानि सूचितानि । तस्यैतद्विपरीतत्वात् । मणिजयोक्त्या सुस्पृष्टत्वेपि तथात्वमतिकोमलदेशप्रभवत्व-मतिशयितभाग्यभाववद्धृदयभूषणत्वमन्तर्बहिरपि सूचितम् । तस्यैतद्वैपरीत्यात् । एतेषां च प्रभां विना स्वतोऽप्रयोजकानां प्रभैव सारभूतेति प्रभाजयोक्तिः । चाकचक्ये दर्पणस्य शैत्ये चन्द्रस्यापि लौहित्ये मणेरपि उपमानं दातुं न शक्यत इत्यपि दर्पणादित्रयोक्ते-स्तात्पर्यं ज्ञातव्यम् । तेनाशक्यनिर्वचनसौन्दर्यवत्त्वं सूचितम् । अत एव जयोक्तिरेव, परं न त्वेतादृशमित्यपि । यद्वा । नखचन्द्रेण जिता वशीकृता या राधा तस्याः शेषभूता दर्पणादीनां सा यस्मादित्यर्थः । पूर्वं विरहतापवत्त्वेनातथाभूताया भगवत्सङ्गे जाते तादृशी शोभा जाता इति तथा । अत एव नखानां चन्द्रत्वनिरूपणम् । यद्वा, नखैर्नखदानैश्चन्द्र-यच्छीतलैस्तापहारिभिर्दर्शनैश्च जिता रतिरणे या सा तया शेषत्वेन तुच्छत्वेन जातास्तेषां तापेनेत्यर्थः । त्रिभङ्गपक्षे द्वितीयपक्षे वा तापागमानन्तरं चरणकमलस्य हस्तयोर्ग्रहणे तत्सौन्दर्या-भिनिविष्टचित्तायाः परितस्तद्दर्शने प्रथमत उपरिस्थितनखदर्शनं पश्चात्तलस्थरेखादर्शनमिति पूर्वं नखानि पश्चाद्रेखा वर्णयति । भगवद्दत्तरसाया राधायाः प्रातस्तादृश्येव शोभेति तथा । एवं नखानि वर्णयित्वा तत्तलरेखा वर्णयति ध्वजवज्रेति । चरणे निर्भयस्थित्यर्थं ( ध्वज-स्थापनम् । ) विरहे हृदयरोधरूपमहापर्वतविदारणाय (वज्रस्थापनम् ।) व्रजनाथमहारस-मदमत्तगोपीमनोगजमानापनोदनाय (अङ्कुशस्थापनम् ।) विरहतापापनोदनाय ( अम्भोज-स्थापनम् । ) स्थापितानि यानि ध्वजवज्राङ्कुशाम्भोजानि तैः राजन् शोभायमानश्चरणपल्लवो यस्येत्यर्थः । नैतैतेषामेव कार्यार्थं कृपां कुरु इति भावः । पल्लव आम्रादेर्नूतनोङ्कुरः । चरणे

तन्निरूपणेन स यथा सरसवसन्त एव प्रादुर्भवति, नूतनकामजनको रसपोषकश्चातिकोमलस्पर्शस्तापहृद्रतितल्पोपयोगी च, तथेदं तादृग्रसेन सरसे गोपीनामेव हृदये प्रादुर्भवति कामजनकत्वादिष्वपि तथेति सूचितम् । नित्यनूतनत्वं च । यद्वा । एतादृशचरणे पल्लवा यस्येत्यर्थः । एतच्च यदा विरहसन्तापेन स्वहृदये पल्लवाः स्थापिता आसन् । तदैव च भगवत्यागतेतिविह्वलतया शीघ्रमेव तापशमनार्थं सपल्लव एव हृदये चरणावस्थापयत् । ततः सन्तापो व्यगमदिति । तत्स्मृत्वोक्तमधुनापि तथैव कुर्वित्यभिप्रायेण ॥ २०३ ॥

एवं प्रत्ययवयवर्णनेऽपि तापानपगमेऽतिदुःखिता सकृत्सङ्गेनैव य एतादृशदुःखदः स पुनः किमिति मृग्यते इति शङ्कां दूरीकुर्वन्नेव स्वरूपाभिनिविष्टत्वेन समुदितं स्वरूपं वर्णयन्ति त्रैलोक्येति ।

त्रैलोक्याद्भुतसौन्दर्यपरिपाकमनोहरः ॥ २१ ॥

त्रैलोक्येपि यदद्भुतमसम्भावितं सौन्दर्यं गोपीनां तस्य यः परितः पाको विरहतापेन अधरशोषस्तस्मिन्नपि भवति मनोहर एवेत्यर्थः । विरहेणातिक्लेशे मनोनिवर्तनेच्छायामपि मनसो हृतत्वेन धर्मिण एवाभावान्न निवर्तनं भवति । विषयस्याप्येतादृशस्वभावत्वादिति भावः । तथा चोक्तम् । 'गणयति गुणग्राममि'ति । 'रिपुरिव सखीसंवासोयमि'त्यादिना श्रीगीतगोविन्दे । यद्वा । त्रैलोक्येद्भुतं सौन्दर्यं यासां तादृशीनां गोपीनां परिपाके फलपर्यवसाने मनसो हरणं येन स तथा । तस्य फलरूपत्वेन यथा । यद्वा । गोपीनां तादृशं यत्सौन्दर्यं तस्य परिपाके सम्यङ् निष्पत्तौ सत्यां मनो हरतीति तथेत्यर्थः । एतच्च प्रातरारभ्य सन्ध्यापर्यन्तं पुष्पतल्पमालारचनस्वाभ्यङ्गस्नानानेकप्रकारनीवीपरिधानकेशप्रसाधनसुगन्धद्रव्यलेपनतिलकाञ्जनादिरचनाभिः सकलाङ्गसौन्दर्ये सम्पन्ने सन्ध्यायां भगवानागत्य मनो हरतीति तत्स्मृत्वोक्तम् । असमर्पितपरकीयवस्तुनो बलाद्ग्रहणं हरणम् । भगवति च ( विविध ) मनोहरत्वनिरूपणेन यत्र असमर्पितमपि गृह्णाति, तत्र समर्पितं मनोस्माकं गृह्णातीत्यत्र किमाश्चर्यमिति भावः सूचितः ॥ २१ ॥

एवं सन्ध्याकालीनस्य स्वरूपमुक्त्वा तदनन्तरं क्रमेण रहस्यागतस्य स्वरूपं वर्णयन्ति ।

साक्षात्केलिकलामूर्तिः परिहासरसार्णवः ।
यमुनोपवनश्रेणीविहारी व्रजनागरः ॥ २२ ॥

केलिः कामकेलिः सैव या कला(स्वरूपं) तन्मूर्तिः । चतुःषष्टिकलासु मध्येऽन्यासां कलानां ज्ञाता कामकेलिकलायास्तु मूर्तिरूप एवेत्यर्थः । यथा दुर्गायाः समानाकारत्वेन सुवर्णमय्या अपि मूर्तेर्दुर्गादिमूर्तित्वं प्रसिद्धम् । तथा केलिकलाया यत्किञ्चिद्धर्मत्वेन भगवति तस्य प्रतिपादन इति शङ्काव्युदासार्थं साक्षात्पदम् । तथा च । यथा दिव्यदुर्गादिमूर्तिः एव मूर्तिर्न्यरदारो देवानामेव, तथा केलिकलामूर्तिर्न्यरदारो भगवत्स्वाकारेणेति भावः । कलात्वनिरूपणेन सुरते विचित्रत्वं द्योतितम् । भगवतः

प्रत्येकाङ्गेषु दर्शनमात्रेण सुरतेच्छाजनकत्वस्य (आवश्यकत्वात् ।) सुरते च विविधबन्धकुश-लत्वेनैतन्मूर्तित्वनिरूपणम् । यद्वा । साक्षादित्यव्ययस्य प्रत्यक्षत्वमर्थः । तथा च प्रत्यक्षा केलिकलाखेव मूर्तिः स्वरूपं यस्य स तथा। दर्शनमात्रेण सुन्दरत्वेनैव ज्ञानं, न पूर्वोक्तस-मय इव रसिकशिरोमणित्वादिज्ञानमपीति भावः । निमित्तसप्तमी वा केलिकलाखित्यत्र । एवं रतिसामयिकं प्रियं वर्णयित्वा तदेव तद्रसपोषकरसान्तरवत्त्व(करणत्व)माह परिहासेति । परिहासपदेन हासजनकवचनान्युच्यन्ते । तेषु यो रसः तद्रूप एव वा, तस्यार्णवरूप इत्यर्थः । यदा भगवान्नर्मवचनानि वदति, तदैकस्यापि वचनस्य यो रसस्तत्रैव निमग्नास्वेव गोपीषु सतीषु, यदा भगवान् द्वितीयं तादृशमेव वदति, तदा पूर्वरसस्यैव पारमपश्यन्त्य एव पूर्वस्मादधिकोर्मिभिरिव द्वितीयसमुद्र इव ततोधिके निपतन्ति । एवमेवोत्तरोत्तरमिति हृदयम् । अत एव रसस्यैव प्राधान्यं वचनानां नेति ज्ञापनाय रसपदम् । वचनबहुत्वे रसाल्पत्वे च रसाभावात् । अत एव नयनभ्रुवादिभिरपि हास्यरसोत्पत्तिः । अन्यच्च । रसिकसिद्धान्ते हि शृङ्गार एव रसः । वीरादयस्तत्पोषकत्वेन एव रसा नान्यदा । यथा महाराजस्य सर्वोपकरणान्यपि सुवर्णमयान्येवान्यस्यैतस्यातुच्छत्वेन धातुत्वमेव न मन्यन्ते । एतदेव रसपदेनोच्यते । अन्यथास्मिन्नसे रसान्तरस्य रसाभासजनकत्वं स्यात् । अत एव रत्यां विमर्दित्वाभिप्रायेण 'केशिमथनमुदारं मधुसूदनमुदितमनोजमि'त्यादिभिर्जयदेवैः गीतगोविन्दे निरूपितम् । अन्यथा वीररसजनकं नाम कथं प्रयुञ्ज्यात् । अत एव रतिरणप्रयोगश्च । यद्वा । गोपीकृतो यो नर्मरसः अर्णवो यस्येति । यदा भगवान् गोप्यश्च अन्योन्यं नर्मवचनानि वदन्ति, तदा भगवान्नर्मणा ता जेतुं न शक्नोतीत्यर्थः । रसिकरीतिरेवैषा इति न कश्चिद्दोषः । स्वजयापेक्षयैवं रसोपि महानिति तथा। भगवति पूर्वं वृन्दावनचन्द्रत्व निरूपणेन सपदि परिहा-सरसस्यार्णवत्वनिरूपणेन अस्य प्रतिक्षणं वृद्धिः सूचिता । यद्वा । तद्विषयेर्णवरूप इत्यर्थः । पूर्वो-क्तार्थवैपरीत्यमत्र ज्ञातव्यम् । यद्वा । यदागमनमुक्त्वा सन्ध्यायां नागमत् प्रियः प्रातश्चागमत्तदा मानवत्यां राधायां नर्मवचनैस्तथाकरोतीति यथा तद्रसे एव निमग्ना सती विस्मृतपूर्वदुःख-मानादिर्बहिरप्यनुरक्ता भवतीति स्मृत्वेदमुक्तम् । अर्णवत्वं निरूपयन्त्या नर्मरसे प्रकटीभवन्ता एव भणित्वेनाभिप्रेताः । एवं तापापगमार्थं हास्ययुतरमणकर्तारं निरूप्य तदनन्तरमसञ्जातका-मपूर्तिर्भगवांस्तादृशीमेव राधां हस्ते धृत्वा विशेषक्रीडार्थमनयद्यमुनातीरप्रतिनिकुञ्जमरीरमच्चेति तत्स्मृत्वाह यमुनेति । यमुनासम्बन्ध्युपवनानां याः श्रेणयः पङ्क्तयः तासु विहारी क्रीडाकर्ते-त्यर्थः । क्रीडा द्विविधा जलस्थलभेदेन । तत्र केवलस्थललीला पूर्वोक्ता । अत्रोभयमप्युच्यते । तेन यमुनायां तदुपवनश्रेणिषु च तथेत्यर्थः । प्रतिवृक्षं रमणमिति ज्ञापनार्थं श्रेणीपदम् । विहारो यथेच्छमर्यादलीला । तेन व्रजन् तिष्ठन् शयान उपविष्टोपि लीलां कृतवानिति सूचितम् । यद्वा । यमुनाया उप समीपे यद्वनं तत्र या श्रेणयो गोपीनां तासु तया । यद्वा । पूर्वोक्तासु वेः कालस्य हारी हर्तेत्यर्थः । भगवत्सङ्गे सम्पूर्णा अपि रात्रयः क्षणार्धवन्नीयन्ते

४ प्रेमा॰

तदभावे युगप्रायाः । तत्र वस्तुतस्ता महत्य एव भगवत्सङ्गे तासामल्पत्वं यत्तद्भगवान् महान्तं कालं दूरीकरोतीति तासां बुद्धिः । तेनैवमुक्तम् । नन्वेवं स्वच्छन्दलीलायां क्रियमाणायां व्रजस्थाः कथं न जानन्तीति चेत्तत्राह । व्रजे सर्वस्मिन्नेव भगवानेव नागरोतिचतुरः । स्वच्छन्दलीलामपि कृत्वा स्वचातुर्येण तथा करोति यथा कोपि लक्षतेपि नेत्यर्थः । ज्ञाने तथा रसो न भवतीति तथा । इदमेव भागवते 'नासूयन्खलु कृष्णाये'ति श्लोके निरूपितम् । एतेनैव दिवापि यथेच्छं ताभिः सह भगवान्क्रीडतीति परमभाग्यवता ज्ञेयम् । यद्वा । व्रजपदेन तत्रस्था गोप्य एवोच्यन्ते । तथा च तास्वेव कामलीलायां बन्धादिभिरतिचतुर इत्यर्थः । अन्यत्र मुग्ध इवेति भावः । यद्वा । पूर्ववदन्यया कयाचित्सह यमुनोपवनप्रतिवृक्षं विहरन्यदि भगवान् दूरं गतो भविष्यति व्रजात्तदा कथमधुनैव प्राप्तिः इत्यत आह व्रजेति । व्रजनगरसम्बन्ध्येव, भगवानतो नान्यत्र गमिष्यतीत्यर्थः ॥ २२ ॥

तर्हि मिलिष्यत्येव कुतो महद्दुःखं क्रियते इत्यत आह **गोपाङ्गनेति** ।

**गोपाङ्गनाजनासक्तो वृन्दारण्यपुरन्दरः ।**
**आभीरनागरीप्राणनायकः कामशेखरः ॥ २३ ॥**

गोपसम्बन्धिन्यो या अङ्गनास्ता एव जना दासस्तास्वासक्त इत्यर्थः । तेन ताः परित्यज्य कथं मत्सन्निधावागमिष्यतीति भावः । ननु भवत्यपि तादृश्येव ततोधिकापि कथं तास्वेवासक्तो न भवत्यामिति शङ्का जनपदेन वारिता । ताः दासीभावं प्राप्ता निरभिमानास्तेन तासु तथा । मम तु तद्रसमदेनैव सञ्जातमानत्वात् न तथात्वमिति भावः । एतेनैव नन्वधुना भवत्यपि तादृश्येवेति शीघ्रमागमिष्यत्येवातो न दुःखं कर्तव्यमित्यपि समाधानवचनं परिहृतम् । ता बह्वयः, तत्रापि पुंभावं प्राप्ता रसाधिक्येन । 'रसाधिक्ये स्त्री पुंभावमापद्यत' इति वात्स्यायनः । तेन यदि भगवानागमिष्यत्यपि कदाचित्तदा ता न गन्तुं दास्यन्ति । भगवांश्च तद्वश इति ता अतिक्रम्य न गच्छतीति जनपदप्रयोक्त्या भावः । आसक्त्या स्वतोप्यशक्यस्तत्त्याग इति सूचितम् । ताभिः सहागमनपक्षे पूर्वोक्तं दूषणम् । स्वपत्यादिपरित्यागपूर्वकं दासीभावं प्राप्ता इत्यपि हेतुरासक्ताविति ज्ञापनार्थं गोपसम्बन्धनिरूपणम् । सर्वथाऽनासक्तौ परं महत्कष्टम् । कुत्रचिच्चेदासक्तस्तदा कदाचिन्मय्यप्यासक्तो भविष्यतीत्याशालतावलम्बनकदम्बायितमासक्तिनिरूपणम् । एवमुक्ते राधया मयैतादृशोपि कथञ्चिदाकार्यानेयस्त्वं निर्दिश कुत्रास्तीति कयाचिदुक्ते निर्दिशन्निवाह वृन्दारण्येति । वृन्दारण्यस्य वृन्दावनस्य पुरन्दर इन्द्रः स्वामीत्यर्थः । न हीन्द्रः कुत्रचिदप्रसिद्धो येन मत्कथनापेक्षात्र । वृन्दावनं गता त्वमेव ज्ञास्यसीति भावः । वृन्दावनोक्त्या स्थलनिर्देशोपि विशेषानुक्त्याऽनिर्देशोपीति चातुर्यमेव तस्याः । यथेन्द्रस्त्रैलोक्यस्वाम्यपि देवलोक एव तत्रापि स्वलोक एव तत्रत्याङ्गनाभिः सेवितो वर्तते । तथा भगवान् कोटिब्रह्माण्डपतिरपि गोकुल एव तत्रापि वृन्दावन एव तत्रापि स्वलोके स्त्रीप्रधाने

गोपीभिः सह क्रीडतीति हृदयम् । देवलोकमात्रे न दुःखं सुतरां इन्द्राधिष्ठिते, अतोऽनु
चितं मद्दुःखमत्र दर्शनादिदानेन दूरीकुरु इति भाव. । ननु तर्हि दुःखासम्भवः । सत्यम् ।
लौकिकवैदिकव्यवस्थैषा न तु तदतीतेति । तथाहि । स्वर्गे हि केवलपुण्योपार्जितं शरीरम् ।
तेन सुखाप्तिरेव, न दुःखाप्तिः । तत्साधनपापोपार्जितत्वाभावात् । अत्र च 'नराणां क्षीण-
पापानां कृष्णे भक्तिः प्रजायत' इति वचनेन पापमात्राभावे भगवद्भक्तिलाभात् पापकृतं
नैतद्दुःखम् । दुःखत्वेन पापजन्यत्वसाधने चोपाधिरुक्त एव । एवं सुखमप्यत्र ज्ञेयम् ।
अतोस्मिन्नलौकिकतमे प्रमेयमार्गे सुखं दुःखं च भगवत्सङ्गविरहाभ्यामेव भवतीति तत्त्वम् ।
अत एव दशमस्कन्धे अन्तर्गृहगतकथानिरूपणप्रस्तावे भगवत्सङ्गममगवद्विरहजनितसुख-
दुःखयोः कर्माजन्यत्वमित्येव निरूपितम् । एतदेव च श्रीभागवते 'आसामहो चरणरेणु-
जुषामि'ति श्लोके 'स्वजनमार्यपथं च हित्वे'ति पदाभ्यां निरूपितम् । अत एव तादृशजन्म-
प्रार्थनापीत्यलं विस्तरेण । नन्वेतावदनुसन्धाने तादृशस्य विरहे कथं प्राणस्थितिरित्यत्राह आ-
भीरेति । आभीरसम्बन्धि यन्नगरं गोकुलं तत्सम्बन्धिन्यो या स्त्रियोतिचतुरास्तासां ये प्राणा-
स्तेषां नायको रक्षक इत्यर्थः । तेन तदिच्छयैव परं प्राणस्थितिः । न तु मत्प्रयत्नेनेति भावः ।
गोकुलवासिनां सर्वेषां राजयन्नियामकोऽस्माकं तु प्राणानामपीति स्वोत्कर्षः सूचितः ।
तेनान्तरङ्गत्वमुक्तम् । तथा च यथा देशरक्षको राजा तत्र स्थित्वा तं देशं पालयति, तथा
भगवान् प्राणेषु स्थितः स्वयं प्राणान्पातीत्यर्थः सम्पद्यते । यद्वा । यथा पूर्वोक्तान्नय-
तीति तथा । एतेन भगवता स्वस्मिन् मत्प्राणा नीता स्वयं चास्मद्धृदय एव तिष्ठ-
तीति न बहिरुद्गमः प्राणानामिति भावः सूचितः । यद्वा । सेपद्रोषदैन्यमाह । आभीरेति
पूर्ववत् । एतेन यः प्राणहर्ता स कथं तत्स्थितिसाधनं सङ्गं करिष्यतीति भावः
सूचितः । अत एव नागरीत्वकथनम् । लोके हि चतुररक्षितं वस्तु न प्राप्यते ।
अत्र च तादृशीनामेव तत्राप्यन्तःस्थितप्राणान्नयतीति भगवत्यपि चातुर्यं सूचि-
तम् । अत एव श्रीभागवते ये दुर्गस्थास्त एव कठिनाः तत्रापि जलदुर्गस्थास्तत्रापि
साधुजाताः प्रभवस्तत्रापि प्रकाशवति काले शीताद्युपद्रवरहिते स्थिता इति देशकालस्वरू-
पादिभिरप्यशक्यचौर्यात् पुरुषात् तदुदरवर्तिसर्वस्वनेतुरस्सदादिसाधारणगोपीप्राणहरणे
किमाश्चर्यमिति 'शरदुदाशये साधुजातसत्सरसिजोदरश्रीमुषादृशा' इति ताभिरेव निरू-
पितम् । यद्वा । त्वमपि तद्वन एव वर्तसे, त्वयि कथं न तथेत्यत आह । आभीरसम्बन्धि-
न्यो याश्चतुराः तासामेव प्राणरक्षको न तु मत्सदृशीनामचतुराणां, यतो न प्राणबाधाया-
मप्यागच्छतीति । स्वयं चतुरापि दुःखेनैव दीना एवमुवाच । पूर्वोक्तप्राणश्चासौ तन्नायकश्च
इति कर्मधारयो वा । यद्वा । पूर्वोक्तनामनिरूपणेन तत्रत्यपूर्वसङ्गस्मरणेनातिप्राणबाधायां
शीघ्रमागत्य पालय, त्वमेव मत्प्राणपाता, नान्य इत्यभिप्रायेण चेदं नामोक्तम् । एवमुक्तेप्य-
तिपीडायां कामेन तु क्रमेणान्तिमावस्था शीघ्रमेव भवति तेनापि दुःखनिवृत्तिः, भगवान्

तामपि न करोति, न वा मिलतीति कामादपि लोकोत्तररीतिरित्याह **कामेति** । कामादपि शेखरभूतोऽलौकिकरीतिरित्यर्थः । यद्वा । नन्वनङ्गसेनारूपत्वाद्भवतीनां प्राणरक्षामनङ्ग एव करिष्यति तावत्पर्यन्तमित्यत आह **कामेति** । कामस्यापि शेखरोत्युच्चैःस्थितो नियामक इत्यर्थः । तेन भगवता अहं परिगृहीता, न तद्वशगेत्यर्थः । यद्वा । सर्वस्य लोकस्य शेखरभूतः कामः सर्वेषां चक्षूरागादिमरणान्तावस्थाः करोति तथा भगवान् कामस्यापि शेखरः तस्यापि तावदवस्थासम्पादक इत्यर्थः । यद्वा । प्रथमासक्तिहेतुभूतं नामाह । **कामेति** पूर्ववत् । कोटिकन्दर्पलावण्य इत्यर्थः । एतादृशसौन्दर्येण वशीकृतमानसा किं करोमीति भावः । यद्वा । कामः कामना मनोरथ इति यावत् । तथा च तस्यापि शेखरोतिदूरे स्थितोऽविषय इत्यर्थः । मनोरथे ह्यसम्भावितमपि भासते वस्तु, भगवत्सौन्दर्यानन्दादिकं तु मनोरथस्यापि न विषयोऽत्यलौकिकत्वादिति । तथा चोक्तं श्रीभागवते 'मनोरथान्तं ययुरि'ति । अत्र यद्युमीहिर्ज्ञेयः । यद्वा । कामः तृतीयः पुरुषार्थः । कामक्रीडेति यावत् । तस्यां शेखरोऽतिविदग्ध इत्यर्थः ॥ २३ ॥

एवं स्थलक्रीडायामुच्यमानायां जलक्रीडास्मरणे यथा यदा कदाचित् गृहकृत्येनान्येन वा निरोधेन दिवा भगवत्समीपे गमनं नाभूत्तदा स्नानादिव्याजेन पारं गमिष्यामीति व्याजेन वा प्रियं यमुनातीरगतं सख्यादिभिरवधार्य यमुनामगमत्तत्र चैतदर्थमेव तत्कृतनाविकत्वमिपस्य दर्शनाश्लेषादिनातिचिरविरहतापमपाकरोत् तथाधुनापि तापसत्त्वेन तदपगमार्थं पूर्वानुभूतमेवाह समनोरथम् । **यमुनानाविक** इति ।

**यमुनानाविको गोपीपारावारकृतोद्यमः ।**
**राधावरुन्धनरतः कदम्बवनमन्दिरः ॥ २४ ॥**

नौकोपजीवी नाविक इत्युच्यते । एतेन यथा विरहावस्था तासां तथा भगवतोपि इति सूचितम् । घट्टविशेषोक्तिरहितेन सामान्ययमुनानिरूपणेनैकान्ते कृतसङ्केते यमुनामात्र एव विनोदार्थमेव तथा करोतीति सूचितम् । अथवा । पूर्वनामोक्तलीलास्मरणेऽतिपीडायां कथं चैतद्दुःखसमुद्रं तरिष्यामीति चिन्तयाना तत्साधनीभूतनौकास्मृतिमात्र एव स्मृतपूर्वानुभूतनौकासुखा त्वमेवैतत्पारनेता नान्य इत्यभिप्रायेण च नाविकत्वनिरूपणं कृतवती । एवं पूर्वमेकाकिना भगवता जातं ससङ्गमुक्त्वा तदनन्तरमिदं ज्ञात्वा सर्वा गोप्यः समागतास्ताभिरपि लीलां कृतवानिति तत्स्मृत्वाह **गोपीति** । गोपीसम्बन्धी यत्पारावारं परपारमर्वाक्पारं च तद्विषये कृत उद्यमः आरम्भो येनेति योजना । इदमत्राकूतम् । याः समागतास्तन्मध्ये काश्चन प्रथमागता भगवद्गोपीसम्बन्धानभिज्ञाः सन्ति । तेन ता यथा न जानन्ति तथा भगवान् मिलत्विसेतासां हृदयं ज्ञात्वा भगवान् प्रथमं पारकरणमेवोद्यमार्थं कृतवान् । पश्चाद्यमुनाया मध्ये नीतास्ता अपि स्वलीलावशाः स्वकीयाः कृत्वा तथैव यथेच्छं रेमे इति भावः । अत एवोद्यममात्रनिरूपणम्, न

तु पारोत्तारणस्यापि। आयासेनारम्भ उद्यम उच्यते। तेन या नारोढुं शक्तास्ता स्वयं क्रोडे कृत्वाप्यारोहयतीति सूचितम्। एतेनैतल्लीलायामेव भरो नान्यत्रेत्युक्तं भवति। यद्वा। कासाञ्चित् परपारे सङ्केतस्थलं कासाञ्चिदर्वाक् पारे। तथा च गोपीसम्बन्धि यत्पारावारं तद्विषये तद्गमनार्थं कृतः स येन स तथा। एवं कष्टसाध्यपारगमनोद्यमनिरूपणेन भगवानेतासामर्थेऽशक्यमपि करोतीति सूचितम्। एतेन तदैतादृशो भगवान् कथमधुना नेति सोपालम्भं दैन्यं प्रकटितं भवति। यद्वा। गोपीरूपो यः पारावारः समुद्रः तदर्थं कृत उद्यमोऽवतरणादिकं येनेत्यर्थः। तदुक्तम्। 'व्रजवनौकसां व्यक्तिरङ्ग ते वृजिनहन्त्री'ति। 'व्यक्तं भवान् व्रजजनार्तिहरोऽभिजात' इत्यादिश्च। समुद्रत्वं रसांशे। एवं सर्वाभिष्टकर्तृत्वं भगवति निरूप्य ततोपि स्वस्मिन्नत्यनुरागमाह राधेति। राधाया यदवरुन्धनं रोधस्तस्मिन् रत इत्यर्थः। इदानीं केवलं लीलाभिनिविष्टत्वेन स्वानुसन्धानाभावादन्यसा इव स्वनामाप्युक्तवती। अन्यथा मदवरुन्धनेत्युक्तं स्यात्। इदं च यदा कदाचिद्भगवन्मिलनार्थमेव दिवसे भगवदर्थं पक्वान्नशिखरिणीनिःपीडितदधिशर्करासुश्रुतदुग्धताम्बूलचन्दनमालादिकं रहसि गृहीत्वा गोरसविक्रयमिषेण वने भगवन्निकटे कतिपयसखीभिः सहागता तदा गोपसहितो नाथस्तेयामज्ञानार्थं दानमिषेण सर्वा एवाकारितवांस्ततोन्याभ्यः किञ्चित्स्वेदं गृहीत्वा ताः प्रस्थाप्य यं बहु नयति तेन बहु ददाति चेत्तदा प्रस्थापनीयेति तेषु वदन् दर्शय किं वर्तत इतीमां वदति। न देयं च मया किञ्चिन्न दर्शनीयं न वा देयमिति समुदायाभिप्रायेण वदन्ती सस्मितं प्रियवदनमपश्यत्तत्स्मृत्वोक्तवती। रतत्वं तदेकपरत्वम्। तथा चैतदर्थमेव तत्र तिष्ठतीत्यर्थः। तदनन्तरं मयैकान्त इयं शोधनीया यथा ददाति तावद्भवन्तो गाश्चारयन्त्विति तानुक्त्वेमां निबिडकदम्बनिकुञ्जं नीत्वा तया सह तत्सर्वं भुक्त्वा यथेच्छं तत्रैव रेमे तदाह कदम्बेति। कदम्बवनमेव मन्दिरं यस्य स तथा। बहुसंस्कारसंस्कृतं नानाविधचित्रं मन्दिरमुच्यते। तेनात्रापि विविधपुष्पदलैर्मालाभिश्च तल्पासनवितानद्वारतोरणभूमिकादयः प्रातरेव प्रेषिताभिः स्वसखीभिर्विरचिता इति सूचितम्॥ २४॥

तदनन्तरं दूतिभिरत्र भगवन्तं ज्ञात्वा येन केनचिद्व्याजेन सर्वास्तत्र समागताः ततस्ता अपि रेमे इति तत्स्मृत्वाह क्रमेण।

**व्रजयोषित्सदाहृद्यो गोपीलोचनतारकः।**
**जीवनानन्दरसिकः पूर्णानन्दकुतूहलः॥ २५॥**

व्रजयापिदिति सामान्योक्त्या सर्वा एव समागता इति ज्ञेयम्। तथा च व्रजयोषितां सदा हृत्सम्बन्धी तत्र स्थित्वा सर्वदा रमणकर्तेत्यर्थः। यद्वा। एतासां सर्वदा हृद्यः प्रिय इत्यर्थः। तेन भोगानन्तरं तादृश्यार्तिरस्ति न वेति शङ्का परिहृता। एताः सर्वदा हृद्या यस्येति वा। तेनान्योन्यं तयात्वेन कदाचिदपि न वियोग इति सूचितम्। हृत्सम्बन्धीति व्याख्यानेपि बहुव्रीहिर्ज्ञेयः। तेन विपरीतमुक्तं भवति। तेन महासौरतं द्योतितम्।

तत्र कदाचित्कौतुकार्थं तासां स्वस्य चेच्छया तासामेव नीव्यादिपरिधानेन तद्वेषमपि करोतीति ज्ञापनार्थं व्रजयोषिदिति पदमुक्त्वा मध्ये सदेत्युक्तम् । अन्यथा प्रथममेवोक्तं स्यात् । एतद्वेषस्यातिगोप्यत्वेनैव निरूपणम् । एवं भगवतो गोपीनां चान्योन्यमान्तरमुक्त्वा सर्वदैव रमणे हेतु वदन् बाह्यमप्याह गोपीलोचनतारकः । गोपीनां सर्वासामेव यानि लोचनानि तेषां तारकारूप इत्यर्थः । यथा सत्यपि गोलके तारकाच्छादनं चेत्स्यात्, न दृश्येत, तथा भगवदसन्निधाने चेत्स्यात्तासां तदा स्वावलोकनमपि न स्यादित्यर्थः । अत एव सर्वदा तथेति भावः । उपलक्षणमेतत् । सर्वेन्द्रियविषयेष्वप्येवमेव । यद्वा । गोप्यो लोचनतारका यस्येति । यद्वा । गोपीलोचनानां तारक उद्धारक इत्यर्थः । विरहे लोचनानां जलसमुद्र इव निमग्नत्वेन भगवत्सम्बन्ध एव तत्सम्बन्धराहित्येन तत्पारमिव गच्छतीति तथा । एतेन न हि कोपि निमज्जन्तं पश्यन् स्वयं समर्थः तदेकपरश्च नोद्धरति । क्षणविलम्बे एव तन्नाशात् । तेन मदुपेक्षा नोचितेति भावः सूचितः । यद्वा । पूर्वं स्वरूपनिरूपणे आननस्येन्दुत्वोक्त्या तस्य च तारकासाहित्यनियमेनास्येन्दोरेतान्येव तारकारूपाणीत्याह । गोपीलोचनानि तारका यस्येति । एतेन सर्वदा दर्शनं सूचितम् । ननु यद्येव तदा भवती कथं तिष्ठति भगवान् वा कथं तिष्ठतीत्याशङ्कायामाह जीवनानन्दरसिकः । जीवनरूप आनन्दो यस्य स तथा । स चासौ रसिकश्च इति कर्मधारयः । अथवा । तादृश आनन्दे रसिको रसज्ञ इत्यर्थः । तथा च भगवदीयानन्दस्यैव जीवनरूपत्वेन पूर्ववत्तस्यान्तःस्थितत्वेन मज्जीवनमात्रं न तु सुखं दुःखाभावो वा । सद्भावस्य बलिष्ठत्वात् । तदुक्तम् । जीवति परमिह तव रतिकलयेति । यथा च निरहसन्तप्यमानायाः प्रियदीर्लम्बेन चात्यातुरायास्ततः प्रियसङ्गमे महान् रसो न तथा सार्वदिकेपि तस्मिन्निति तद्रसविशेषार्थं रसिकत्वेन भगवतः स्थितिरित्युभयस्थितौ हेतुद्वयमुक्तम् । यद्यपि भगवत्सङ्गमः सार्वदिकोपि तथैव तथापि रसमार्गत्वेन हि भगवता रसमार्गमर्यादा स्थाप्यते । सा च तादृश्येवेति तयोक्तम् । यद्वा । स्थलक्रीडामुक्त्वा जलक्रीडामाह जीवनेति । जीवनं जलं तत्सम्बन्धी य आनन्दो जलक्रीडारूपस्तस्मिन् रसिक इत्यर्थः । यद्वा । जीवनेन जलेनानन्दो येषां ते मत्स्यास्तद्वद्रसिको रसज्ञः । यथा ते जलं विना क्षणमपि न तिष्ठन्ति तथेमं रसं विना भगवान् न तिष्ठतीत्यर्थः । अत एवागमिष्यतीत्याशया तिष्ठामीति भावः । एवं क्रीडामुक्त्वा तदनन्तरं भगवान् उपविश्य तिष्ठन् वा या लीलां कृतवान् ताः स्मृत्वाह पूर्णानन्दकुतूहलः । स्थलजलक्रीडादिना पूर्ण आनन्दो येषु गोपीजनेषु तेषु कुतूहलं क्रीडाविशेषो यस्य स तथा । एतच्च क्रीडाद्वयानन्तरं कन्दुकाकारान् पुष्पनिर्मितान् भगवान् गोपीषु प्रक्षिपत् । ताश्च भगवति । तेन महानानन्दः सदाम उत्पन्नस्तस्स्मृत्योक्तम् । यद्वा । अवज्ञापूर्वकसोपहासलीला कुतूहलम् । तथा च पूर्णानन्दः कुतूहलेपि यस्येत्यर्थः । यद्वा । पूर्ण आनन्दो अस्मास्विति ज्ञानयुक्ता ज्ञानिनः पूर्णानन्दपदेनोच्यन्ते । तथा च ते कुतूहले उपहासे यस्येत्यर्थः । किमेतेक्षि मुद्रयन्ति किंवा शून्यं ध्यायन्तीनि गोपीभिः मद भगवाञ्ज्ञानुपद्मतीति तथा ॥ २५ ॥

एवं सर्वाधिकरसदातृत्वं निरूप्य क्रीडानन्तरमुपविष्टं स्मृत्वाह गोपिकेति ।

**गोपिकाकुचकस्तूरीपङ्किलः केलिलालसः ।**
**अलक्षितकुटीरस्थो राधासर्वस्वसम्पुटः ॥ २६ ॥**

गोपिकानां यः कुचसम्बन्धिनी कस्तूरी तया पङ्किल इत्यर्थः । तस्याः पङ्कत्वं महा सौरते श्रमजलकणैः । एतेन भगवत्यपि श्रमः सूचितः । तथा च तद्व्याजाङ्गो यदा तासां सदस्युपविष्टोऽभवत्तदा सौन्दर्यमनिर्वचनीयमनुभूतमिति एवमुक्तवती । यद्वा । यदा सन्ध्यायामागमनमुक्त्वान्यत्र रात्रिं गमयित्वा प्रातरागत्य केनचिद्व्याजेन रात्रिरमणं गोपयतः उरःस्थलं दृष्ट्वा तन्निश्चितवती तत्स्मृत्वेदमुक्तम् । यद्वा । गोपिकाकुचाः कस्तूरीपङ्किला येनेत्यर्थः । पूर्वं कस्तूरीपत्ररेखा अनार्द्रा स्थिता, ततो भगवता रमणे कृते श्रमजलकणैरार्द्रतायामाश्लेषादिना तथात्वम् । अथवा, सर्वाङ्गे भगवानेव तादृशस्तेनासत्यगोपीरमणं सूचितं भवति । एतादृशबहुरमणेप्येकरस एवेत्याह केलिलालसः । केलिषु कामकेलिषु लालस इच्छापूर्तिरहित इत्यर्थः । यो हि यत्र लालसायुक्तः स तमर्थं यथाकथञ्चित्साधयति । तथा भगवानस्मिन्नत्र इत्यर्थः । तेन सर्वदा तद्भाववत्त्वेन तन्मयत्ववत्त्वेन च सर्वदा रसदायीति सूचितम् । तासां सार्वदिको भावो भगवतोपित्सदाह्वय इति नात्रैवोक्तः । अतो न रसाभावशङ्का । एतच्च कदाचिद्बहुरमणानन्तरमपि स्वस्मिन्मानवत्या बहुधा चाटुकारान् कृत्वा मानयित्वा पुनर्बहुधा रेमे तत्स्मृत्वोक्तवती । यद्वा । बहुधा रमणे कृतेपि प्रियस्वरूपदर्शनादेव पूर्वस्मादप्यधिका लालसोत्पद्यत इति स्वानुभूतं स्मृत्वाह । तेषु लालसा यस्मात्स तथेति । ननु शङ्कायां सत्यां न रसोत्पत्तिः । अत्र चैवं स्वच्छन्दरमणे कोपि चेदागच्छेज्जानीयाद्वा तदा कथं स्यादित्यत आह अलक्षितकुटीरस्थ । न लक्षितान्यपि केनापि कुतो दृष्टानि एतादृशानि यानि कुटीराणि लतागृहाणि तेषु तिष्ठतीति तथा । तेन कियत्कालमपश्यन्तो यद्यन्वेषमाणा आगच्छन्ति तदापि न जानन्तीति न रसविच्छेदः कदापीति सूचितम् । यस्तुतः तेषां पार्श्वस्थबुद्धिरेव सततमतो नानुपपन्नं किञ्चित् । तथा चोक्तं 'मन्यमाना स्वपार्श्वस्थानि'त्यादि । यद्वा । यत्र परितो लतागृहाणि मध्ये चोपवेशनस्थानम् । तत्र सर्वा आगच्छन्तु भवत्यो मयाप्यागम्यते इत्युक्त्वा तत्पूर्वमेव तत्र गत्वा एकस्मिन् गृहे गुप्तोऽतिष्ठत्, ततः सर्वा एतदजानन्त्यस्तत्रागत्य स्वरहःकथामन्योन्यं कुर्वाणा भगवान् यदा मिलिष्यति तदैव कर्तव्यं मयेति ब्रुवाणा निर्धारितभगवदागमनप्रोद्यदुत्साहा अमर्यादं जिजहुः । ततः कियत्कालानन्तरं भगवता लीलया सीत्कारविशेषे असाधारणे कृते तत्क्षणमेव सर्वासु तूष्णीं भूतासु चकितनयनासु नाथोऽत्र कुत्रचिदस्ति पश्यन्त्विति शनैर्ब्रुवाणासु मध्ये अकस्मान्निकुञ्जान्निःसृतो यदा तदा सव्रीडहासपूर्वको भगवदवलोकनादिजनितो ( भावविशेषसमभूत् ) नाथे समागते एव ( करिष्यामीतिवत् त्वमेव ) करिष्यसीति वदन् यथोक्तं तास्वाक्षेपादिकं कुर्वतो महत्सुखमनुभूतमिति तत्स्मृत्वाह । अलक्षितश्चासौ कुटीरस्थश्चेति ।

यद्वा । यदा कदाचित्स्वय निकुञ्जे तल्पादिक कुर्वाणासीत् तदा तत्पश्चाद्भागे मिलिता काञ्चन गोपीं प्रत्यङ्गीकृतावधानतया भगवानवदत् । त्व पुलिन याहि मया तत्रैवागन्तव्य नान्यत्र गन्तव्यमिति । एतच्छ्रुत्वान्त स्थैव अब्रवीन्मया तल्पादिक विरचितमस्ति यावत्सा सर्वं करोति तावत्कृपा कृत्वात्र भगवानागमिष्यतीति काकुस्वरेणैवोक्तवती तच्छ्रुत्वा तदा चकित इव तत्रागत्य शनैश्चाटुकारान् कुर्वाणस्तत्रैव याहि मन्मनसि न विषाद , कौतुकार्थं पर मयोक्तमिति ब्रुवाणा बलादाश्लेषादिना वशीकृत्य तत्रैव बहुधा रेमे इति पूर्वानुभूत स्मृत्वाह । न लक्षिता कुटीरस्था येन स तथेति । तेन तदा स्वनिर्बन्धेनैव मदर्थमेव तथा कृतमधुना मन्निर्बन्धेन तया कुर्विति भाव सूचित । ननु कृतरमणो बहुस्त्रीवल्लभ प्रियो भवत्या कदाचिदागमिष्यत्येव तावद्धैर्यं कार्यमिति ब्रुवाणा सखीमाह **राधासर्वस्वसम्पुटः** । यद्वा, अलक्षित कुटीर राधाया एव तस्य तथात्वे हेतुमाह **राधेति** । राधाया यत्सर्वस्व तस्य सम्पुट समुदितराधासर्वस्वरूप इत्यर्थ । यद्वा । यथा कृपण सर्वस्व यत्किञ्चित्सुवर्णादिक सम्पुटे धृत्वा प्राणेभ्योप्यन्तरङ्ग कृत्वा सर्वदा रक्षति क्षणमप्यदृष्ट्वा च व्याकुलीभवति, तथा राधाया यत्सर्वस्व प्राणेन्द्रियान्त करणशरीरधनयौवनसौन्दर्यादिक तत्सर्वं भगवति समर्पितमिति वाक्यार्थ । एतादृशी धीरा कथ भवत्यदृष्टेति भाव । अत एव कुटीरस्यालक्षितत्वकरणमित्यपि । अत्रापि पूर्ववदेव स्वनामग्रहणम् । सम्पुटपदेन राधैव जानाति । तथात्वेन नान्योपीति सूचितम् । यद्वा । राधा सर्वस्वसम्पुटरूपा यस्येत्युक्तार्थवैपरीत्यम् ॥ २६ ॥

एव स्वरमणमुक्त्वा 'कृत्वा तावन्तमात्मान'मिति प्रकारेण रमण तदैव कृत्वोपवेशन स्थाने समागत्य सर्वाभि सहोपविष्टोऽभवत् तत्क्रमेण स्मृत्वाह वल्लवीति ।

**वल्लवीवदनाम्भोजमधुमत्तमधुव्रतः ।**
**निगूढरसविद्गोपीचित्ताह्लादककाननः ॥ २७ ॥**

वल्लवीना यानि वदनाम्भोजानि तत्सम्बन्धीनि यानि मधूनि लावण्यामृतरसान्यधरामृतानि च तैर्मत्तोङ्गीकृततदन्यविस्मृति एतादृशमधुव्रतो भ्रमर इत्यर्थ । मत्तमधुव्रतत्वोक्त्या तासा सदसि उपविश्य ताभि सह गान करोतीति सूचितम् । मत्तस्य तस्य झङ्कारध्वन्यनियमात् । वदनानामम्भोजत्वनिरूपणेन तासा तदेकभोग्यत्व सूचितम् । यो मध्वेव व्रतयति नान्यत्स्म तथा । मत्तश्च नान्य गणयति । भगवति च तत्त्वनिरूपणेन लावण्याधरामृतादेश्च मधुत्वनिरूपणेन भगवतो गोपीभोगैकपरत्वम् । एतद्रसेनैव लक्ष्म्याद्यगणना च सूचिता । अत एव मर्यादातिक्रमोपि एतेनैव । ननु यद्येतादृशी प्रिया भवती तदा भवतीं विहायाधुनान्यत्र कथमस्तीति शङ्का परिहृता । भ्रमरस्यैकत्रास्थिते । परन्तु मम सर्वदा सरसत्वादागमिष्यत्येवेति महदवलम्बनेन जीवामीति भाव । अन्यत्र स्थितौ हेतुरुक्त एव । शीतलत्वसुरभित्वकोमलत्वातिसरसत्वादीन्यम्भोजपदेन सूचितानि । यद्वा । लोचनचुम्बन-

जनितनीलिमाधरमारात् दृष्ट्वा पूर्वं कदाचित् भ्रमरभ्रमस्तत्रासीद् गोपीमुखाम्भोजमधुमत्तोपि रसाधिक्येन भगवदधरमागत इति तत्स्मृत्वेदमुक्तम् । तादृशो मधुव्रतो यस्मिन्निति । अत्रा-मोदस्य तदनुगतिजनितसुखातिशयस्य च मधुव्रतत्व ज्ञेयम् । यद्वा । मधुपदेन साधारण-कमलमधूच्यते । तथा च वल्लवीवदनाम्भोजे मधुमत्तमधुव्रता यस्मादित्यर्थः । रतान्ते पद्मि-नीनां पद्मगन्धो भवतीति तथा । तन्मत्तमधुनतानामप्यत्रागमनेनात्र तेभ्योधिकरसादिमत्वं सूचितम् । धर्मान्तरेणापि मधुव्रतत्वमाह **निगूढरसविदिति** । नितरां गूढ. गुप्तो यो रसस्त-द्विद् ज्ञाता । यथा भ्रमरः कमलनालपत्रादिकं विहाय अन्तर्गुप्तं मकरन्दमेव पिबति जाना-तीति, तथा भगवानत्रैव यन्थे कृतेऽप रसः प्रादुर्भविष्यति, अत्रैव नखदशनदानेऽप रसो भविष्यतीति सर्वं जानातीत्यर्थः । तेन महारसभोक्तृत्वदातृत्वे सूचिते । ननु गोकुलेश्वरस्य सर्वभयरहितस्यैव गुप्ततया रमणे को हेतुस्तत्राह **निगूढेति** । भावप्रधानोय, निगूढत्वे यो रसस्तज्ज्ञाता इत्यर्थः । यथा गुप्ततया रमणे रस', न तथा प्रकटतया रमणे इति इममर्थं जानाति तेन तथा करोतीति भाव. । यद्वा । यदा कदाचिद् गोपीवेषं कृत्वा उपरि महता वस्त्रेण मुखकमलमावृत्य तासां मध्ये उपविष्टे भगवति केचन गोपाला भगवानत्रास्तीति पृच्छन्तः समागताः ततश्चात्रान्यः पुरुष एव नास्तीति सर्वाभिरुत्तरं दत्तमिति तत्स्मृत्वाह **निगूढेति** । नितरां गूढस्ते यथा न जानन्ति तथा गोपीवेशानुभूतरसज्ञाता चेति । **गोपीति** । गोपी-एव रतिकर्तारं निरूप्य तदनन्तरं जातपुष्पावचयक्रीडा स्मृत्वाह चित्ताना माह्लादकर्तृ कानन वन यस्येत्यर्थः । तत्र प्रतिवृक्षं कोमलदलप्रसूनलतागृहजलम्नी-डाहृदावरणानि भगवता सहैकान्ते स्थातु योग्यानि दृष्ट्वा आह्लादविशेष उत्पद्यत इति तथा । यद्वा । निगूढेत्यादेकं नाम । तदा पूर्वं गोपीविशेषणम् । भगवत्पक्षोक्तार्था अत्रा-प्यनुसन्धेयाः । यद्वा । गोप्यश्चित्ते यस्य स तथा तस्याह्लादकं कानन यस्येत्यर्थ. । एतच्च यदा प्रथममेव भगवद्गोप्योरन्योन्यमासक्तिस्तदा भगवान् क्वेद रमणं कर्तव्यमिति विचार-यन् वृन्दावनं दृष्ट्वा सन्तुष्टो जात इति तत्स्मृत्वोक्तम् । तदुक्तं 'वृन्दावनं गोवर्धनं यमुना-पुलिनानि च । वीक्ष्यासीदुत्तमा प्रीती राममाधवयोर्नृपे'ति । **कलानिधिरिति** पाठे षडु-त्रीहिः । कामकलानिधिरिति वार्थ. । तस्मिन्निन्दुरिति वार्थं । गोपीचित्ताह्लादे कलानि-धिश्चन्द्र इत्यर्थ. ॥ २७ ॥

तदनन्तर स्वय गोपिकाभि. सह क्रमेण कालिन्दीपुलिनमासमन्तात् दृष्ट्वा वने निकु-ञ्जेषु क्रीडा कर्तव्या ततोऽत्रागत्य सर्वाभि सह्योपवेष्टव्य जलक्रीडा च कर्तव्या इति वने क्रीडाकरणेपि तासां नान्योन्यदर्शनादिकं पुलिने तदपि भविष्यतीति विचार्यात्यानन्दितो जातस्तत्स्मृत्वाह कालिन्दीति ।

**कालिन्दीपुलिनानन्दी क्रीडाताण्डवपण्डितः ।**
**आभीरिकानवानङ्गरङ्गभूमिसुधाकरः ॥ २८ ॥**

कलिं घतीति कलिन्द-, तस्य कन्या कालिन्दी । तेन तासु अन्योन्य सापत्न्यभावा-

भावः सूचितः । तस्याः यत्पुलिनं तस्मिन् य आनन्दः पूर्वोक्तस्तद्वानित्यर्थः । यद्वा । कालिन्दीपुलिनसम्बन्ध्यानन्दो रासरूपस्तद्वानिति तस्मिन्नानन्दित्वं यस्मादिति भावप्रधानो वा । तदनन्तरमेकस्वरूपेण बह्वीनां प्रत्येकस्वरूपेणापि विलासं कृतवांस्तदाह **क्रीडाताण्डवपण्डितः** । क्रीडारूपं यत्ताण्डवं तस्मिन्पण्डितोऽतिचतुर इत्यर्थः । ताण्डवं हि नियमरहितं नृत्यम् । क्रीडायां तत्त्वनिरूपणेन काञ्चिद्रमयति, अर्धरतामेव काञ्चित् त्यक्त्वान्यां परिरभ्यान्यां चुम्बति, काञ्चिन्निकटस्थां त्यक्त्वा दूरस्थां गृह्णातीत्यादि सूचितम् । अस्य रसशास्त्रोक्तमपि पण्डितत्वोक्त्यैवमपि तथैव करोति यथोत्तरोत्तरं रसाधिक्यं भवतीति सूचितम् । तदनन्तरं सर्वासु रेमे इत्याह **आभीरिकानवानङ्गरङ्गभूमिसुधाकरः** । आभीरिकारूपा या नवानङ्गस्य नूतनकामस्य रङ्गभूमयः तत्सम्बन्धी सुधाकरश्चन्द्रमाः, यया यया क्रीडया ताः प्रकाशिता आनन्दिता भवन्ति तत्तत्कर्तेत्यर्थः । नवत्वमस्य प्रसिद्धकामाद्भिन्नस्याधिदैविकत्वेन भगवत एव तथात्वेनैतास्वेव प्रकटत्वेन हरदग्धस्यैव चाग्नेवोद्भवेन चेति । व्रजानङ्गनवाङ्कुर इति नाम्नि सहेतुनिरूपण विस्तृतमस्माभिः । अत एव नवानङ्गपदम् । रणभूमिर्विलासभूमिश्च रङ्गभूमिरुच्यते । तेनैतासु रतिकौशलं सूचितम् । यद्वा । नवेति भूमिविशेषणम् । तथा चाभीरिकाणां नवा नूतना या अनङ्गरङ्गभूमय उरःप्रदेशास्तत्सम्बन्धिनी या सुधेव सुधा कामरस इति यावत् । तस्या आकरः स्थानम् । लौकिकश्चन्द्रो लौकिकसुधाकरत्वेन तथोच्यते । अयं त्वेतत्सुधाकरत्वेन तथेत्यर्थः । करपक्षेपि तथा । नवत्वेन कैशोरयौवनमध्यसमयः सूचितः । तेन पूर्वमचतुरा अपि भगवद्दर्शनमात्रेणैव रसशास्त्रनिपुणा भवन्तीत्युक्तम् । अत एवाभीरिकापदं पूर्वमुक्तम् । अग्रे विदग्धेति वदिष्यति । यद्वा । सामान्यक्रीडामुक्त्वा तल्पादिषु विशेषक्रीडामाह **आभीरिकेति** । तासां नवानङ्गसम्बन्धिन्यो या रङ्गभूमयः पुष्पादिशय्यास्तासु सुधाकरो दर्शनाक्षेपचुम्बनरमणनखादिमयूखैरसिलतापहारीत्यर्थः । एतेनान्धकारशङ्काप्रदीपाद्यपेक्षा च निरस्ता । यद्वा । पूर्वोक्तसुधायां सुधानिमित्तं करो यस्येति गोपीवक्षसि दत्तकरं स्मृत्वोक्तम् ॥ २८ ॥

एवं भगवच्चातुर्ये उच्यमाने तदैव प्रकाशितं स्वचातुर्यं स्मृत्वाह विदग्धेति ।

**विदग्धगोपवनिताचित्ताकूतविनोदकृत् ।**
**नानोपायनपाणिस्थगोपनारीगणावृतः ॥ २९ ॥**

विदग्धा अतिचतुराः सर्वांशे या गोपवनितास्तासां चित्ते आकूता मनोरथत्वेन पूर्वं विचारिता ये विनोदास्तत्कृत् तत्कारीत्यर्थः । दिवसे भगवान् रात्रौ यदा मिलिष्यति तदा एवं बन्धादिकं हास्यं च करिष्याम इति विचारितमात्रतत्तत्कर्तृत्वनिरूपणेन भगवांस्तासामर्थे कथनमपि नापेक्षत इति सूचितम् । तेनातिमरमत्वं रमणस्य सूचितम् । विदग्धत्वं भगवतैव न स्वत इति ज्ञापनार्थं गोपसम्बन्धनिरूपणम् । सर्वदा गोचारणरतानाम-

नतिचतुरत्वात् । यद्वा । तादृग्विनोदा भगवत एव । तथा च तादृश्यो वनिताश्चित्ताकूत-विनोदकृतो यस्य स तथा । अपूर्वभाव आर्षः । यदा कदाचिद् भगवान् राधामाकार्यान्य-व्यासङ्गं कारयित्वा चुम्बनं करिष्यामीति तदा समागतामङ्कमारोप्यापृच्छत् कः समाचार इति । तदा राधा भगवच्चुम्बनमकस्मात् कृत्वा अय समाचार इत्यवदत् तदा महान् विनोदो जात इति तत्स्मृत्वेदमुक्तम् । अत एव विनोदपदं दत्तम् । पूर्वोक्तार्थे एतद्वैपरीत्य यदा जातमासीत्तत्स्मृत्वेदमुक्तं ज्ञेयम् । एवमेकान्ते कतिपयगोपीभिः सह रममाणे भगव-त्यन्या गोप्यो नायमेताभिरेव प्रेषिताभिः दूतीभिः पुलिनमागत ज्ञात्वा विविधवस्तूनि गृहीत्वा तत्राजग्मुस्तत्स्मृत्वाह **नानोपायनपाणिस्थगोपनारीगणावृतः** । यद्वा । सर्वाभिरेव गोपीभिरेव रमणानन्तर श्रान्त चिर मुक्त च ज्ञात्वा प्रिय शीघ्रमेव काश्चन गत्वा सर्वां सामग्री गृहीत्वा जग्मुस्तत्स्मृत्वाह **नाने**ति । नानाविधानि यान्युपायनानि शिखरिणीपक्वान्नघृत-दुग्धादीन्यतिदृश्यानि ताम्बूलचन्दनकस्तूर्यादिसुगन्धद्रव्यवस्त्रमालापुष्पादीनि च । तानि पाणिस्थानि यासामेतादृश्यो या गोप्यस्तासां ये गणा. समूहाः तैरावृत इति तथा । उपायनानां पाणिस्थत्वोक्त्या तासामागमनानन्तर रमणस्थल त्यक्त्वा यमुनानिकटेऽतिप्रशस्ते निनिडतरुच्छाये सर्वाभिः सहोपवेशनयोग्यस्थल अग्रिमलीलार्थमेताभिर्वेष्टितोऽचलत् यदा स समय. सूचितः । गतानेव तथात्वात् । अन्यथा सामग्री तत्रैव धृता स्यात् । ताभिरा-वृतत्वेन मध्ये लीलागतिः सूच्यते । तदुक्तम् । 'ततश्च कृष्णोपवने जलस्थले'त्यादि पद्येन । भगवदर्थमेता लौकिकवैदिकमर्यादामपि न मन्यन्ते । सर्वं त्यक्त्वा भजन्यत एव भगवानपि लोकवेदातीत फल ददातीति ज्ञापनाय गोपसम्बन्धनिरूपणम् । सर्वा अप्येवविधा इति ज्ञा-पनाय यूथभेदज्ञापनाय वा गणपदम् ॥ २९ ॥

एव गतिं निरूप्य तत्र गत्वा यत्कृतवांस्तदाह **वाञ्छे**ति ।

**वाञ्छाकल्पतरुः कामकलारसशिरोमणिः ।**

**कन्दर्पकोटिलावण्यः कोटीन्दुललितद्युतिः ॥ ३० ॥**

वाञ्छायां कल्पतरुस्तत्राय भावः । तत्र कालिन्दीमुत्फुल्लकमलां कूजन्मयूरकलहंस-सारसां मध्ये नलिनीतटस्थविविधप्रसूने रमणार्थं विरचितस्थलीभिव भान्तीमतिधीरसमीरसे-वितां दृष्ट्वा जलक्रीडेच्छाभूत् । तदा भगवान् जलक्रीडयैव श्रम दूरीकर्तु तां क्रीडां कृतवां-स्तत्र च यथा यथा कामना तासां स्थिता तथैव कृतवानिति । तदुक्तम् । 'ताभिर्युत. श्रम-मपोहितुमि'ति । वाञ्छापदेन ताभिरनुक्तमपि कृतवानिति सूचितम् । कल्पतरुत्वेन सर्व-मनायासेनैव करोतीति कुर्वन्नपि अनिकृत एवेति सूचितम् । यथा स देवैकभोग्यस्तथा एत-देकभोग्यत्व भगवत. सूचितम् । एव सामान्यतो जलक्रीडामुक्त्वा तत्रैव कृत रमण निरू-पयति **कामकलारसशिरोमणिः** । कामरूपा या कला तत्सम्बन्धी यो रसस्तस्मिन् शिरोमणिः सर्वश्रेष्ठो न कोप्येव जानातीत्यर्थः । जले हि रति. कठिना, तेन लौकिकालौकि-

कानुभावं करोतीति तथा । कलात्वेन विचित्रत्वं द्योतितम् । कामकलारसानां शिरोमणिभूतस्तादृशरसरूप एव इति वार्थं । उत्कर्षस्य सजातीय एव योग्यत्वात् । तेन सर्वदा पूर्ण रसत्वं सूचितम् । यद्वा । स रसः शिरोमणिभूतो येन स तथा । कामरसस्य पूर्वं पातहेतुत्वेन मर्यादायामतितुच्छत्वादधुनैव भगवता ब्रह्मानन्दमोक्षादेरप्यधिककरणात्तथा । एवं जलक्रीडानन्तरं तीरे समागत्याङ्गप्रोञ्छनानन्तरं वस्त्रादिकं परिधाय सर्वाभिः सह भोजनं चकार, तदनन्तरं ताम्बूलं भक्षयन्नुष्णीषकञ्चुकादिकं परिधाय तत्कृतासने उपविष्टः । ततस्तास्तिलकं कृत्वा कपोलतलमारभ्य सर्वाङ्गे चन्दनं लिप्त्वा मालां परिधाप्य भगवते स्वयमप्यन्योन्यं शृङ्गारतिलकाञ्जनादिकं कृत्वा पुष्पमालां परिधाय परितो भगवत उपविष्टास्तन्मध्ये गतस्य शोभां स्मृत्वाह **कन्दर्पकोटिलावण्य** इति । कोटीत्युपलक्षणं, असंख्यकन्दर्पेभ्योऽप्यधिकं लावण्यं यस्येत्यर्थः । तथा चोक्तम् । 'चकास गोपीपरिषद्गतो हरिस्त्रैलोक्यलक्ष्म्यैकपदं वपुर्दधदि'ति । एवं सौन्दर्ये निरूप्यमाणे रासपूर्वकालीनप्राकट्यानन्तरं पुलिने कृतासनोपविष्ट इति शोभां स्मृत्वा यथा तदा तत्रोपविश्य अङ्गसङ्गवाण्यादिभिः पूर्वविरहतापमपाकरोत्तथैवाधुनापि तापमपाकरोत्विति भावेन तत्कालीनामेव शोभामाह **कोटीन्दुललितद्युति**रिति । कोटीति पूर्ववत् । तथा चासंख्येन्दुभ्योऽपि ललिता मनोहरा द्युतिर्यस्येत्यर्थः । तेन निर्मलत्वान्यप्रभानभिभाव्यत्वसर्वदैकरूपत्वगोपीवदनविकासकत्वादीनि सूचितानि । अत एव भगवदग्रे लीलोपयोगी न लौकिकश्चन्द्र उपयुज्यते । तुच्छप्रभस्योद्दीपनादावप्रयोजकत्वात् । किन्त्वलौकिको भगवन्मनोधिष्ठाता लीलोदयसमानकालोदयो लीलोपरतिसमानकालोपरमो मध्याकाशावधिमानगतिरस्त(स)मयरहित इत्येतत्सर्वं 'तदोडुराजे'ति श्लोके निरूपितम् । किञ्च । तासां रात्रीणां तस्या लीलायाश्च नित्यत्वेन का प्रत्याशास्येत्यलं विस्तरेण । द्युतेस्तथात्वनिरूपणेनाङ्गसङ्गं विनापि प्रसरद्भगवत्प्रभासम्बन्धादेव तापापगम इति सूचितम् । यस्य प्रभैवैतादृशी तस्याङ्गे किं वक्तव्यमिति भावः । यद्वा । रासे स्वनिकटस्थभगवत एव दर्शनेनान्यस्वरूपाणां रसार्थं भगवता प्रदर्शितत्वेन च तत्र तत्र प्रभामेवापश्यत् ता स्वनिकटस्थस्यैव भगवतोऽमन्यत् । तेन तत्स्मृत्वाह कोटीति ॥ ३० ॥

एतादृशकरणे कोऽभिप्रायस्तत्राह ।

> **जगत्त्रयमनोमोहकरो मन्मथमन्मथः ।**
> **गोपसीमन्तिनीशश्वद्भावापेक्षापरायणः ॥ ३१ ॥**

जगत्त्रयपदेन तत्र स्थिताः स्त्रिय एवोच्यन्ते । ता एव जगति सन्ति । नान्ये येषां नाथ मोहः । तेनान्येषामसत्त्वं मन्यन्ती ता एव जगत्पदेनोक्तवती । तथा च । तासां मनमो मोहनं वशीकरणमिति यावत् । तदेव परममुद्देश्यं यस्य स तथा । यथैवैतद्भवति तथैव लीला करोतीत्यर्थः । तथा चोक्तम् । 'भजते तादृशीः क्रीडा याः श्रुत्वा तत्परो भवे'दिति । तया च मोहनमात्रस्योद्देश्यत्वेन तस्य च सम्पन्नत्वेनातः परं भक्तानपि किमर्थं चालयिष्यतीति

भावः । अथ स्त्रियस्तु कामेन स्वभावत एव पुरुषस्य वशे भवन्तीति किमाधिक्य भगवतीति
चेत्तनाह **मन्मथमन्मथः** । मन्मथस्तु न कस्यापि वशे भवति किन्तु तस्य वशे सर्वे ।
सोप्यत्र वशे भवतीत्यर्थः । अधिकं किं वक्तव्यमिति भावः । यद्वा । रासपूर्वसामयिक-
विरहे जडेषु चेतनकार्यं भगवद्दर्शनाज्ञानं मत्वा सर्वत्र प्रश्नकरणं तथैव लीलादिकरणं स्फु-
रत्याह एतादृक्स्वभाव एव भगवानित्याशयेन जगदिति । जगत्त्रयेपि यो मनोमोहो गोपीनां
स एव परं उद्देश्यो यस्य स तथेति । तदनन्तरं क्रमेण प्रादुर्भूतं स्मृत्वा आह
**मन्मथमन्मथ** इति । तत्राप्युक्तम् । 'साक्षान्मन्मथमन्मथ' इति । तत्त्वेन प्रादुर्भावस्याय
भावः । निरहृसोपमर्दित्वेन स्वभावत एवातिकठिनस्य प्रभावेन कामादिभावस्य तिरोहित-
त्वाद्भगवद्दर्शनमात्रेण न तदुद्भवः । तेन स्वयमेव तद्रूपेण प्रकटः । तथा च तद्रूपे च हृदया-
रूढे तदुद्भवोवश्यं भवति, तदेव च रसः । अन्यथा रसाभासः स्यात् । अत एव श्रीभाग-
वते 'काचित्कराम्बुजमि'त्यादिना विरहजतापत्यागमुक्त्वापि पुनर्भगवतो वाचः श्रुत्वा विरह-
जताप जहुरित्युक्तम् । स च तापे सत्येव सङ्गच्छत इत्यलं विस्तरेण । नन्वेमपि कुतस्तत्राह
**गोपेति** । गोपसीमन्तिन्याः शश्वत् सर्वदा यो भावः कामभावः अपेक्षा च, एते एव
परायणे उद्देश्ये यस्येत्यर्थः । तेन तथा करोतीति भावः । यद्वा । तासां यः शश्वद्भावः
सर्वदा निकटस्थितिरपेक्षा च इत्यग्रे पूर्ववत् । गोपसीमन्तिनीसम्बन्धिनी या शश्वद्भावस्य
निकटस्थितेरपेक्षा तस्याः परायणो विषय इति वार्थः । किञ्च ॥ ३१ ॥
निकटस्थितेरपेक्षा तस्याः परायणो विषय इति वार्थः । किञ्च ॥ ३१ ॥ इत्याह **नवीनेति** ।

भगवानपि तादृशधर्मवानेव येन क्षणमपि न त्यक्तुं शक्त इत्याह **नवीनेति** ।

**नवीनमधुरस्नेहः प्रेयसीप्रेमसञ्चयः ।**
**गोपीमनोरथाक्रान्तो नाट्यलीलाविशारदः ॥ ३२ ॥**

नवीनः सर्वदा नूतनः मधुरश्च स्नेहो यस्येत्यर्थः । नूतनो हि प्रचुरो भवति । भगव-
दीयस्य च सर्वदैव नूतनत्वेन सदा तथात्वम् । मधुरत्वेनासक्तिहेतुता । नवत्वेनान्यासक्ति-
विस्मारकत्वमत्यभिलाषा च सूचिता । यद्वा । नवीनेषु नूतनेष्वेव मधुरः स्नेहो यस्येत्यति-
दुःखेन ईषत्कुपितेवमवदत् । एवं भगवन्निष्ठं तादृशं धर्मं निरूप्य स्वनिष्ठं निरूपयति **प्रेय-
सीति** । प्रेयसीनां भगवतः प्रियाणां गोपीनां प्रेम्णः सञ्चयो यत्र यथा कुतश्चित्प्राप्तं वस्तु
एकत्र गुप्ततया स्थाप्यते तथा । पुत्रवित्तगेहदेहादिस्थितस्नेहो भगवति यथा न कोप्यन्यो
जानाति तथा समर्पित इत्यर्थः । वस्तुतस्तु सर्वा अपि गोप्यो भगवत्प्राकट्यमत्र ज्ञात्वा
सर्वाशां विहाय विगाढभावेन हृदय एव प्रेम्णः सञ्चयमकुर्वन् स एवाधुना प्रकटो भगवा-
नित्यर्थः । अत एव श्रीभागवते 'चिरात्त्वयि धृतामाशामि'त्युक्तमेताभिरेव । प्रेमसञ्चय-
रूपभगवत्प्रेयसीत्वनिरूपणेनैतासामपि भगवत्प्रेमसञ्चयरूपत्वं सूचितम् । यद्वा । कदाचिद्भग-
वान् राधागमिष्यतीति पुष्पचन्दनाञ्जननीवीकस्तूरीविविधभक्ष्यताम्बूलमालादिकं निकुञ्जे
सगृह्य प्रतीक्षामकरोत्ततः समागतायां राधायां शृङ्गारं विधाय रेमे इति तत्स्मृत्वाह

**प्रेयसी**ति । प्रेयसीनां प्रेम्णा सञ्चयो यस्य स तथेति । एवं बाह्यमुक्त्वैतत्कालीनमेवान्तरं स्मृत्वाह **गोपी**ति । गोपीविषयको यो मनोरथ एवमेवं करिष्यामीति तेनाक्रान्तो व्याप्तोऽन्यभावरहित इत्यर्थः । यद्वा । ननु यदि भगवान् भक्तगृहे गतो भविष्यति तदा कथं प्राप्तिरित्यत आह । गोपीनामेव मनोरथेनाक्रान्त इति । तेनास्मद्व्यतिरिक्तभावस्य न तत्र प्रवेश इति भावः । एतेनेदं स्वरूपं तासामेवार्थ इति सूचितम् । अत एव श्रीभागवते 'श्रुतिभिर्विमृग्यामि'त्युक्तम् । तदुक्तम् । 'तासामाविरभूदि'ति । 'एवं मदर्थे'त्यादिनापीतीद-मुदितं परमभाग्यवत्यैव विश्वसनीयमित्यलं लिखनेन । यद्वा । यदा पूर्वमेव दर्शनानन्तरं स्वयं भगवदाश्लेषादिमनोरथव्याप्त्या विस्मृतगेहादिरासीत्तत्स्मृत्वाह । गोपीमनोरथाक्रान्ता येन स त-थेति । गोपीमनोरथेनाक्रान्ता यस्मिन्निति विपरीतं वा स्मृत्वोक्तम् । एवं मनोरथ उच्यमाने पूर्वं यदा कदाचित्स्वमनोरथं भगवान् स्वनृत्यं दर्शयित्वा पूरितवांस्तत्स्मृत्वाह **नाट्ये**ति । नाट्य-लीलायां विशारदः अतिचतुर इत्यर्थः । निरर्थकतत्थ्यादिशब्दाद् नृत्यमपि सरसमिति ज्ञापनाय लीलात्वनिरूपणम् । यद्वा । नाट्यपदेन शास्त्रीयशुद्धमार्ग उच्यते । लीलापदेन देशीयनृत्य-मुच्यते । तेन नाट्ये लीलायां च तथेत्यर्थः । यद्वा । कदाचिद्राधया भगवदग्रे क्रियमाणे नृत्ये प्रतिपदं साधु साध्विति सशिरःकम्पं सानुरागेक्षणं प्रशंसते भगवानतिप्रमोदेनाकार्या-श्लेपमपि करोति तत्स्मृत्वोक्तम् । पूर्वोक्ते विशारदोऽतिरसिकज्ञाता इति । तत्र तादृश्यो यस्मादिति वा । भगवान् स्वयं नृत्यं कृत्वा तथा शिक्षयतीति तथा ॥ ३२ ॥

एवं भगवन्नृत्यं सरसं निरूप्य तत्सरसतायां हेतुं वदंस्तत्कालीनमेवार्थं निरूपयति ।

**प्रत्यङ्गरभसावेशप्रमदाप्राणवल्लभः ।**
**रासोल्लासमदोन्मत्तो राधिकारतिलम्पटः ॥ ३३ ॥**

नृत्ये प्रतिपदाभिनयप्रदर्शनेच्छाजनित उत्साहविशेषो रभसपदेनोच्यते । तथा च प्रत्यङ्गं रभसावेशो यस्य स तथेत्यर्थः । तेन सर्वत्राभिनये ताद्रूप्यमेव भवतीति सूचितम् । अत एवातिसरसतेति भावः । तेनेदं देशीयनृत्यं निरूपितं भवति । तेनारम्भे शुद्धमार्गीयं पश्चाद्देशीयं नृत्यमिति परिस्थितिः सूचिता । एवं द्रष्टृत्वेन काश्चिदग्रे उपवेश्य नृत्यं कुर्वन्नतिरसोद्गमे राधया सह नृत्यं चकार तत्स्मृत्वाह **प्रमदे**ति । प्रकृष्टो मदो यस्याः तस्याः प्राणेभ्योपि वल्लभः प्रिय इत्यर्थः । यथा भगवान् रभसयुक्तस्त-थैव राधापीति ज्ञापनाय प्रमदापदम् । उभयोस्तुल्यतायामेव सरसतेति तथा । यद्वा । प्रमदा प्राणवल्लभा यस्य स तथेति । यद्वा । प्रत्यङ्गेत्यादिना रमणसामयिक एव भगवानुच्यते । तदा प्राणपदं यत्परमपि ज्ञेयमिति दिक् । यद्वा । रामपूर्वकालान्तर्धानानन्तरप्राकट्यानन्तरं को वेदाधुनापि कुत्रचिद्भगवानागच्छेत्तदान्वेषणार्थमपि प्राणान् स्थापयिष्याम इति वियोगभीत्या प्राणेभ्योप्यन्तः स्थापयन्तीति स्मृत्वेदमुक्तम् । स्थापने सामर्थ्यसूचनाय प्रमदेतिपदम् । एवं स्वप्रमदात्वं निरूप्य भगवतोपि तथात्वं निरूपयति **रासोल्लास-**

राधायाश्च पर्यायेण जयानन्तरं स्वस्वजयानुरूपा या लीला पूर्वोक्तरूपा तत्रोभयानुरूपतत्रतत्करणात् परितः श्रान्तो जात इति तथा । यद्यप्येवं स्वस्यापि श्रमस्तथापि रसाधिक्ये स्त्री पुम्भावमापद्यत इति स्वश्रममन्यमानयोक्तं, तेन विपरीतमपि सूचितम् । यद्वा । तत्र परिश्रान्ताप्यपरिश्रान्ता येन स तथा । तदुक्तम् । 'तासामतिविहारेणे'ति श्लोकेन । 'तत्कररुहस्पर्शप्रमोदा' इति च । 'ताभिर्युतः श्रममपोहितुं श्रान्तो वाऽविशदि'ति च । यद्यपि नायकश्रमो नायकाया नेष्टस्तथापि भगवानेवमप्यतिमोहनः सुखद इत्यभिप्रायेण निरूपितम् । तथा चोक्तम् । 'उत्सवं श्रमरुचापि दृशीनामुन्नयन्नि'ति । यत्र तदपि श्रमे एवं तत्रैतादृशश्रमे किं वक्तव्यमिति भावः । अत्र रसिकेन स्वयमेवानेकेऽर्था ज्ञेया इत्यलं विस्तरेण । श्रमकार्यमाह स्वेदाङ्कुरचिताननः । स्वेदस्य प्रस्वेदस्याङ्कुराः सूक्ष्मजलकणास्तैश्चितं व्याप्तमाननं यस्य स तथा । तस्मिन् समये मुखारविन्दमेव दृष्टिपथमिति प्रथमं तत्रैवं तदुद्भवेन च मुखकमलमेवोक्तम् । तेन मुक्ताफलैरिव तैरतिशोभा सूचिता । अङ्कुरोक्त्या क्षणानन्तरं त एव किञ्चित्पुष्टा भवन्तीति सूचितम् । एतादृशस्य स्पर्शचुम्बनादिहेतुत्वेन विभावकत्वं सूचितं भवति । तादृशान्याननानि गोपीनां यस्मादिति वा । क्रमेण रतान्तसामयिकं नाथं निरूपयति गोपिकाङ्कालस इति । गोपिकाया अङ्के अलस इव अलसो निष्पन्दं क्षणमात्रं तत्र स्थित इत्यर्थः । तत्र निसर्गात्सुखमिति न्यायेन तदा सुखातिशयात्तथा । यद्वा । पूर्वमत्रैव रतान्तमुक्त्वा पश्चाद्बहिरुपवेशनस्थाने समागत्य गोपिकाङ्क एवोपविष्टस्तदुपदृष्ट्य एव । तदुक्तम् 'गोपिकाङ्कालस' इति नाम्ना । यद्वा । उरवोङ्कास्ते यथा शिथिलगतयस्तथा भगवानपि तदेत्याह गोपिकाङ्कवत्तथेति । एतेन तास्तान्यथा बलाद्बालयन्ति तथा नाथमपि बलात् स्वक्रोडे समारूढं स्वगृहमेकान्तं नीत्वाभ्यङ्गादिकं कुर्वन्तीति सूचितम् । ततः श्रमापगममाह श्रीमन्मलयानिलसेवित इति । श्रीमान् यो मलयसम्बन्ध्यनिलस्तेन सेवित इत्यर्थः । सेवनेन मान्द्यम्, मलयसम्बन्धेन सौरभ्यं, श्रीमत्पदेन शैत्यं च सूचितम् । श्रीः लक्ष्मीः तद्वानित्यर्थः । अस्य कालिन्दीसूक्ष्मकणविभावकत्वादयो धनम् । तेनैव तादृशश्रमेऽपि तथात्वेनालौकिकसामर्थ्यं सूचितम् । यद्वा । अत्र लक्ष्मीः प्राप्तस्यावसरा रतानन्तरमपि व्यजनाद्यर्थमपि ममोपयोगो भवेदिति तदागत्य वृक्षान्तरा स्थित्वा भयेन लज्जया चात्मानं गोपयन्त्यपश्यत् । तत्रापि स्वानुपयोगं दृष्ट्वा तत्रैव पश्यन्त्येव दक्षिणस्यां दिशि स्थिता । तदा मलयानिलत्वेन तत एव समागच्छंस्तन्मुखामोदविशेषमपि गृहीत्वायाति तदा मध्ये श्रीमान् भवतीत्यत उक्तं श्रीमदिति । अत एव श्रीभागवते 'श्रयत इन्दिरा' इत्युक्तम् । अत एव भगवता गोपिकाङ्कस्थिता तदुपविष्टेमेन च गोपिकानन्दयत्वं श्रियै ज्ञापितमित्यलं विस्तरेण । एतद्यामोक्तिसमानकालमेव भगवान् प्रकटो जात इति ज्ञेयम् । अत एव तदातिशयशोभां भगवतो दृष्ट्वा श्रीमदित्युक्तम् । पूर्वानुसन्धानेन त्वरागमनेऽतिदिव्यविनयश्रमकणानां च सत्त्वेन मलयानिलमेवेति इत्युक्तम् । तेन कर्मधारयो ज्ञेयः ॥ ३४ ॥

अत एव फलं जातमिति ज्ञापनार्थमेव फलश्रुतिमाह इत्येवमिति ।

**इत्येवं प्राणनाथस्य प्रेमामृतरसायनम् ।**
**यः पठेच्छ्रावयेद्वापि स प्रेम्णि प्रमिलेद्ध्रुवम् ॥ ३८ ॥**

इतीति समाप्तौ । एवमूत पूर्वोक्तरूप यत्तत्प्रेमरूपो योमृतरसस्तस्सायन स्थानमित्यर्थः । यद्वा । प्रेमसम्बन्धि अमृतरूप **रसायनं** महौषध प्रेमकृतव्यथायां व्यथानिवृत्त्युपायमित्यर्थः । अमृतत्वेनानुमवदशायामपि सुखद नान्यवद्दुःखदमिति सूचितम् । उक्तावपि हेतुरुक्तोनेन । भगवन्निष्ठ हेतुमाह **प्राणनाथस्येति** । प्राणानां स एव नाथो रक्षकत्वादिसर्वधर्मवान् । तेन प्राणरक्षार्थमेवैतन्निरूपितमिति सूचितम् । यद्वा । एव पूर्वोक्त प्राणनाथस्य प्रेमरूपमित्यर्थः । अन्त स्थित प्रेमैवैतद्रूपेणैव प्रकटमिति हृदयम् । तद्विशेपणममृतेति । अमृतस्य रसानां योऽयन स्थानमित्यर्थः । निपयमुक्त्वा विधेय वदन्नेव फलमाह **यः पठेदिति** । सामान्योक्त्या नात्र वर्णादिनियम इति सूचितम् । वेत्यनादरे । तेन श्रवण कीर्तन स्मरण वा भवतु । किन्त्वैतन्निष्ठत्वमेवापेक्षत इति भावार्थ. सूचित. । अपिशब्देन समुच्चयेपि तथात्व सूचितम् । स प्रेमरूपत्वादस्य प्रेम्णि भगवत्प्रेम्णि प्रकर्षेण मिलेन्मिलति । तद्वान् भवतीत्यर्थः । पुल्लिङ्गनिर्देश. स्वातन्त्र्यपरः । तेन स्त्रियामपि तथा । प्रकर्षेण प्रेमौत्कट्य येन क्षणमपि न वियोग सहते । यथा गोपीनां तथेति । अविनाशिफल भवतीत्याह ध्रुवमिति । क्रियाविशेपणम् । सत्यमिति वा । नात्र सन्देह इति भाव. ।

तदेतत्सर्वस्व निजहृदि निगूढ व्रजवधूप्रसादश्रीभाजि प्रणयिरसिकानामतिमुदे ।
प्रयत्नेन स्वेन प्रकटितमजस्र मयि तरां व्रजश्रीसौभाग्य झटिति विदधातु प्रियतमम् ॥१॥

यद्यप्यतिगोप्यत्वादनुचितमेतत्प्रकाशन नूनम् ।
महदौषधमनुपानाश्रितमेव तथेति तद्रचितम् ॥ २ ॥

प्रार्थये रसिका' स्वैर पश्यन्त्विदमहर्निशम् ।
एतद्रसानभिज्ञस्तु मा द्राक्षीदपि वैष्णवः ॥ ३ ॥

इति वृन्दावनाम्भोधिचन्द्रदासार्थिना कृतम् ।
प्रेमामृतौषधस्येद विठ्ठलेनानुपानकम् ॥ ४ ॥

**इति श्रीविठ्ठलेश्वरविरचितं प्रेमामृतविवरणं सम्पूर्णम् ।**
**श्रीकृष्णार्पणमस्तु ।**

---

श्रीकृष्णाय नमः ।

# परिवृढाष्टकम् ।

## श्रीगोपेश्वरकृतविवरणसमेतम् ।

---

नत्वा श्रीवल्लभश्रीविठ्ठलेशाचार्यकेशवान् ।
यदृच्छातस्त्विमं ग्रन्थं विवृणोमि यथा स्फुटम् ॥ १ ॥

'रसो वै स' इति श्रुते. सच्चिदानन्दस्य भगवतो रसरूपत्वात्तत्र दुष्टैः स्वकर्मभिर्यदृच्छया वान्यथाभाव. स्यात्तन्निवृत्तये भक्तेरावश्यकत्वाज्जनशिक्षाकृते कृष्णभक्तिकृत. श्रीमदाचार्यास्तदानिर्भावं प्रार्थयन्ति कलिन्दोद्भूताया इत्यादि ।

**कलिन्दोद्भूतायास्तटमनुचरन्तीं पशुपजां**
**रहस्येकां दृष्ट्वा नवसुभगवक्षोजयुगलाम् ।**
**दृढं नीवीग्रन्थिं श्लथयति मृगाक्ष्या हठतरं**
**रतिप्रादुर्भावो भवतु सततं श्रीपरिवृढे ॥ १ ॥**

श्रीपरिवृढे रतिप्रादुर्भाव. सतत भवतु, श्रिया सहित परिवृढः प्रभुरित्यर्थः, परब्रह्मेति यावत् । तथा च पाणिनिसूत्र 'प्रभौ परिवृढ' इति । 'वृह वृहि वृद्धौ' । अत्रोक्तस्य वृभावो ढत्व च हकारलोपश्च निपात्यते, इदितोस्य नलोपश्च । स्वरूप तु समासौ वक्ष्यन्ति 'रतिपतिपितु'रित्यनेन पदेन । परित उद्युक्त इति योगे, श्रिया परिवृढ इति च । 'वृहू उद्यमने' उद्यमनमर्थाल्लीलार्थं, सामान्यतो लीलामुक्त्वा विशेषतो लीलामेनामेव वा विशेषणेनाहु., अथवेदानीं स प्रभु. कीदृशो दृष्ट इत्यत आहु , अथवा कीदृशे रतिप्रादुर्भावः प्रार्थनीय इत्यत आहु. कलिन्देत्यादिना । इय विविधलीलोपयोगिनी, सा चोत्पत्तिमारभ्यैवेति ज्ञापयितु कलिन्दोद्भूतपदम् । इय हि सयोगसामग्री । तटमनुचरन्तीमिति । 'लक्षणेत्थम्भूते'त्यनेन कर्मप्रवचनीयत्वमनो । चरन्तीं गच्छन्तीं विरहमनुभवन्तीं चेत्यर्थ. । 'चर गतिभक्षणयो' । विरहसामग्रीमाहु. पशुपजामिति । पशुपो वृषभानु. । एतेन पशवस्तस्य सन्तीति ज्ञापितम् । पशूना चारणे[1] विरहो भवतीति तथा । पशुपत्वस्मरणेनैव विरह. । तज्जाता राधामिति विशेष्याध्याहार. । मध्ये विरहसामग्री रसस्य पूर्णत्व ख्यापयति नवसुभगवक्षोजयुगलामिति । किञ्च, नवमागन्तुक शोभन परब्रह्मसारूप्यसमानाधिकरण भगमैश्वर्यादि यस्या. सा नवसुभगा। तदुक्त यमुनाष्टकटीकाया-

---

१ चारणे इति पाठ ।

'मष्टविधैश्वर्य भगवता कालिन्द्यै दत्त'मिति । वक्षसि वक्षोनिमित्तं वक्षोरमणनिमित्तं च जायत इति वक्षोजा श्रीः सा युगला युगलनिरूपिका यस्याः सा वक्षोजयुगला । सा चासौ वक्षोजयुगला च नवसुभगवक्षोजयुगला ताम् । 'पुंवत्कर्मधारये'ति पुंवद्भावः । तदुक्तं 'श्रीयंत्पदाम्बुजे'त्यादि, 'वक्षः श्रियैकरमण'मित्यादि च, 'कमलजासपत्नीति' च । अन्यच्च, नवानां स्नेहेन क्रियमाणानां श्रवणादीनां शोभनं भगं रयिः प्रकाशिका । तदुक्तं यमुनाष्टपद्यां 'कुरु भक्तिराय'मिति । वक्षसो जा जेत्री 'जस्तु जेतरी'त्येकाक्षरी नाममाला । भक्त्या वक्षोजेयस्त्वासिरिति 'श्रीर्यत्पदाम्बुजरज' इत्यस्य सुबोधिन्यां स्थितम् । युगलेति च पूर्ववत् । अपरञ्च, नवसुभगवक्षोजयोर्युगस्य भगवत्करयुगस्य लं चलनं यस्याः सा ताम् । तदुक्तं 'राधिकाहृदयगतद्वयकरकमल' इति । अन्यच्च, न वसु धनं, तच्च गङ्गोपासकानाम् । सैवेति वसुर्गङ्गा भगं मुक्तिर्वक्षोजा लक्ष्मीर्युगला असमत्वेन युगलनिरूपिका यस्याः सा, अद्वितीयेति यावत्, ताम् । तदुक्तं 'यया चरणपद्मजा मुररिपोः प्रियंभावुके'ति, 'हरेर्यदनुसेवया भवति सौख्यमामोक्षत' इति च । 'इयं तव कथाधिका सकलगोपिकासङ्गमे'त्यादि च । श्रीपरिवृढसारूप्यस्य श्रवणादर्शनाच्चैवमपि समासाः साधवः । 'सततमतिशयितहरिभावनाजाततत्सारूप्यगदितनिजहृदय' इति श्रीयमुनायाः सारूप्यश्रवणात् आधिदैविकादिभावेन तस्यास्त्रैविध्यात् । अन्यनिश्चये तु नैवं समासाः कर्तव्याः । एवञ्च, आधिदैविकायाः श्रीपरिवृढसारूप्यमाध्यात्मिकायास्तु हरिसारूप्यमाधिभौतिकायास्तु नीलवर्णेन सारूप्यमिति प्रतिभाति । दृढमिति सामान्ये नपुंसकम्, दृढभक्तिरितिवत् । मृगाक्ष्याः श्रीराधायाः । लक्षणं चैतत्तस्याः । दृढतरमित्यत्र कलिन्दोद्भूताया इत्यादिविशेषणचतुष्टयं हेतुः, अतस्तरयुक्तः । स्वयं पश्यन्तीति श्लथयतीति वर्तमानार्थकशतुः प्रयोगः । भाषितपुंस्कादितिपुंवद्भावः । वक्षोजौ कुचाविति भाषितपुंस्कत्वम् । रासस्त्रीभावपूरितविग्रहत्वाद्भक्तिवाचकं रतिपदमुक्तम् । रतेर्नित्यत्वात् प्रादुर्भावपदम् । प्रार्थनायां लोट् । इयमावश्यकी । 'भक्त्यभावे तु तीरस्थ' इत्यादिवाक्यात् रत्यतिरिक्तं तु न प्रार्थनीयम् । 'प्रार्थिते वा ततः किं स्या'दित्यादिवाक्यात् ॥१॥

सखीवृन्दे मिथो गुणानुवादे लीलासहितप्रियतमप्राकट्येनान्तर्ये भावविशेषा उत्पन्ने, न ते सङ्गमेऽपीति विरह आन्तरस्य परमफलत्वात् श्लोकद्वयेन प्रार्थयन्ति समायात इत्यादि ।

समायाते त्वस्मिन् सुरनिलयसाम्यं गतवति
व्रजे वैशिष्ट्यं यो निजपदगताज्जाङ्कुशयवैः ।
अकार्षीत्तस्मिन् मे यदुकुलसमुद्रासितमणौ
रतिप्रादुर्भावो भवतु सततं श्रीपरिवृढे ॥ २ ॥
हिहींहीहींकारान् प्रतिपदगु घने कुर्वति सदा
नमद्ब्रह्मेशेन्द्रप्रभृतिषु च मौनं धृतवति ।

**मृगाक्षीभिः स्वेक्षानवकुवलयैरर्चितपदे**
**रतिप्रादुर्भावो भवतु सततं श्रीपरिवृढे ॥ ३ ॥**

तस्मिन् यदुकुलसमुद्रासितमणौ यदुकुलसमुद्रेति विशेषणात् पूर्णानन्दे हरौ श्रीगोवर्धनधरे रतिप्रादुर्भावः, तथा असितमणाविति रूपं । कीदृशे स प्रार्थनीय इत्याकाङ्क्षायां विरहसामग्रीके स प्रार्थनीय इत्याशयेन विरहसामग्रीमाहुः **समायात** इत्यादि । स्वस्मिन् समायाते सति व्रजः सुरनिलयसाम्यं गतवान्, न तु वैशिष्ट्यम् । यतः सर्वोप्यक्षरः, व्रजे वैशिष्ट्यं तु करणीयम्, आत्मीयत्वात् । तथा च स्वस्मिन् व्रज इत्यप्यन्वयः, तदाहुः यः स्वस्मिन् व्रजे निजपदगताब्जाङ्कुशयवैर्वैशिष्ट्यमकार्षीदिति । अर्थाद्गोचारणार्थं गमनसमय आगमनसमये च । तथा च यः सुरनिलयसाम्यं गतवति व्रजे स्वस्मिन् समायाते सति निजपदगताब्जाङ्कुशयवैर्वैशिष्ट्यमकार्षीदित्यप्यन्वयः । अत्राब्जाङ्कुशयवानामेव ग्रहणं छन्दोनुरोधेनान्येषामप्युपलक्षकम्, योग्यत्वात् । वैशिष्ट्यं खुरतोदशमनरूपम् । तदुक्तं गोपिकाभिर्युगलगीते 'निजपदाब्जदलैर्ध्वजवज्रनीरजाङ्कुशविचित्रललामैः । व्रजभुवः शमयन् खुरतोद'-मिति । अकार्षीदिति भूतप्रयोगो लीलानां नित्यत्वेपि श्रीमदाचार्यान् प्रति तदानीमप्राकट्यात् । एतच्च नित्यलीलावादे विद्वन्मण्डने स्पष्टम् । सोपि श्रीपरिवृढ एवेत्याशयेनाहुः **श्रीपरिवृढ** इति । अत्र पूर्वोक्तेनाभेदः । तदुक्तं तृतीयाध्यायतृतीयपादे 'समान एवं चाभेदा'दिति सूत्रभाष्ये । अत एव 'प्रभौ परिवृढ' इति निपातोऽपि सङ्गच्छते । अन्यत् पूर्ववत् । **हिहीहीहीङ्कारानि**ति । अत्राद्यो ह्रस्वेकारान्तः, ततो द्वौ दीर्घेकारान्तौ, तुरीयस्त्वनुस्वारान्तदीर्घेकारान्तः, हीमो निर्देशो हीकारः, 'वर्णात्कार'इति कारनिर्देश इत्येव । हिश्च हीश्च हीश्च हीङ्कारश्च हिहीहीहीङ्कारास्तान्, द्वन्द्वान्ते श्रूयमाणं प्रत्येकमभिसंबध्यत इति यथासंभवं हिहीहीहीङ्कारादयोपि बोध्याः । पशुं पशुं प्रतीति **प्रतिपशु** । 'अव्ययं विभक्ती'-त्यादिनाव्ययीभावः समासः । सदा दक्षिणबाहुं कटौ संस्थाप्य वामबाहुमुच्चैः कृत्वा कुर्वेति, किञ्च, सदा कुर्वेति, न कदाचिदपि प्रतिपशु तूष्णीं स्थितवति । अयमेव भगवान्न तु गोपाल एव तदाहुः **नमदि**त्यादि । यः पूर्वं भागवतादौ **नमद्ब्रह्मेशेन्द्रप्रभृतिषु** मौनं धृतवान्, स एवेदानीं हिहीहीहीङ्कारान् प्रतिपशु वने कुर्वंस्तान् ज्ञानगोचरीभवति तस्मिन्नित्यर्थः । कुर्वतीति वर्तमानार्थकशतुः प्रयोगात् । चकारोनुक्तसमुच्चयार्थः । **मृगाक्षीभि**स्तद्वनस्थाभिः **स्वेक्षारूपैः नवकुवलयैरर्चिते** पदे यस्य तस्मिन् । तासामीक्षाविषयतया भगवत्पदयोः स्थितिः । अत ईक्षाभिरर्चनं, कज्जलादीनां नीलत्वादीक्षणानां कुवलयत्वं, कुवलयं नीलमम्बुजन्म, कौ पृथिव्यां वलयमिव, शोभाकरत्वात् । तदानीं भगवद्दर्शनेन ये कामशचलिता विविधा भावविशेषास्तेऽत्र नवशब्देनोच्यन्ते ईक्षासु । कुवलयेषु तु रसोद्दीपकत्वं नवत्वम् । स्वेक्षाश्च वलयतोऽप्यधिकाः, यतो वलयान्यपि कुत्सितानि यानि झणत्कारयुक्तानि विशेषोद्दीपकानि तानि कुत्सितानि जातानीति ज्ञायते । ताश्च भक्ताः । अतः पदे एवार्चन्तिस्म, स्वरूपं तु दद्दशुरेव । कुङ्कुमादिभिः अन्यसर्वप्रतिबन्धे स्वेक्षानवकुवलयैरेवार्चितवत्य

इत्यर्थः । शेषं पूर्ववत् । अत्र रतिप्रादुर्भाव इत्यादिपुनःकथनं भक्त्यादरे वीप्सारूपं च । श्रीपरिवृढ इति निपातप्रकारस्तु पूर्वश्लोक एव उपपादितः ॥ २,३ ॥

माहात्म्य वदन्तः प्रसङ्गेन तनुस्वरूपे विभौ त प्रार्थयन्ति सकृदित्यादि ।

**सकृत्स्मृत्वा कुम्भी यमिह परमं लोकमगम-**
**चिरं ध्यात्वा धाता समधिगतवान् यं न तपसा ।**
**विभौ तस्मिन् मह्यं सजलजलदालीनिभतनौ**
**रतिप्रादुर्भावो भवतु सततं श्रीपरिवृढे ॥ ४ ॥**

तस्मिन् विभौ रतिप्रादुर्भावस्तथा । अत एवात्रैव विभाविति सप्तम्यन्तोपादानम् । विभुः प्रभुस्तेन 'प्रभौ परिवृढ' इति निपातोपि सङ्गच्छते । योगस्तु विशेषेण भगवत्ताविर्भवतीति, 'तत्राखिलामरमयो हरिराविरासी' दित्यष्टमस्कन्धवाक्यात् । (अत एवात्रैव विभाविति सप्तम्यन्तोपादानम् ।) स्वरूप वदन्तः स्वयं रासलीलैकतात्पर्याः रासस्त्रीभावपूरितविग्रहाश्चेति रासलीलावैशिष्ट्यमप्याहुः **सजलजलदालीनिभतनौ**विति । सजलो यो जलदस्तस्य या आली पङ्क्तिस्तन्निभा तनुस्तत्र रतिप्रादुर्भावप्रार्थना प्रथमश्लोक एवोक्ता । प्रेम्णाय वाक्यप्रबन्धः, माहात्म्यज्ञानेन तज्जननात् । किञ्च, सजलपदेन भगवतोऽन्तःश्रमो योधितः, रासे त्वरितागमनेन च श्रमसम्भवात्, तद्वन्मदर्थेपि रत्याविर्भावार्थमपि श्रमः सभावित इति सूचितम् । जलदपदेन च रासस्त्रीभ्यो यथा तथा गजेन्द्राय जीवनप्रदत्वम् । जल जीवनमिति, तथा विरहिणे मह्य जीवनप्रद इति ज्ञाप्यते । आलीपदेन च रासे यथा मेघचक्र तथेश्वरपङ्क्तिः सखीकेति ज्ञाप्यते । गजेन्द्रप्रसङ्गे '(शेष च) मत्कलां सूक्ष्मां श्रिय देवीं मदाश्रयामि'ति वाक्येनेश्वरस्य सखीकत्वात् 'वक्षः श्रियैकरमण'मितिवाक्याद्यावद्रूप श्रियो रमन्ते व्रजभक्तेभ्यः परमलोकगमनानन्तरमपि गजेन्द्राय च बहुवार जीवनप्रदत्वमालीपदेन बोध्यते, मह्यमपि सततमित्यालीपदेन सूच्यते । एतदर्थमेव दृष्टान्तः । आलीपद स्वेषां रासलीलैकतात्पर्यत्वात् रासस्त्रीभावपूरितविग्रहत्वाच्च रासलीलावैशिष्ट्यमित्युक्तम् । अथवा गजेन्द्र परिमुच्य नियति गच्छन् सजलजलदाली भवतीत्यालीपदम् । अथवा सरसि प्रतिबिम्बितस्य तरङ्गोपाधितः प्रतिबिम्बानि बहूनि भवन्तीत्यालीपदम् । अथवा श्रियो हारे भगवत्प्रतिबिम्बपङ्क्तिरिति तथा, अन्यथा [illegible] सजलजलदनिभतनुरित्येतावतैव चारितार्थ्यं भवति । आलिः पङ्क्तौ दीर्घान्तोपि अस्मादेव ग्रन्थात् । यथा श्रीभागवते 'कुसुमावलीभिः सख्युर्व्यधात्स्ववपुषाम्बुद आतपत्र'मित्यत्रावलीशब्दो दीर्घान्तोपि, तथायमपि क्वचिद्द्रष्टव्यः । व्युत्पत्तिस्तु आ ईषल्लीयते श्लेषं करोतीत्याली पङ्क्तिः । 'लीङ् श्लेषणे' क्विप्, ननु 'अलभूषणाद'वाङ्पूर्व इन्नन्तः । अत एव शृङ्गाररसमण्डने द्वितीय उल्लासे पुष्पालीनि प्रयोगः । अथवा सजलजलदालेरीः श्रीस्तन्निभा तनुः । नितरां भानीति निभा । वक्ष्यन्ति चाग्रे 'हरिर्यन्नसि'ग्निति । हरिश्चन्द्रः, तनुरित्यर्थयन्निरस्तार्किराज्याभागुपलक्षिका । तात्पर्येक्षयैकवचन वाक्यानुरोधेन । अथवा

सजलजलदश्चाली सखी च सजलजलदाल्यौ । 'धर्मादिष्वनियम' इति सूत्रेणाली-शब्दस पूर्वप्रयोगार्हस्स परप्रयोगः । तयो· निभा सजलजलदालीनिमा । सा चासौ तनुश्च सजलजलदालीनिमतनु', सश्रीका उक्तवाक्यात् । पूर्वश्लोकोक्ताग्रे वक्ष्यमाणा च प्रिय-व्रजस्थितित्वात् पुष्टिलीलाकर्तृत्वात् रहःप्रियत्वाच सिद्धा, इय तु लीला वैकुण्ठस्था भक्तियोगादिना निरूपिता चतुर्भुजरासरूपा, गजेन्द्रं परिमुच्य वियति गच्छतोपि लीला दूरतो विरहेण परमफलत्वात् पूर्वार्धोक्तथा लीलया माहात्म्यज्ञानजननाद्बालादरेणाहुः मह्यमिति । तत्र मामनुकूलयितु रतिप्रादुर्भावो भवत्वित्यर्थ· । 'क्रियार्थोपपदस्य च कर्मणि स्थानिन' इति सूत्रेण चतुर्थी । कीदृशे स प्रार्थनीय इत्याकाङ्क्षायामाहु· सकृदिति । य विभु 'तनुरूप चक्रायुध' इति वाक्याच्चतुर्भुज सकृदेकवार स्मृत्वा । गजेन्द्रः पशु, अतः कथ भगवतः स्मरणमित्याकाङ्क्षायामाहु· कुम्भीति । कुम्भौ मङ्गलसूचकौ, न तु रिक्तौ, तौ विद्येते यस्य स', तस्मान्मङ्गल भगवदनुग्रहरूप पूर्वजन्मकृतहर्यर्चनानुभावरूप च, तच्च द्विगुणम्, अग्रे भगवद्दर्शनस्यापि भावित्वात् । कुम्भो हि वारिपूर्णो येन केन प्रसिद्ध-सम्बन्धेन मङ्गलरूपो भवति । अत· स्मृतिरहितस्यापि गजेन्द्रस्य स्मरण भवति । तथा च भगवद्दर्शनम् । भगवत्सेवोपयोगिदेहेन परमलोकगमन तु भगवत्स्पृष्टगजेन्द्रस्योत्क्षिप्तसा-म्बुजकरत्वेन सेवकत्वात् पूर्वजन्मनीन्द्रद्युम्नीय सेवापरत्वेन पूर्वजन्मनि कृता या सेवा सा द्वितीये जन्मनि फलिता, तेन हेतुना पूर्वजन्मनि किञ्चित्काल सेवाप्रतिबन्धोऽपि जात इति ज्ञायते । तदुक्त सिद्धान्तमुक्तावलीटीकाया'मनङ्गीकारे तु मध्ये भजनप्रतिबन्धे कृतभजनवैयर्थ्यासम्भवाज्जन्मान्तरे तत्फलिष्यतीति ज्ञेयमि'ति । एव च कुम्भी सकृत्स्मृत्वा भगवन्त दृष्ट्वा अम्बुजेन सेवित्वा पूर्वजन्मकृतहर्यर्चनानुभावेन वा परम लोकमगमदिति योजना । वस्तुतस्तु प्रमेयबलेनैव सर्वम्, अनवतारदशायामेव ज्ञानभक्तीनां प्रयोजकत्वात् । एतच्च स्थितमाकरे । किञ्च, य विभु ध्यात्वा भक्तिं कुतो वा न कृतवानित्यत आहुः धातेति । यतो धातानशनादिव्रतधारको, न त्वनुग्रहवान्, अनुग्रहेण भक्तिरिति भक्तिहेतौ स्थितम् । तपसा न समधिगतवान् किन्तु दृष्टवान्, वन्दितवाँश्च । अत्रापि हेतुर्धातेति । 'पोषण तदनुग्रह' इति वाक्याद्भगवदनुग्रहवान् । एतच्च द्वितीयस्कन्धे नवमाध्याये स्पष्टम् । 'इत्युक्त्वासीद्धरिस्तूष्णीं भगवाना-त्ममायया । पित्रो सपश्यतो सद्यो बभूव प्राकृत' शिशु'रितिवाक्यादेवमवने समर्थत्वा-च्छ्रीपरिवृढसमानाधिकरणमप्याहुः श्रीपरिवृढ इति । 'कृष्णस्तु भगवान् स्वय'मिति श्रीकृष्णे भगवत्त्वातिदेशाच्छ्रीकृष्णरूपात्पूर्वं चतुर्भुजरूपादत्र सच्चिदानन्दस्य ज्ञानशून्यातु-ग्राहकस्य सर्वे धर्मा उपसंहर्तव्या । 'बभूव प्राकृत शिशु'रित्यत्र प्राकृतरूपेणैव ग्राह्यः शिशु', 'प्रकृतिमगन् किल यस्य गोपवध्व' इत्यत्र प्रकृतिपदस्य स्वरूपपरत्वादिति स्थित टिप्पण्याम् । तदा तु चतुर्भुजरूपस्य स्वरूपमिन्नत्वबोधनात्रोपसंहर्तव्या अपि साधना-ध्यायतृतीयपादस्योपसंहारसूत्रीयमाष्येणेद सिध्यति ॥ ४ ॥

मनोमयलीलां क्रियात्मकस्य च तां वदन्तस्तं प्रार्थयन्ति पराकाष्ठेत्यादि ।

**पराकाष्ठा प्रेम्णः पशुपतरुणीनां क्षितिभुजां**
**सुहृत्सानां त्रासास्पदमखिलभाग्यं यदुपतेः ।**
**विभुर्यस्तस्मिन् मे दरविकचजम्बालजमुखे**
**रतिप्रादुर्भावो भवतु सततं श्रीपरिवृढे ॥ ५ ॥**

तस्मिन् दरविकचजम्बालजमुखे रतिप्रादुर्भावस्तया भवतु । कमलमुखत्वं सकलसाधारणमुभयोरन्वयार्थत्वं श्लोकस्य स्फोरयन्ति । किञ्च, दरविकचे ईषद्विगतबन्धे ईषत्प्रफुल्लिते जम्बालजे कमले नेत्ररूपे मुखे यस्य मनोमयस्य भगवतः सः 'मनोमयोऽय सखि पद्मलोचन' इति विज्ञप्तौ तथा कथनात् दरविकचपद्मलोचन इत्यर्थः । तथा दरविकच ईषद्गतबन्धमीषत्प्रफुल्लित यज्जम्बालज तत्सदृश मुख यस्येति साधारणसमासः । क्षितिभुजामित्यादिविशेषणबलात् क्रियात्मकस्येति लभ्यते । यत्पदेनेषत्प्रफुल्लितकमलमुख इत्यनुक्त्वा दरविकचेत्याद्युक्त तेनान्यावपि समासौ । तथाहि । दर ईषत्तादृग्विरुद्धाः कुटिलाः केशा यस्य स दरविकचः । जमतीति जम्, क्विपः सर्वापहारी लोपः, अत्तेत्यर्थः । जम् चासौ बालश्च जम्बालो नवनीतमदन् बालस्तज्जानि मुखान्युपाया गमनविशेषादयश्च यस्य सः । 'मुख नि सरणे वक्त्रे प्रारम्भोपाययोरपी'ति विश्वः । उपाया अनेकविधास्तद्वारणाय बालजत्व मुखेपूक्तम् । एव च दरविकचश्चासौ जम्बालश्च दरविकचजवालस्तस्माज्जायन्त इति दरविकचजबालजानि तानि मुखानि यस्य मनोमयस्येति समासः । अत्राद्य उपायो बालस्वरूपे निविशते, अन्ये तु 'पराकाष्ठा प्रेम्ण'त्यत्र हेतव इति तत्रैव स्फुटिष्यति । मुखेषु बालजत्वोक्तितात्पर्यं च । दरः शङ्खः निकचत्व विगतकचलक्षण स च स च तौ दरविकचौ जम्बालजे करकमले मुखे वक्त्रे च यस्य गोकुलाधीशस्य क्रियात्मकस्य स जनालः पङ्कस्तज्जत्वोक्त्या यथा पङ्के कदाचित्किञ्चित्सङ्गस्तथा नेत्रयोः कज्जलं मुखे च, हस्तयोस्तु कुङ्कुमादिरिति सूच्यते । कीदृशे स प्रार्थनीय इत्याकाङ्क्षायामाहुः पराकाष्ठेति । यः पशुपतरुणीनां प्रेम्णः पराकाष्ठा उत्तमा दशा, सा च बाल्यावस्था । इदमेवावस्थाया उत्तमत्व यद्भक्तानुरोधित्वम्, अन्यथा पौगण्डादयोऽप्यवस्थाः 'मन्यमानाः स्वपार्श्वस्थान् स्वान् स्वान् दारान् व्रजौकस' इति न्यायेन प्राप्नुयुः । अत्र पराकाष्ठा य इत्युक्तेः स्वरूपापेक्षयावस्थाधर्मेनाहुत्य प्रतिपाद्यते, तथैव सकलव्रजरत्नानां मनोरथपूर्तेः । तथाहि । पशुपानां यास्तरुण्यस्ता बहुदुग्धादिकाननपशुप्रेक्षकाणां तत्रापि तरुण्यो दुग्धादिसम्पादनसमर्थाः, कामभावेन भगवति स्निग्धाः, न तु वृद्धा बाला वा । तासां प्रेम्ण इति ल्यब्लोपे पञ्चमी । प्रेम ज्ञात्वा । प्रेम्ण इति षष्ठी वा, प्रेमसम्बन्धिनी पराकाष्ठा । अत्र 'ज्ञाताऽप्यन्यो न वर्तत' इत्यन्तः सर्वोपि गुप्तरसोऽनुसन्धेयः । यद्यपि 'त्व भुङ्क्ष्व सरामो वयस्यवृन्दैः सहागले'ति सरामत्व वयस्यवृन्दैः सहागमनप्रार्थनायिषयत्व च श्रीकृष्णावतारधर्मावुक्तौ, तथापि श्रीकृष्णावतारे परमग्लानि-

देशस्य माध्यादावुपपादितत्वात्तस्य बाल्यावस्थायाचरणोक्त्या परब्रह्मण्यपि तदाद्याचरणं निश्चीयते । तच्च मनोमयरूपेण । 'इति प्रियतमावृन्दमुखपद्मवचोमधु । रसायनमिवापीय तथैव प्रभुराचर'दितिवाक्ये रसायनपानानन्तरं मनसैव तथाचरणावधारणस्य युक्तत्वात् । किञ्च, काष्ठा दिक् तद्वन्निराकारः, परं सा परा मनोगोचरः, दिक्तु नैवं । इदमेवोत्तमत्वमत्र । यत्तु साकारब्रह्मवादैकस्थापक इति श्रीमदाचार्यनाम तत्सार्वदिकस्वरूपाभिप्रायेण । एवंरूपं तु कादाचित्कमेव भक्तस्यापि प्रभुज्ञापितमेवेति ज्ञेयम् । कार्यकारणात्मकत्वेन क्रियाद्वैविध्यात् विशेषणद्वयेन क्रियात्मकस्य भगवतो लीलामाहुः क्षितीत्यादि । 'क्षि निवासगत्योः' 'क्तिच्-क्तौ च संज्ञायाम्'इति क्तिच् । तथा चायमर्थः । पूर्वमेव निवासवती भूः, न तु क्षेत्ररूपा । तस्या भुजो, न तु पालकाः । अत एव सुदत्ताः । भगवान् स्वार्थमेव सर्वं करोति, नत्व-स्मदर्थम् । ततश्चान्यार्थेऽस्माभिः खेदः कथं प्राप्तव्य इति दत्ताः । प्रकारान्तरेण येषां दत्तत्वं न गच्छति ते सुदत्ताः, तेषां श्वासास्पदं श्वाससम्बन्धि कृत्यम् । 'आस्पदं तु पदे कृत्ये' इति विश्वात् । तच्च कार्यं 'कृत्यं विद्विष्टकार्ययो'रिति विश्वात् तत्र विद्विषि 'कृती छेदने' इत्यस्मात् 'ऋहलोर्ण्यत्' कर्मणि कार्ये वाच्ये तु कृञः कर्मणि क्यप् 'ह्रस्वस्य पिति कृति तुक्' क्रियते इति कार्यं कृत्यं कृतिकर्म। तदपि द्रव्याद्यात्मकं भवति । परन्तु श्वासास्पदं क्रियात्मको भगवानभ्रेतनविशेषणबलात् । अतः कृतिकर्मापि क्रियात्मकं ग्राह्यम् । एवञ्च कार्यात्मकक्रियात्मको भगवानास्पदपदार्थः । सुट् तु छान्दसः कृत्ये वाच्ये । अथवा धातुपाठे श्रुतस्य श्वणार्थकस्य स्वदेर्भ्वादेराकृतिगणत्वाद्भ्वादित्व प्रकल्प्याङि रूपं । पचादेराकृति-गणत्वात् 'नन्दिग्रहिपचादिभ्यो ल्युणिन्यच' इति सूत्रेणाच् । अथवा श्वासानामास्पदं स्थानं, तदपि क्रियाकलापात्मकं, क्रियाभिश्वासः सुदत्तानामिति । एवं कार्यात्मकक्रियात्मकत्व-मुक्त्वा कृत्यपदार्थनिविष्टकृतिस्वरूपोपि भगवानित्याहुः अखिलभाग्यमित्यादि । यदुपतेः शूरसेनस्याखिलभाग्य 'भाग्यं शुभात्मकविधौ स्याच्छुभाशुभकर्मणी'ति विश्वात् । भज्यते 'भज सेवायां' 'ऋहलोर्ण्यत्' 'चजो'रिति कुत्व यागात् स्वर्गो भवतीत्यादौ भक्तेरुत्पत्त्यर्थकत्व-दर्शनेन धातोरनेकार्थत्वाच्चाखिला शुभात्मिका क्रिया । तदुक्तं दशमस्कन्धे 'मातामहं तूग्रसेनं यदूनामकरोन्नृप'मिति । अत्र क्रियया सर्वं संपादितम् । 'आह चास्मान् महाराज प्रजाश्चा-ज्ञप्तुमर्हसि । ययातिशापाद्यदुभिर्नासितव्य नृपासने' इत्यस्याभासे । अतो निश्वासार्थं कृत्यधिकं वाक्यमप्युक्तवानित्याहेत्यत्र कृत्यधिकमित्युक्तत्वात्सा चात्र परिवृढः परिस्पन्दः । धातुना गृहीत-कर्मत्वेनाकर्मकत्वात्कृञो भावे शः 'रिङ्शयलिङ्क्षि'ति रिङ् अचिन्श्वि'तीयङ् । क्रियते श्रीप-रिवृढः परिस्पन्द्यते इति क्रिया भगवत्त्वादलौकिकी । बहुषु स्थलेषु तु यस्य क्रिया तस्याकारः कायपरिस्पन्दः, क्रियालौकिकी । अखिलपदेन न तेन तदीयैर्वा किञ्चित्कृतम् । एवं मनोमयस्य क्रियात्मकस्य च भगवतो लीले उक्ते । स उभयोपि विश्वैर्वंभवने समर्थ इति वक्ष्यमाण-श्रीपरिवृढदरस्मितचर्चंबालजमुखयोः सामानाधिकरण्ये हेतुः । 'प्रभौ परिवृढ'इति निपातात् ।

अन्यत्समानम् । अत्रान्येषां धर्माणामुपसंहारः पूर्वोक्तरीत्या, अत्रोभौ परिवृढावित्युक्तप्रायम् । तथाचोद्देश्यविधेयभावाद्भेदाभेदौ भवतः, प्रतीत्या भेदः श्रीपरिवृढत्वोक्त्याऽभेद इति । तथाप्याधिदैविकत्वमेव सर्वेषां, नत्वाध्यात्मिकत्वमपि, श्रीपरिवृढत्वोक्तेः ॥ ५ ॥

प्राणलीलां रासस्त्रीभावपूरितविग्रहत्वाद्रासठीठैकतात्पर्यत्वाच्च युग्मेनाहुः दरप्रादुरिति ।

दरप्रादुर्भूतद्विजगणमहःपूरितवने
चरन् कुह्वां राकारुचिरतरशोभाधिकरुचि ।
हरिर्यस्तस्मिन् स्त्रीगणपरिवृतो नृत्यति सदा
रतिप्रादुर्भावो भवतु सततं श्रीपरिवृढे ॥ ६ ॥

स्फुरद्गुञ्जापुञ्जाकलितनिजपादाब्जविलुठत्-
स्रजि श्यामाकामास्पदपदयुगे मेचकरुचि ।
यदाङ्के शृङ्गारं दधति शिखिनां पिच्छपटलै
रतिप्रादुर्भावो भवतु सततं श्रीपरिवृढे ॥ ७ ॥

युग्मत्वात्तस्मिन् मेचकरुचि रतिप्रादुर्भावस्तथेत्युत्तरश्लोकेनान्वयः । कीदृशः सः यत्र स तथेत्याकाङ्क्षायामाहुर्दरेत्यादि । दरप्रादुर्भूतो यो द्विजगण उडुगणस्तस्य महस्तेजस्तेन महसा पूरितं यद्वनं वृन्दावनादि तस्मिन् कुह्वाममायां चरन् गच्छन् वक्ष्यमाणश्यामाविरहमनुभवंश्च । कीदृश्यां राकाया पूर्णनिशाकरायां रुचिरतरा या शोभा विशेषणेन तथावसायात् । 'त्रिभङ्गललितपदयुगं श्यामाकामास्पदं भवति'इति । तस्या अधिका रुचयस्साम् । तत्र हेतुमाहुः हरिरिति । चन्द्र इत्यर्थः । 'हरिर्वातार्कचन्द्रेन्द्रयमोपेन्द्रमरीचिष्वि'ति विश्वात् । 'प्राणस्येव प्राणो भवती'ति श्रुतेर्विरहजाभितसाम्यः प्राणान् प्रयच्छन् विरहतापं हरतीति हरिपदम् । तथापि 'कोटीन्दुजगदानन्दी'ति भगवतो नाम्नो राकारुचिरतरशोभातोऽधिका रुक् यस्य एतादृशो यः स्त्रीगणपरिवृतः सन् सदा नृत्यति, नैकाकी नृत्यतीति सदापदेन ज्ञायते । एकाकी तु त्रिभङ्गललितस्तत्स्तोत्रे प्रसिद्धः । यद्यपि 'एतत्सदर्शने तु स्यात् प्रमदाभाव एव हि । तत्रापश्यामकोऽप्येष कृष्ण एवास्ति नापर' इति कृष्ण एव तत्र त्रिभङ्गललितः । तदुक्तं 'प्रहसितं प्रिये'त्यत्र विहरणपदव्याख्यानसुबोधिन्यां 'विहरणं यद्यल्लन'मित्यारभ्य 'त्रिभङ्गललितादिकं भवती'त्यन्तेन । तथात्रापि तदेवानुकूलम् । 'श्यामाकामास्पदपदयुगं' इति वक्ष्यमाणविशेषणेन तथावसायात् । त्रिभङ्गललिते पदयुगं श्यामाकामास्पदं भवतीति । अथवा, सदा हरिः गोकुलस्य चन्द्रमाः, इदानीं वृन्दावनादेश्चन्द्रमाः । प्राणरीत्या । श्रीकृष्णरामस्य राकायां वृन्दावनादौ जातत्वात् । 'प्राणस्येव प्राणो भवती'ति श्रुतेश्च । तस्मादिदं मण्डलमपि भिन्नं, न मागवतोक्तम् । तदुक्तं 'अङ्गनामङ्गनामन्तरे माधवो माधवं माधवं चान्तरे चाङ्गना । इत्यमाकल्पितमण्डले-

ततः संजगौ वेणुना देवकीनन्दनः' इति । त्रिभङ्गललितत्वाद्रासमध्ये वेणुनादोपि संभा-
: । 'मन्ये गोकुलतरुणीनवनवभावाः स्वरससजाताः । रतिरससुधाब्धिपतितप्लवे प्लवन्ते-
र्गमधुरतराः ।' 'तत्रापि चेत् सहायोभूदुदारो वेणुनि:स्वनः । त्रिभङ्गश्च त्रिजगति न जाने
दशा भवे'दिति त्रिभङ्गललितस्तोत्रवाक्याभ्याम्। तदुक्तं 'प्रविष्टेन गृहीतानां कण्ठे स्वनि-
. स्त्रियः' इत्यस्य सुबोधिन्यां, 'यत्तुनः कैश्चि'दित्यारभ्य 'मध्ये वेणुनादस्योक्तत्वा'दित्य-
न ग्रन्थेन। 'एवञ्च षोडशगोपिकानामष्ट कृष्णा भवन्ति' तद्भागवतोक्तम्, यत्र तु षोडशगो-
कानां षोडश कृष्णा भवन्ति तदन्यन्मण्डलम्, एवमत्रापि षोडशगोपिकानां षोडश प्राणा
न्ति। यत्र गोपिकानां हस्तद्वयग्रन्थिस्तत्र भगवतः कण्ठ' । अयमपि श्रीपरिवृढ इत्याशयेनाहुः
ीपरिवृढ इति । अत्र श्रीपरिवृढैतल्लीलाकर्त्रोः सामानाधिकरण्ये हेतुर्नोक्तस्तथापि हरिरि-
व हेतुरूह्यः । 'कृष्णस्तु भगवान् स्वय'मिति वाक्यात् । अन्यत्समानम् । अत्र तद्धर्माणा-
पसंहारः पूर्वश्लोकोक्तरीत्योपपादनीयः । नृत्यशृङ्गार प्रत्याहारन्यायेनाहुः **स्फुर**दित्यादि ।
फुरन् दिव्यो यो गुञ्जापुञ्जो मालाकारस्तेनाकलिते शब्दिते ये निजपादाब्जे तयोर्विशेषेण
ठन्ती स्रग्यस्य स तयोक्तस्तस्मिन् । अत्र निजपदेन भक्तपादाब्जव्युदासः, अब्जपदेन च
त्रिभङ्गललितस्तोत्रोक्तरीत्या प्रकटपादतलत्व रासे परिश्रान्तस्यावस्थाने भवतीत्युच्यते ।
ादाब्जप्रसङ्गादाहुः **श्यामे**त्यादि । श्यामा व्रजभक्तरूपा तस्याः कामास्पद कामस्य स्थान
पदयुग यस्य स तयोक्तस्तस्मिन् । तदुक्त त्रिभङ्गललितस्तोत्रे 'दक्षिणपदतलपद्म वामप्रप-
दस्य वामतः प्रकटम् । सौन्दर्यं किमपितरां प्रकटयति प्रेमवालभ्य'मिति, श्रीभागवते च
'प्रणतकामद पद्मजार्चित धरणिमण्डन ध्येयमापदि । चरणपङ्कज शतम च ते रमण नः स्त-
नेष्वर्पयाधिहन्' इति, पादाग्र प्रपद प्रेमवलभ्य प्रेमवता लभ्यम् । अनेन विशेषणेनैका तु
श्यामा स्वामिनीव निकटे तिष्ठतीति ज्ञाप्यते। प्रसङ्गादेव पादाब्जयो रूप वदन्तो विशेषण-
स्वरूपेण विशेष्यभूतमाहुः **मेचकरुची**ति । मेचका श्यामा रुक्कान्तिर्यस्य स तयोक्तः ।
'स्त्रियाः पुंवदि'ति पुंवद्भावः। प्रस्तुतमाहुः **वराङ्ग** इत्यादि। वराङ्गे शिरसि शिखिनां मयूरा-
णाम्। अत्र पूर्वस्वरूपवद्विकचत्वशङ्का भवेत्तन्निवृत्तये वराङ्ग इति। वरमङ्ग यस्य स वराङ्गः ।
रासस्त्रीभावपूरितविग्रहत्वा'द्वीक्ष्यालकावृतमुख तव कुण्डलश्रीगण्डस्थलाधरसुध हसि-
तावलोकम् । दत्ताभय च भुजदण्डयुग विलोक्य वक्षः श्रियैकरमण च भवाम दास्य' इति
श्लोकोक्तभावेनेदमुक्त विशेषणम् । पिच्छपटलैः पिच्छपरिच्छदैर्मुकुटाकारैः । बहुवचन तासां
मध्ये एकस्या एकस्या भगवानिति भगवतोबाहुल्यात् तदभिप्रायेणान्यपरिच्छदाभिप्रायेण च ।
तैः सह शृङ्गाररसात्मक भूषणादि । तदुक्त त्रिभङ्गललितस्तोत्रे 'उद्बुद्धशृङ्गाररसस्वरूपो
भूषणाद्यपि । तादृगेवाखिलाङ्गेषु बिभ्रत् सराजते प्रभु'रिति । दधति धारयति पोषयति च
भूषणादिक भगवत्सबद्धमेव यया पुष्ट भवतीति । अन्यत्पूर्ववत् । अत्रापि रतिप्रादुर्भाव
इत्यादि पुनः प्रार्थन भक्त्या आदरेण च वीप्सारूपमिति ॥ ६॥ ७॥

कामकृतां लीलां वदन्तस्तं प्रार्थयन्ति दुरन्तमित्यादि ।

दुरन्तं दुःखाब्धिं हसितसुधया शोषयति यो
यदास्येन्दुर्गोपीनयननलिनानन्दकरणम् ।
अनङ्गः साङ्गत्वं व्रजति मम तस्मिन् मुररिपौ
रतिप्रादुर्भावो भवतु सततं श्रीपरिवृढे ॥ ८ ॥

तस्मिन् मुररिपौ रतिप्रादुर्भावस्तयेति योजना झटिति बुद्ध्यावारोहति तथापि योऽनङ्गः साङ्गत्वं व्रजति तस्मिन्ननङ्गे साङ्गे रतिप्रादुर्भावस्तथेति योजनीयम् । मुररिपुत्वस्यागन्तुकत्वेन गुणशब्दत्वात् । अत्र कामपदं विहायानङ्गपदप्रयोगान्निराकारत्वशङ्का भवति, तद्वारणाय यः साङ्गत्वं व्रजति प्राप्नोतीत्युक्तम् । योऽनङ्गः साङ्ग इत्यनुक्त्वा साङ्गत्वं व्रजतीत्युक्तं तेन कदाचिन्निराकारत्वमपि भविष्यतीति ज्ञायते । या तु 'साकारब्रह्मवादैकस्थापक' इति श्रीमदाचार्यनाम्नः कथमेवमिति शङ्का सा पूर्वमेव निराकृता । कीदृशे स प्रार्थनीय इत्याकाङ्क्षायामाहुः दुरन्तमित्यादि । दुरन्तो यो दुःखाब्धिर्विरहतापरूपस्तं हसितमेव सुधा तया प्रत्यक्षं शोषयतीत्युक्त्या यथा सूर्यकिरणैर्जलशोषः तथायं शोषः । एवञ्च दुरन्तदुःखाब्धिर्हसितसुधायां लीनः सन् तद्रूपो जात इत्युक्तं भवति । तेन गोपीमदनमोहनयोरालम्बनविभावयोरपि परस्परसंयोगवत् विरहस्यापि व्यतिषङ्गो निरूपितः । न चैवं भगवतो दुःखित्वप्रसङ्ग इति वाच्यम् । चतुर्थाध्यायस्य द्वितीयपादे 'अस्यैव चोपपत्तेरूष्मे'त्यादिसूत्रभाष्ये विरहस्य ब्रह्मधर्मत्वेनोपपादनात् । विशेषोपि तत्र द्रष्टव्यः । यथा भक्तानां कामभावो न गच्छति तदर्थं हास इति 'प्रहस्य सदयं गोपी'रित्यस्य सुबोधिन्यामुक्तम् । 'हासो जनोन्मादकरी च माये'ति वाक्यात् भगवान् कार्यार्थं योगमायामुपाश्रयत इति 'योगमायामुपाश्रित' इत्यस्य सुबोधिन्यामुक्तम् । यस्यास्येन्दुर्गोपीनयननलिनानन्दकरणमसाधारणं कारणमेतादृशकामो मुररिपुरित्याशयेनाहुः मुररिपाविति । मुरस्य जलदोपालकस्य रिपुः, तेन यस्यास्येन्दुः सुधांशुर्निर्दोषः, न तु शशाङ्क इत्युक्तम् । श्रीपरिवृढसामानाधिकरण्ये हेतुश्चोक्तः । अथवा तस्मिन् मुररिपौ रतिप्रादुर्भावस्तयेत्येव योजना । उपसंहारसूत्रभाष्ये तद्धर्माणामुपसंहारस्य सिद्धत्वेनानङ्गेपि वक्ष्यमाणकार्यार्थं मुररिपुत्वमुपसंहृत्य श्रीपरिवृढसामानाधिकरण्ये हेत्वर्थं च मुररिपुत्वेन रूपेणानङ्गविशेष्यस्योपस्थापनात् । तथा च यथा 'साक्षान्मन्मथमन्मथ' इत्यस्य सुबोधिन्यां पद्मकुलस्मृद्धासितमणिस्तासां दैन्ये प्रादुर्भूते तन्निवारणार्थं कामरूपमेव प्रकटीकृतवान्, तथा श्रीपरिवृढोप्यनङ्गरूपं प्रकटीकृतवान्, परन्तु यथा दोषरूपं मुरं तन्निरुद्धकन्यासु स्वप्राप्तिप्रतिबन्धकं निराकृत्य ता अङ्गीकृतवानेवं श्रीपरिवृढो यदिदं तत्र यः प्रतिबन्धस्तं निवार्य तदप्यङ्गीकरोति पूर्वं, पश्चादनङ्गरूपं प्रकटयतीति मुररिपुपदस्य विशेष्यीकरणाज्ज्ञायते । ततः पश्चात्साङ्गः । अयमपि श्रीपरिवृढ इत्याशयेनाहुः श्रीपरिवृढ इति । अन्यत् समानम् । अत्रापि तद्धर्माणामुपसंहारः पूर्वोक्तरीत्योपपादनीयः ॥ ८ ॥

यद्यपि सिद्धार्थं सिद्धसम्बन्धं श्रोतुं श्रोता प्रवर्तते । शास्त्रादौ तेन कर्तव्यः सबन्धः सप्रयोजनः ' इति ग्रन्थस्यापि शास्त्रत्वेनानुबन्धचतुष्टयमादौ वक्तव्यम्, तथापि ग्रन्थविस्तारभयादन्ते जनशिक्षाकृते कृष्णभक्तिकृत्त्वात्तदुपनिबध्नन्त एव स्तोत्रपाठफलमाहु इदं य इत्यादि ।

**इदं यः स्तोत्रं श्रीपरिवृढसमीपे पठति वा**
**शृणोति श्रद्धावान् रतिपतिपितुः पादयुगले ।**
**रतिं प्रेप्सुः शश्वत् कुवलयदलश्यामलतनौ**
**रतिः प्रादुर्भूता भवति नचिरात्तस्य सुदृढा ॥ ९ ॥**

तस्य रतिः प्रादुर्भूता भवतीति पदसबन्धः । कस्येत्याकाङ्क्षायामाहु इदं य इत्यादि । य इति वर्णानियमो बोधितः । यः कोपीत्यर्थः । स्तोत्रं श्रीपरिवृढसमीपे इत्यन्तार्थशब्दावादाय वाच्यवाचकभावः सबन्ध उक्तः । सर्वत्र श्रीपरिवृढ इत्यन्ते निर्देशाच्छ्रीपरिवृढशब्देन श्रीपरिवृढादयः सर्वे वाच्याः । यौगिकोप्ययं शब्द इति तच्छ्लोकोक्ता लीला अपि श्रीपरिवृढशब्देन वाच्या रतिप्रादुर्भावप्रार्थनापर्यन्ता । अयमेवात्र विषयः । अधिकारिणमाहु पठतीत्यादि । **रतिपतिपितुः पादयुगल** इति । प्रेप्सुरधिकारी, परन्तु श्रद्धावान् सन् पठिता श्रोता वा रतिपतिः कामस्तज्जनकस्य । रासस्त्रीभावपूरितविग्रहत्वादेवमुक्तम् । रसो गुप्त एव वृद्धो भवतीति स्फुटं नोक्तम् । तदुक्तं 'अनाविष्कुर्वन्नन्वया'दित्यादिसूत्रभाष्ये । कामपितुः स्वरूपमप्याधिदैविकं काम इत्यपि ज्ञातुं रतिपतिपितृपदम् । तदुक्तं दशमस्कन्धे 'पितुरनवम्' इत्यत्र 'आकृतावन्यून इत्यर्थ' । रतिपतिपदेन रतिदातृत्वं बोधितम् । किञ्च, प्रारम्भश्लोकोक्तस्य भगवतः स्वरूपं तु तत्र नोक्तं, तदप्यनेन बोधितम् । सयुक्तः काम इति । तदुक्तं 'रतिपतिं रमयाञ्चकारे'त्यस्य सुबोधिन्यां 'सयुक्तः कामो रतिपतिः, वियुक्तस्त्वन्निरूप' इति । तथा सयोगशृङ्गारः कामाकृतिः श्रीपरिवृढ इत्युक्तं भवति । श्रद्धा आस्तिक्यबुद्धिः । कुवलयदलश्यामलतनौ कुवलयवत् श्यामला तनुर्यस्य श्रीपरिवृढस्य । अत्र प्रत्याहारन्यायेन सपूर्णं रूपं ज्ञातव्यम् । कुवलयमिन्दीवरं तद्दलानि परितः स्थितान्येकदेशभूतानि च नवकुवलयमतस्तद्दलाना च दृष्टान्तत्वं । तन्वो श्यामलः श्यामः । किञ्च, भूभावपरा प्रक्षेपे यो वर्णो भवति स श्यामलः । तदुक्तमष्टमस्कन्धे 'सचावनिज्यमानाङ्घ्रिः समन्तात् पयऊर्मिभिः । करोति श्यामलां भूमिं हरिन्मरकताश्मभि'रिति । हरिद्धि पालाशवर्णे । प्रयोजनमाहु **रतिः प्रादुर्भूते**ति रतिप्रादुर्भावः फलम् । नचिरादिति पञ्चमी तु ल्यब्लोपे । अचिरकालं प्राप्यैव वा चिरकालमास्थायेति वेति ॥ ९ ॥

प्रश्वानन्दतनूकाष्ठाक्रियाप्राणा अनङ्गकः । श्रीभिर्दीव्यन् सदा कुर्वन्त्रंष्टधा[1] हृदयेस्तु मे ॥ १ ॥
स्मृत्वा श्रीवल्लभश्रीमद्विठ्ठलाचार्ययास्यत । दृष्ट्वा श्रीयदुनाथानामाज्ञयो[2] विवृतिः कृता ॥२॥

**इति श्रीगोकुलोत्सवात्मजगोपेश्वरविरचिता परिवृढाष्टकविवृतिः सपूर्णा ।**

१ कुर्वन् सस्रधेति पाठः । २ आग्रहादिति पाठः ।

## भावैरङ्कुरितमितिपद्यव्याख्या ।

**भावः प्रेम प्रणयः स्नेहो रागानुरागव्यसनानि ।**
**अङ्कुरकन्दलशाखापल्लवकलिकाप्रसूनफलानीति ॥**

अथ श्रीमत्प्रभुचरणा: हरेर्भावात्मकस्य शृङ्गारोत्तररसात्मकस्य स्वरूपवैचित्र्यनिरूपणाय सकलफलप्रदत्वज्ञापनाय व्रजमात्रस्थितिसिद्धये तदन्यत्रागमनाय तदेकार्थतावगतये तत्तोप्यत्वाय तत्सेचनाद्यधीनवृद्धिमत्त्वाय तच्छायादिसर्वोपयोगित्वाद्यर्थं फलरूपत्वेपि वृक्षत्वेनैकपद्येन निरूपयन्ति **भावैरिति** ।

**भावैरङ्कुरितं महीमृगदृशामाकल्पमासञ्चितैः(तं)**
**प्रेम्णा कन्दलितं मनोरथमयैः शाखाशतैः संभृतम् ।**
**लौल्यैः पल्लवितं मुदा कुसुमितं प्रत्याशया पुष्पितं**
**लीलाभिः फलितं भजे व्रजवनीशृङ्गारकल्पद्रुमम् ॥ १ ॥**

अयमर्थ: । श्रुतीनां वरदानप्रस्तावे प्रदर्शितं यद्रूपं भावात्मकं तत्तदानीमेव तासां हृदये प्रनिष्टमत एव मनोरथो जात: । नहि भगवति हृदयानारूढे तद्विषयको मनोरथो भवति, ततस्तस्य हृदयस्थस्य प्रादुर्भावे तत्कालमेव नवीनोत्कटतापप्रादुर्भावो भवति, तदौत्कट्यं त्वतिभावनया भूयसा कालेन भवति । अत एव वरदाने प्रभुणापि फलप्राप्त्यधिकरणभूत: कालः सारस्वतकल्प उक्त: । 'कल्पं सारस्वतं प्राप्ये'ति वाक्यात् । एवं सत्याकल्पं भावनाभिः प्रभो रसात्मकस्य रसरीत्यैव बहि: प्रादुर्भावोभूद्भावितश्रीयशोदाधिकरणे स प्रकारोत्र निरूप्यते **भावैरङ्कुरितमिति** । आकल्पं कल्पमभिव्याप्य आसमन्तात् सञ्चितैर्भावैरात्यैव सवर्धितै: । **सिञ्चितैरिति** वा पाठ: । सिञ्चितै: प्रादुर्भावपर्यन्तं स्वहृदय एव स्थापितैर्भावै:, कदा भगवान् प्रादुर्भविष्यतीति, एवंप्रकारैरङ्कुरितं श्रीयशोदाया गर्भरूपेणाविर्भूतं, यथाङ्कुरं पोषकापेक्षं द्रुमभवनाशाजनकं सङ्गोपितनिजाकारं भूमिशोभाजनकं स्वाश्रयसन्मानकारकं तथा गर्भरूपेणाविर्भूतो भगवानपीति तथाभूतं इत्यर्थ: । ननु कल्प(द्रुम) स्वर्गे आनन्दप्रधाने तिष्ठति भगवाँस्तु भूमाविति कथं तत्तुल्यतेत्याशङ्क्याहु: **महीमृगदृशामिति** । स्त्रियो हि आनन्दप्रधानास्तत्रापि भूमिष्ठास्तत्रापि सुन्दर्यस्तत्रापि चपलतरविशाललोचनयुगला ज्ञानशक्तिपूर्णा भावदृष्टय । तथाच यथा देवानामानन्दानुभवकर्तृणामलौकिकाना भाग्यैः स्वर्गे कल्पवृक्ष उद्गतः, तथा स्वर्गकोटिभ्योप्युत्तमे व्रजेऽसाधारणानन्दानुभवकर्त्रीणां भाग्यैरत्रापि कल्पद्रुमोयमुद्भूत इत्यर्थ: । एवमङ्कुरमभिधाय कन्दलभावमाहु: **प्रेम्णा कन्दलितमिति** । प्रेम्णा प्राथमिकभावेन भगवन्तमाविर्भूतं द्रक्ष्याम इत्याकारकरुचिजनकदिदृक्षारूपेण गेहदेहादिरागनाशकेन कन्दलितं कन्दल सञ्जातं यस्येति तथा, पुष्टगर्भरूपं भगवन्तमित्यर्थः । पुष्ट एव गर्भे एव दिदृक्षाहेतुरुत्पद्यते: । एवं कन्दलभावमुक्त्वा शाखाशतत्वेन तद्भावमाहु: **मनोरथमयैः शाखाशतैः संभृतमिति** । आविर्भावोत्तरं भगवति दृष्टे ये ये मनोरथा उत्पन्नाः करचरणा: प्रत्यङ्गेषु स्वयोग्यप्रकारकभावनारूपास्त एव भावात्मकस्य भगवतोऽवयवभूता इति

तन्मये शाखाशतैरनन्तमूर्तित्वात् भगवतस्तै सभृत सम्मित सम्यक् भृत पुष्ट वेत्यर्थ । एतेनेतद्भावात्मक एव भगवान् भावमात्राकार इति निरूपितम् । एव शाखाभावमुपपाद्य पल्लवभावमाहु **लौल्यै॰ पल्लवितमिति** । लौल्यै घालळीलादिषु मुग्धभावावलोकनेन स्वानुरूपकृतिप्रकग्नरूपैरखिलाङ्गचापल्यै स्वामिनीना पल्लवित पल्लवभाव प्राप्तमित्यर्थ । यथा पल्लवा प्रतिशाखमनन्तास्तच्छोभाकराश्च, तथा भगवत सर्वाङ्गेषु लौल्यानि सवद्रान्यसङ्गचातानि तदवयवशोभाकराणीति तयेति भाव । एव पल्लवभावमुपपाद्य कुसुमभावमाहु **मुदा कुसुमितमिति** । भगवदच्चया मुदा 'चिक्रीडे जनयन् मुदमि'ति वाक्यनिरूपितया कुसुमित कलिकारूपकुसुमयुक्तमित्यर्थ । यथा कुसुमोदय फलोदयहेतु मकरन्दरससुगन्धतादृग्रूपभ्रमरसाहित्यसभूतशब्दस्पर्शादिसर्वविषयानुभवहेतुरवान्तरफलरूपश्च, तथा भगवतोपि तद्विषयकसुखजननहेतुकभावोऽपि तादृश एव मुग्धभावसाहित्येन कलिकारूपश्चेति भाव । एव कलिकाभावमभिधाय पुष्पभावमाहु **प्रत्याशया पुष्पितमिति** । भावदर्शनेन या फलप्रत्याशा 'एव कुर्वन् प्रभु सर्वानभिप्रायान् मनोगतान् । कामरूपतयाऽस्माक पूरयिष्यति निश्चित'मेवरूपा, तयार्तिरूपया स्वतापसयधेन पुष्पित विकसितकुसुमयुक्तमित्यर्थ । यथा पुष्प रविकिरणसयन्धादुन्मुद्रितमाविर्भूतमकरन्द च भवति, तथा भगवानप्येतदार्तिमावमवलोक्य स्वधर्मान् तादृक्चेष्टारूपान् प्रकटयतीति तयेति भाव । एव पुष्पभाव निरूप्य फलभावमाहु **लीलाभिः फलितमिति** । वने भवने च निलायनादिलीला आरभ्य रासान्ताभि स्वरूपानन्ददानात्मिकाभि फलित फलयुक्त जातमित्यर्थ । यथा फलस्रोतसचौ इतराकाङ्क्षानिवारक सर्वानन्दानुभावक सेवासार्थकत्वकृत्, तथा भगवानपि मनोरथानन्दप्रदाने भक्ताना तथा जात इति भाव । एतेन स्वरूपस्य सर्वदा फलरूपस्याप्येवभावे भक्तान् प्रति फलत्वमिति निरूपितम्, तथा भगवतोपि लीलयैव फलमिति पर्यवस्यतीति भाव । तादृश **शृङ्गाररसात्मक कल्पद्रुम भजे** । अयमर्थ । यथाम्रादिषु द्रुमेषु भिन्नो भिन्नो रस तत्तद्रसात्मकाश्च ते ते वृक्षा इति वृक्षत्वे प्रकृतेपि कश्चन रसोऽपेक्ष्य । तदर्थं शृङ्गार एव भगवति रस, तदात्मकश्च स इति शृङ्गार एव य कल्पद्रुम सर्वदानसमर्थ सदातनो निखिलोपास्यो भाग्यवदेकलभ्यो वृक्षस्तद्रूप प्रभु भजे । चेतस्तत्प्रवणरूपया सेवया निरन्तर भावये ह्यनुभवामीत्यर्थ । ननु कल्पद्रुमस्तु दुर्लभ स्वर्गस्थत्वात्, तथा भगवान् भूमौ प्रकटत्वेनानेकजनप्रत्यक्षविषयत्वात् सुलभ इति कथ तत्तुल्य इति चेत्तत्राहु **व्रजवनीति** । व्रजवन्या सवन्धिन तमित्यर्थ । व्रज एवात्यन्तदुर्लभ । भगवतोपि गुप्ततया स्थितिस्थानत्वात् सर्वथाङ्गीकृतत्वाच्च । तत्रापि वनी वनस्य ततोपि गूढत्वात् । स्त्रीलिङ्गप्रयोगेण [illegible] परमदुर्लभत्व सूचितम् । तथाचैतादृशस्थलवर्तिवृक्षस्य प्रभो स्वर्गस्थकल्पद्रुमतोप्यतिगूढतेति सर्वमवदातम् ।

एव निजाचार्यतदात्मजाततदात्मजाताश्रयमात्रचेतसा ।
निरूपितस्तत्कृतपद्यभावस्तेनात्मदासेतिदया दधाति ॥ १ ॥

इति श्रीहरिदासविरचिता भावैरङ्कुरितमितिपद्यव्याख्या समाप्ता ॥

श्रीमद्-वल्लभाचार्य-महाप्रभु-विरचितम्

# मधुराष्टकम्

## षड्भिष्टीकाभिः समलंकृतम्

१. श्रीमत्प्रभुचरणानाम्
२. तदुपरि श्रीमद्घनश्यामानाम्
३. श्रीमद्बालकृष्णानाम्
४. श्रीमद्वल्लभानाम्
५. श्रीमद्रघुनाथानाम्
६. श्रीमद्हरिरायाणाम्

## परिशिष्टम्

श्रीमद्-वल्लभाचार्य-महाप्रभूपदिष्टा

## शिक्षासार्धत्रयश्लोकी

श्रीद्वारकेशकृतटीकोपेता

श्रीमद् – वल्लभाचार्य – महाप्रभु – वंशावतंस –
नित्यलीलास्थित – गोस्वामिश्री १००८ –
श्रीगोकुलनाथ – महाराजश्रीत्येतेषां –
स्मृतौ – तदात्मजैः – गोस्वामि –
श्री १००८ श्रीरसिकवल्लभैः –
प्रकाशितम्

वि. सं. २०३६ श्री वल्लभाब्दाः ५०३

प्रकाशक :
गोस्वामिश्री १००० श्रीरसिकवल्लभ महाराज
२१, चन्द्रविला, नोर्थ-साउथ रोड नं. १२,
जुहुस्कीम, पारले, बम्बई-४०० ०५६, भारत

साधारण संस्करण २००० प्रति
राज संस्करणं १००० प्रति
श्रीवल्लभाब्दा : ५०३

ग्रन्थ-परिचय लेखक : गोस्वामी श्याम मनोहर

मुद्रक :
वी. वरदराजन
एसोसिएटेड एडवर्टाइजर्स एंड प्रिंटर्स
५०५ तारदेव, आर्थर रोड,
बम्बई, ४०० ०३४.

॥ श्रीकृष्णाय नमः ॥

॥ श्रीमदाचार्यचरणकमलेभ्यो नमः ॥

# ग्रन्थ-परिचय

एक किंवदन्तीके अनुसार मधुराष्टकम् स्तोत्रका प्रणयन श्रीमहाप्रभुने गोकुलमें ब्रह्मसम्बन्ध-दानकी आज्ञाके हेतु श्रीगोवर्धनधरके प्रकट होनेके समय किया था। श्रीमत्प्रभुचरणका किन्तु इस विषयमें मौन इस किंवदन्तीकी ऐतिहासिकताको सन्दिग्ध बनाता है। इस स्तोत्रपर श्रीबालकृष्णजीकी व्याख्यामें एक विवरण अवश्य उपलब्ध होता है कि श्रावण शुक्ल एकादशीकी मध्यरात्रीमें हुए भगवद्दर्शनके बाद पुनः भगवान्के तिरोहित होनेपर श्रीमहाप्रभुको भगवान्के तीव्र विप्रयोगकी अनुभूति रहती थी, उस अवस्थामें भगवान्की आन्तर अनुभूतिकी तन्मयतामें श्रीमहाप्रभुके श्रीमुखसे मधुराष्टकम्का मधुर गान निःसृत हो गया!

श्रीबालकृष्णजीका तात्पर्य यहां मधुराष्टकम्की रचनाके ऐतिहासिक घटनाक्रमकी सूचना देना प्रतीत नहीं होता किन्तु इस मधुर स्तोत्रके प्राकट्यके मधुर कारणका विवेचन ही प्रतीत होता है।

बृहदारण्यकोपनिषद्में, परमात्मा सभी जीवात्माओंके लिए मधुरूप है तथा सभी जीवात्मायें परमात्माके लिए मधुरूप हैं, ऐसा वर्णन मिलता है। तैत्तिरीयोपनिषद्में परमात्माको रसरूप माना गया है—"रसो वै सः"। वैसे तो ब्रह्मको अपूर्व-अनपर अनन्तर-अबाह्य एकमेवाद्वितीय कहा जाता है, परन्तु श्रुतियोंमें परमात्माको जैसे, 'अरूप' कहा गया है वैसे ही 'सर्वरूप' भी। वही अपूर्व-अनपर अनन्तर-अबाह्य ब्रह्म सर्वानुभू-सर्वानुभूतिरूप भी है ही। वह "सर्वकामः सर्वगन्धः सर्वरसः सर्वमिदम्," (छान्दोग्य) है। अतएव

बृहदारण्यकोपनिषद् कहता है—"स वै नैव रेमे। तस्मादेकाकी न रमते। स द्वितीयमैच्छत्। सहैतावानास। यथा स्त्रीपुमांसौ संपरिष्वक्तौ स इममेवात्मानं द्वेधापातयत्ततः पतिश्च पत्नीचाभवताम्।"

यह सृष्टि—यह द्वैत—यह एकका अनेक नाम—रूपोंको धारण करना—यह अपूर्व—अनपर अनन्तर—अवाह्य ब्रह्मका सर्वानुभू बनना उसके अपने निजानन्द—स्वभावकी अभिव्यक्ति है। यह जगत् परमानन्दरूप परमात्माकी स्वानन्दानुभूतिरूप क्रीडा है—लीला है। इस आनन्दात्मिका क्रीडाकी माया—अविद्या जैसे अशुभ कारणोंमें व्याख्या करना ब्रह्मके आनन्दात्मक रमणकी अस्वीकृति है।

"आनन्दो ब्रह्मेति व्यजानात्," "स वै नैव रेमे" और "स इममेवात्मानं द्वेधापातयत्" वाक्योंके आग्रहरहित विवेचनसे यह स्पष्ट हो जाता है कि आनन्दरूप परमात्मा भी एकाकी रमण नहीं कर पाता परन्तु वह एक यदि अपने आपको अनेक रूपोंमें विभक्त न कर पाता तो यह सृष्टिक्रीड़ा कैसे प्रकट हो पाती? स्वयम् अपने आनन्दकी गहन अनुभूतिके लिए, 'एकमेवाद्वितीयं' ब्रह्म, 'सहैतावानास' बन जाता है। यही ब्रह्मको रसरूप सिद्ध करता है।

ब्रह्म रसरूप है क्योंकि वही रमणकी इच्छासे सर्वानुभूतिरूप बना है। रस आनन्दरूप होता है अतः रसात्मक ब्रह्म आनन्दरूप है। उपनिषद् कहता है इस आनन्दरूप परमात्मासे ही सब कुछ उत्पन्न हुआ है, आनन्दरूप परमात्मामें ही सब कुछ स्थित है और परमात्मामें ही सब कुछ लीन होनेवाला है—"आनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते आनन्देन जातानि जीवन्ति आनन्द प्रयन्त्यभिसविशन्ति तद् विजिज्ञासस्व तद् ब्रह्म।" यह समग्र जगत् परमानन्द परमात्माकी परमानन्दात्मिका क्रीडा है।

अतएव इस आनन्दात्मिका क्रीडामें प्रकट होनेवाली सभी जीवात्माओंके लिए परमात्मा मधु है तथा परमात्माके लिए सभी जीवात्मायें

मधु है– "अयमात्मा सर्वेषा भूताना मधु अस्यात्मन सर्वाणि भूतानि मधु।" श्रीमहाप्रभु अतएव कहते हैं–"मधुराधिपतेरखिल मधुरम्।"

जीवनकी सारी मधुरता परमात्मासे जुड जानेमें है। वही सारी मधुरताओंका स्रोत है। उस मधुराधिपतिकी हर बात मधुर है – उससे सम्बन्धित सब कुछ मधुर है। उसके अलावा – उसकी मधुर क्रीडाके अलावा यह जगत् और कुछ भी नही है। मधुराष्टक स्तोत्र मधुराधिपति परमात्माकी मधुरताका गान है।

परमात्माके मधुरतम रूपकी अनुभूति श्रीकृष्ण द्वारा व्रजमें प्रकट किये गये स्वरूप गुण लीला तथा नामो के साथ अति घनिष्ठतासे जुडी हुई है, पुष्टिभक्तोके लिए। स्नेहपाशसे बध कर श्रीकृष्ण जिनके हृदयमें निरुद्ध हो जाते है, उन्ही जीवोमें श्रीकृष्णके मधुर रूपको देखनेकी, मधुर गुणोके गानकी, मधुर लीलाके अनुभवकी तथा मधुर नामोके उच्चारणकी उत्कण्ठा जगती है।

यह उत्कण्ठा जब विरहकी पीडाका रूप ले लेती है तब हृदयम स्थित प्रेम ही प्रियतमका रूप एवम् प्रियतमकी लीलाओकी अनुभूतिका भी रूप धारण कर लेता है। भगवान्के विप्रयोगमें भी उनके स्वरूप एवम् लीलाओ की आन्तरिक अनुभूति आन्तर-सयोग कहलाती है। श्रीमहाप्रभु इसे 'परमफल' कहते हैं–"आन्तर तु पर फलम्।" क्यो कि यह आन्तर अनुभूति गाढ तन्मयताके क्षणोम अन्त स्थित प्रभु के रूपको एवम् अन्तरमें चलती भगवद्लीलाओको भी बाहर प्रकट कर देती है। भगवान् और उनकी मधुर लीलाओ का बाहर प्रकट हो जाना भक्तके मनोरथकी सर्वात्मना पूर्ति है। अतएव श्रीमत्प्रभुचरण भ्रमरगीतकी टिप्पणीमें कहते है–'एतासा तु बहि प्राकट्यमेवाभीष्ट सदैव ईश्वरवाद अन्यदा तु शून्यवाद एव।"

मधुराष्टक स्तोत्र भक्तके अन्त करणमें छिपे हुए भगवान्के मधुर रूप गुण एवम् लीलाओ को प्रकट करनेका मधुरतम साधन है

आवश्यकता है केवल तीव्रतापके साथ इसके गानकी ! श्रीकृष्णकी मधुर अनुभूतिके लिए जिनमें हृदयमें तीव्र ताप हो ऐसे ही रसिक भक्त इस मधुर स्तोत्रके पाठ करनेके सच्चे अधिकारी हैं। अन्य नहीं।

प्रार्थये रसिकाः स्वैरं पश्यन्त्विदमहर्निशम्।
एतद्रसानभिज्ञस्तु माद्राक्षीदपि वैष्णवः ।।

(श्रीमत्प्रभुचरण)

प्रस्तुत संस्करण वि. सं. १९७५ में प्रकाशित संस्करणका ऑफसेट प्रोसेस द्वारा पुनर्मुद्रित रूप है। उस संस्करणके प्रकाशक तथा सम्पादक थे श्रीमूलचन्द तुलसीदास तेलीवाला। इस पुनः प्रकाशनके अवसर पर हम उनका कृतज्ञतापूर्वक स्मरण करते हैं।

इस ग्रन्थके परिशिष्टके रूपमें वि. सं. १९७८ में प्रकाशित शिक्षा-सार्धत्रयश्लोकीपर श्रीद्वारकेशजीकी व्याख्याका योजन नूतनतया हमने किया है। इस संस्करणका प्रकाशन श्रीजीवनाचार्य-पुष्टि-सिद्धान्त कार्यालयसे हुआ था तथा सम्पादक थे श्रीचीमनलाल ह. शास्त्री एवम् श्रीहरिकृष्ण शास्त्री। इन सभी महानुभावोंका हम कृतज्ञतापूर्वक स्मरण करते हैं।

---

# प्रास्ताविकम् ।



अयं फलात्मको ग्रन्थः कस्यचिद्वैष्णवस्य द्रव्यसाहाय्येन प्रकटीकृतः । स च द्रव्यं विना महानुभावेभ्यो वैष्णवेभ्यो वितरिष्यते । अत्र पञ्चटीकानां संग्रहः कृतः । श्रीमत्प्रभुचरणानां विवृतिरनेकपुस्तकतः संशोध्य मुद्रिता । तथैव श्रीमद्बालकृष्णानां, श्रीरघुनाथानां, श्रीघनश्यामानां च टीका अनेकपुस्तकसाहाय्येन संशोध्य मुद्रिताः । श्रीवल्लभकृतटीकाया एकमेव पुस्तकं गोस्वामिनीश्रीकृष्णप्रियात उपलब्धम् । तदपि नूतनमशुद्धं च । यथामति संशोध्यात्र मुद्रिता । श्रीहरिरायकृता मधुराष्टकटीका मत्समीपे वर्तते, परन्तु तस्या अत्यन्ताशुद्धत्वान्न मयात्र मुद्रिता । तेषां मधुराष्टकतात्पर्यमत्र निवेशितम् ।

पुस्तकसंग्रहे गोस्वामिनीश्रीकृष्णप्रियाणां, पण्डितगट्टूलालसंस्थायाः, 'तनसुखराम मनःसुखराम त्रिपाठी' इत्यस्य; पुस्तकशोधने वसन्तरामशास्त्रिणः, पुस्तकलिखने 'धैर्यलाल सांकलीया' इत्यस्य च महत्युपकृतिः, चन्दुलाल चुनीलाल शाहेत्यस्य च । अस्य ग्रन्थस्य व्ययकर्तुश्चोपकृतिस्तु सर्वथाऽविस्मरणीया । तदनिच्छयैव तन्नाम प्रकटीकर्तुं नाहं शक्नोमि ।

'प्रार्थये रसिकाः स्वैरं पश्यन्त्विदमहर्निशम् ।
एतद्रसानभिज्ञस्तु मा द्राक्षीदपि वैष्णवः ॥'

इति श्रीमत्प्रभुचरणानामाज्ञा वाचकैरवश्यमेतद्ग्रन्थवाचनात्प्रागनुसन्धेयेति निवेदयामीति ।

मुम्बई,
वसन्तपञ्चमी.
१९७५.

मूलचन्द्र तेलीवाला.

श्रीकृष्णाय नमः ।

श्रीगोपीजनवल्लभाय नमः ।

श्रीमदाचार्यचरणकमलेभ्यो नमः ।

# मधुराष्टकम् ।



अधरं मधुरं वदनं मधुरं नयनं मधुरं हसितं मधुरम् ।
हृदयं मधुरं गमनं मधुरं मधुराधिपतेरखिलं मधुरम् ॥ १ ॥

वचनं मधुरं चरितं मधुरं वसनं मधुरं वलितं मधुरम् ।
चलितं मधुरं भ्रमितं मधुरं मधुराधिपतेरखिलं मधुरम् ॥ २ ॥

वेणुर्मधुरो रेणुर्मधुरः पाणिर्मधुरः पादौ मधुरौ ।
नृत्यं मधुरं सख्यं मधुरं मधुराधिपतेरखिलं मधुरम् ॥ ३ ॥

गीतं मधुरं पीतं मधुरं भुक्तं मधुरं सुप्तं मधुरम् ।
रूपं मधुरं तिलकं मधुरं मधुराधिपतेरखिलं मधुरम् ॥ ४ ॥

करणं मधुरं तरणं मधुरं हरणं मधुरं रमणं मधुरम् ।
वमितं मधुरं शमितं मधुरं मधुराधिपतेरखिलं मधुरम् ॥ ५ ॥

गुञ्जा मधुरा माला मधुरा यमुना मधुरा वीची मधुरा ।
सलिलं मधुरं कमलं मधुरं मधुराधिपतेरखिलं मधुरम् ॥ ६ ॥

गोपी मधुरा लीला मधुरा युक्तं मधुरं मुक्तं मधुरम् ।
दृष्टं मधुरं शिष्टं मधुरं मधुराधिपतेरखिलं मधुरम् ॥ ७ ॥

गोपा मधुरा गावो मधुरा यष्टिर्मधुरा सृष्टिर्मधुरा ।
दलितं मधुरं फलितं मधुरं मधुराधिपतेरखिलं मधुरम् ॥ ८ ॥

इति श्रीमद्वल्लभाचार्यचरणप्रकटितं मधुराष्टकं सम्पूर्णम् ।

श्रीकृष्णाय नमः ।

श्रीगोपीजनवल्लभाय नमः ।

श्रीमदाचार्यचरणकमलेभ्यो नमः ।

# मधुराष्टकम् ।

## श्रीमद्विट्ठलेश्वरविरचितविवृतिसमेतम् ।

नमामि श्रीमदाचार्यान् निगूढहृदयान् प्रभून् ।
भक्तेच्छापूरकान् सर्वाज्ञातलीलातिमोहनान्[1] ॥ १ ॥

**अधरं मधुरं वदनं मधुरं नयनं मधुरं हसितं मधुरम् ।**
**हृदयं मधुरं गमनं मधुरं मधुराधिपतेरखिलं मधुरम् ॥ १ ॥**

श्रीमत्प्रभुचरणाः प्रियव्रजस्थितित्वेन दैवोद्धारप्रयत्नात्मत्वेन च स्वान्तर्निगूढान् अलौकिकानुभावान् स्वसर्वस्वान् स्वीयानामनुग्रहार्थं[2] प्रकटीकृतवन्तः **अधर**मित्यादिना **मधुराधिपते**रिति । मधुरा श्रीमद्राधा अधरसुधा च तस्या अधिपतेरिति भावः । एतदर्थमेव प्राकट्यात् । एतादृशमाधुर्यं नान्यत्र । लीलासहितस्यैव सर्वस्वत्वात् । रसावेशजनितमर्यादारहितयोः क्वचिल्लताकुञ्जे गुञ्जन्मधुव्रते सुवर्णयूथिकादिकुसुमरचितकेलिशयने प्रियसख्यानीतविविधताम्बूलाङ्गरागपुष्पहारयावकाञ्चनपात्रसिन्दूरकञ्चुक्यादिसहितमणिमुक्ताहारादिसम्पन्नान्तरे मधुरकलमुरलिकानादानुगमञ्जीरस्वने लतान्तरे(ण) सखीनिरीक्षिते परस्पर-

---

### श्रीघनश्यामविरचितमधुराष्टकविवृतिटिप्पणी ।

**मधुराधिपते**रित्यस्य विवृतौ **श्रीमद्राधाधरसुधे**ति । 'राधाधरसुधापातु किमन्यन्मधुरायितम् । यन्निवेद्य तदप्येतन्नामसम्बन्धतो भवे'दित्यत्र निरूपितं सुधामाधुर्यमित्यर्थः । एतदर्थमित्यस्य एतदर्थमिति । सुधाग्रहणार्थमेव प्राकट्यात् । तत्रापि लोमगतत्वेन तद्ग्रहणेन तदेकपरता भवति । तत्रापि सुधा यथा देवभावोद्बोधिका तथा इयं एतद्रसभावोद्बोधिका । तत्रापि राधा सिद्धिरूपा, तद्गतत्वेन ग्रहणे सर्वसिद्धिसम्पादिकेत्यर्थः । एतादृशत्वं नान्यत्र । **लीले**ति । अनायासेन हर्षात् क्रियमाणा चेष्टा लीलोच्यते । लीलासहितो भगवान्, श्रीमदाचार्याणां सर्वस्वत्वादिति निरूपितम् । **रसावेशे**ति । **कीदृशे वने? गुञ्जन्मधुव्रते** । 'ततश्च कृष्णोपवने जलस्थले'त्यत्र निरूपितं मर्यादाराहित्यमित्यर्थः । तत्र भगवत्सम्बन्धिविविधसुगन्धमालापुष्पतल्पश्रमाम्भ सक्रान्तत्वेन मोदनिरन्तरं लीलास्थानत्वात् । तत्र कुञ्जेऽस्तीति लम्पटा मधुपा लीलोद्बोधकाले झङ्कारं कुर्वन्ति । तेन शब्देन कुञ्जज्ञानं सम्भवति । अत्र कुञ्जेऽस्तीति प्रियसखीवत् कुञ्जप्रदेशज्ञापका इत्यर्थः । **विविधे**ति । एतादृशानां पदार्थानामानयनं रतान्ते पुनः शृङ्गारार्थम् । अथवा विपरीते भगवति योजनार्थं पूर्वमानीतमिति लक्ष्यते । **मधुरकले**ति । भगवान्

---

१ मोहितानिति पाठः । २ स्वीयानामर्थं इति पाठः ।

लावण्यविभवयोः स्मारंस्मारं माधुर्यमनुवर्णयन्ति । तत्रापि प्रियायाः त्रपार्धनतेक्षणकटाक्ष-निरीक्षिते रदनच्छददानसुषमामधुरे गण्डद्वये गाढचुम्बनादिना ताम्बूलादिविचित्रिते प्रियानासापुटगतमुक्ताफलपीडनेन अरुणतराङ्किते घनतिसूक्ष्ममुक्ताफलावलीशोभितकर्णालङ्कारसङ्गतहरिन्मणिमुक्तारुणमणिगुम्फलितालकावलीराजिते अगरुसारकस्तूरिकाकाश्मीरमणिरचितबिन्दुभाले कुपितयेव रचितभ्रूभङ्गे विमर्दव्यस्तरचने अन्योन्यगण्डद्वयसङ्गे रतिश्रमशीकरार्द्रप्रियगण्डस्थतिलकरचनाप्रतिकृतिशोभिते मुक्तालङ्कारभूषितसुनासापुटे वदने । किञ्च, प्रियस्य विजितबिम्बाधरे कनकसूत्रसूत्रितबृहत्सुभगामलमुक्ताफलसंशोभितश्वासाद्रोन्नतिनतिमन्नासापुटे त्रिभुवनविजयव्यग्रनयनपुटे कुटिलभ्रुवि दरहासप्रियस्पर्शविगलितामलसौरभलुब्धमधुलिहि मल्लिकादियुतमेचककेशपाशे किञ्चिद्दुखचिबुके हीरकादिमणिमुक्तालकावलीविराजिते प्रतिक्षणप्रवृद्धप्रेमप्रोद्यत्सीत्कारे मकरकुण्डलमण्डितगण्डमण्डले कदाचित् चकितनयने वदने । पुनः प्रियाया हृदये गुञ्जामणिहारवति श्यामकञ्चुकीपिहिते मृगमदपत्राङ्कितकुङ्कुमरचने लावण्यसरसि सश्लिष्टोच्चकुचे रतिश्रमशीकरप्रोञ्छनार्द्रविचित्रवसनाञ्चलगोपिते कनकयूथिकाकुसुममाल्यशोभिते अतिगौरे विविधमहामणिजटितकनकमुद्रिकालङ्कृतप्रियाङ्गुलिसन्दर्शितविपाटितकञ्चुक्यवकाशे । किञ्च, कण्ठाभरणभूषिते तदनुमुक्ताफलयष्टिपरम्पराविराजिते पीनोन्नते प्रियालिङ्गनविमर्दितस्रजि हाटकमणिजटितमुरलिकाशोभितदक्षिणकरे क्षणे क्षणे समाश्लिष्टप्राणप्रिये शिथिलोत्तरीये प्रियहृदये । किञ्च, अवसरविशेषे तादृशसखीविज्ञापिते लतागेहान्तरे विकचविविधरुचिर-

---

मध्यमुरलीनाद करोति येन स्वामिन्यागमने चरणमञ्जीरस्वनो मुरलीनादोपि अनुगतो भवति, तेन कस्यापि ज्ञान न सम्भवति । एतदर्थमुक्त लतान्तरेति । महारसे सन्निधौ स्थातुमशक्यत्वात् । रतिसमये तत्स्वामिन्या जयमवलोकनार्थं स्वस्य सन्तोषार्थं लतान्तरे स्थित्वा अवलोकयन्तीत्यर्थ । त्रपेति । पूर्णत्रपया नाऽनङ्गोत्पत्ति । त्रपागमस्तु पूर्णे रसे भवति । अत्र निरीक्षणे त्रपार्द्रत्वेन प्रेमातसंरम्भनिरीक्षणेन अनङ्गोत्पत्तिं करोतीत्यर्थ । नितराभीक्षणकथनेन रदनच्छददानसुषमां प्रियस्य दर्शयतीत्यभिप्रायेणोक्तम् विमर्देति । विविधबन्धलीलया व्यस्ता श्रीअङ्गरचना यस्या । एतेन महासौरतं द्योतितम् । अत एवाग्रे अन्योन्यगण्डद्वयसङ्ग इत्यत्र सुरतान्तावस्था निरूपिता । मुक्तालङ्कारेति । मुक्तानामले पूर्णत्व जात मुक्ताफलत्वेन महारसमयत्वादित्यर्थ । प्रियस्येति । बिम्बफलस्य विशेषेण जितत्वेन अपरस्य रागसाम्येन जितबिम्बत्वम् । परमत्र सुधाधिक्येन विजितमित्यर्थ । कदाचिदिति । कदाचिदनागमनदशायां भित्तिरूपत्वात् स्थाने कृते पत्रादीनां चकितनयने भवत, यथा 'पतति पतत्रे विचलितपत्रे शङ्कितभवदुपयान'मिति तदर्थम् । गुञ्जामणीति । महारसे प्रसन्नेन प्राणप्रियेण स्वहस्तेन गुञ्जामाला दत्ता तां परिधाय स्थितामित्यर्थ. । अवसरेति । लीलानन्तरमुभयस्य पुन श्रृङ्गार

---

१ बिम्बाधरोष्ठेति पाठ । २ तत्रेति पाठ । ३ ताम्बूलादिनेति पाठ । ४ श्वासदरेति पाठः । ५ प्रियस्येति नास्ति । ६ उज्ज्वलेति पाठ । ७ पदेति नास्ति ।

---

१ त्रपार्धेति पदो मूले कथितम् । २ गुञ्जेति च पाठ । ३ स्थाने इति वा पाठ ।

प्रसूनप्रोद्भूतगन्धलोलुपमधुपे धीरपवने पिकादिसमाकुले रचिततल्पे रन्तुकामयोः पूर्वोक्तविषयोः मार्गस्थविचित्रपुष्पपक्षिसख्यादिषु निहितापाङ्गयोः मध्येमार्गं कृतविविधचुम्बनाश्लेषादिरसयोः रचितपुष्पगुच्छोत्क्षेपणयोः गजेन्द्रलीलयोः अंसासक्तबाह्वोः उपात्तलीलाकमलयोः चर्विततांबूलयोः कृतकलगीतयोः वेत्रनिवारितमृदुलतयोः वागगोचरसुषमामधुरयोः गमने यो माधुर्यानुभवो जातः तमेव ध्यायंध्यायमनुवर्णयन्ति गमनं मधुरमित्यनेन । निरवधित्वेनैवविधैकैकस्य रसाकरत्वेन तन्निमग्नत्वेन च वर्णनाशक्तिं प्रतिपादयन्ति अखिलमित्यनेन । किञ्च । अखिलं मधुरमित्यनेन कदाचित् विपरीतशृङ्गारेपि पूर्णरसानुभवस्तादृश एवेति सूचितम् ॥ १ ॥

ताहशानेव समयविशेषोत्पन्नान् स्वप्राणरूपानाहुर्द्वितीयेन वचनमित्यादिना ।

**वचनं मधुरं चरितं मधुरं वसनं मधुरं वलितं मधुरम् ।**
**चलितं मधुरं भ्रमितं मधुरं मधुराधिपतेरखिलं मधुरम् ॥ २ ॥**

श्रीमत्प्रभुप्राणप्रियाया मिथ्याकुपिताया जितपिकध्वनिकूजितायाः कुटिलभ्रूवल्ल्याः सुशोणतराधरायाः अनङ्गातिभरस्नेहार्द्रापाङ्गनिरीक्षितप्रियाननायाः प्रियकृतरभसवलितसङ्कुकूलनियन्त्रणायाः प्रियाचरितोरोजालम्भनायाः छलकृतपाणिपिहितसर्वाङ्गचुम्बनामोदपुलकितप्रतीकायाः कपोलाञ्चलव्यवहितवचनरचनायाः सस्मितायाः अङ्गुष्ठाभरणप्रतिबिम्बितश्रीमत्प्राणप्रियमुखकमलादिसन्निधिविभ्रमेण रसावेशे पूर्वं मयैव चुम्बनं कर्तव्यमिति कृताभरणचुम्बनायाः विपरीते वचनादौ रसभ्रमितायाः केलिशयने मुग्धभावावस्खलितायाः वचनादिकं मधुराधिपतिसम्बन्धि सर्वं मधुरमिति भावः । अखिलेत्यस्यार्थः पूर्ववद् भावनीयः ॥ २ ॥

**वेणुर्मधुरो रेणुर्मधुरः पाणिर्मधुरः पादौ मधुरौ ।**
**नृत्यं मधुरं सख्यं मधुरं मधुराधिपतेरखिलं मधुरम् ॥ ३ ॥**

अतःपरं कदाचित् प्रभुर्विविधकुसुमितफलितलताद्रुमनिकुञ्जपुञ्जसमृद्धगोवर्धनाद्रिशिखरस्थितो गोचारणपरायणोऽस्ति । गोरसविक्रयादिव्याजेन प्रियार्थं विविधवस्तूनि गृहीत्वा प्रियसखिकथितं 'वेणुरवं शृणु किमाकुला गच्छसी'त्याकर्ण्य सहचराज्ञातस्वागमनसूचकं

---

दिकं विधाय हस्ते मुरलिकां दत्त्वा आदर्शादिषु परस्परप्रतिबिम्बदर्शनेन अत्यार्तिभरं दृष्ट्वा तादृशात्यन्तरङ्गसखीभिर्विज्ञापितम् । अन्यत्र कुञ्जेषु गन्तव्यम् । तत्र च लीला कर्तव्येति विज्ञापितमित्यर्थः । गोचारण इति । वयस्यानां बुद्धिस्तु गवामवलोकनार्थं प्रभुः गिरिशिखरे स्थितः । प्रभुस्तु स्वप्राणप्रियाणां दूरात् सौन्दर्यगतिविलासार्तिभरविचित्रवस्त्राभरणचकितावलोकनाद्यवलोकनार्थं गिरिशिखरे स्थित इत्यर्थः । तदेक इति । भगवत्येव मनो यासाम् । कुत्र मिलिष्यति ? कथं मिलिष्यति ? कुञ्जे वा गोपसमाजे वा गोधने वा गोवर्धने वा कुत्र मिलिष्यतीति । तदेकमानसाभिः । किमाकुलेति ।

---

१ नदेति पाठः । २ हस्तन्तेनेति पाठः । ३ प्रियाननश्रिया इति पाठः ।

कालिन्दीतटप्रदेशे स्थितरसनिकुञ्जसूचकं रसात्मकं वेणुरवं श्रुत्वा तत्र गताभिः प्रियाश्लिष्टाभिः श्रमजलार्द्रकुचकुङ्कुमाङ्कितस्वोत्तरीयविहितालकस्थगोरेणुप्रोञ्छनाभिलाषाभिः वेणौ रेणौ च प्रियपाणिस्पर्शपुलकितप्रतीकाभिः पूर्वचिंतविविधकुसुमविनिर्मितशयनोपविष्टस्य चरणसंवाहनपरायणाभिः मत्तेभगतिभिस्तदेकमानसाभिर्निर्गतं तदा दूरात् दृष्ट्वा प्रतीक्षन् शिखरादवरुह्य रसात्मकं नृत्यं कुर्वन् स्वानुरागभरं दर्शयन् समागतस्य आनन्दाब्धिनिमग्नाभिर्वेण्वादिषु समनुसरसं ध्यायध्याय अनुवर्णितं वेणुरित्यादिना । मधुराधिपतेरित्यादि पूर्ववत् ॥ ३ ॥

**गीतं मधुरं पीतं मधुरं भुक्तं मधुरं सुप्तं मधुरम् ।**
**रूपं मधुरं तिलकं मधुरं मधुराधिपतेरखिलं मधुरम् ॥ ४ ॥**

तादृशरसनिकुञ्जस्थल एव कदाचित् प्रियेण समं रसपरवशाभिर्गीतम् । किञ्च, परस्परं रसावेशेन यदधरसुधारसं पीतं, प्रियानीतविविधघृतदुग्धमोदकादि स्वाभिलाषसूचकं भुक्तं तादृशस्वाभिलाषसूचकघृतदुग्धमोदकाद्यङ्गीकृत्यानन्तरं कुसुमशयने तत्तदभिलाषं शयनं निधाय पूरितवान् । रसावेशजनितमर्यादाराहित्येन क्रीडने स्वामिन्यादिकृतरूपमङ्गीकृतवान् । तल्लीलाऽभिलाषपूरणानन्तरं व्यस्तशृङ्गारे तिलकादिरचनां श्रमार्द्रतया उभयत्राङ्कितां यदनारविन्दयोरनुभूतां प्रदर्शितवान् । तमानन्दविशेषं स्मारस्मारमनुवर्णयन्ति गीतमित्यादिना । मधुराधिपतेरित्यादि पूर्ववत् ॥ ४ ॥

**करणं मधुरं तरणं मधुरं हरणं मधुरं रमणं मधुरम् ।**
**वमितं मधुरं शमितं मधुरं मधुराधिपतेरखिलं मधुरम् ॥ ५ ॥**

अत परं सदा मनसि भावितेऽह्नि विहारेच्छया निर्गतानां समुद्ग्रथितमालतीकुरवकादिकुसुमपरिमलोन्मदभ्रमरयूथाकुलकेशपाशानां स्मितनिकाशविभ्रमगलल्लावण्याननानां हीरका·

---

देहानुसन्धानरहिता मार्गानुसन्धानरहितेत्यर्थः । प्रदेशमिति । वेणुनादेन सूचितकालिन्दीतटप्रदेशमित्यर्थः । वेणुरवमिति । वेणुषु त्रिविधं स्वरं करोति । सङ्केतरूपं निकटनिकुञ्जसूचकं मन्दस्वरम् । किञ्चिद्दूरनिकुञ्जसूचकं मध्यस्वरं । दूरनिकुञ्जसूचकं तारस्वरं । अन्यथा वेणुनादे गानं कृत्वा सङ्केतं यदि सूचयति तदा यथ्यादीनां ज्ञानं भवति । तस्मात्नादभेदेन रसात्मकं सूचयति यथा कोऽपि न जानातीत्यर्थः । रसात्मकमिति । यथा मयूरो मयूरीं दृष्ट्वा रसाविष्टो भूत्वा मर्यादागतरसं एकत्रकरणार्थं तासां यथेप्सितरसदानार्थं नृत्यति, तथा नृत्यं प्रभुः करोतीत्यर्थः । स्वाभिलाषेति । यस्य योऽभिलाषः उरोजादिस्पर्शानन्दरूपः तद्दर्शनेन तत्स्पर्शं इव मन्यमानः मन् भुक्तवानित्यर्थः । तत्तदभिलाषमिति । पूर्वसञ्चितमनोरथविविधविधिविशेषजनितरसविशेषदानपूर्वकं शयनमित्यर्थः । तत्तदभिलाषमिति । स्वामिन्यादीनि । मर्यादाराहित्यरमणे निःशङ्कपक्षभूषणादीनां व्यत्यासो भवति । पुनः कृत इत्यर्थः । अथवा मर्यादाराहित्ये तु विपरीतसुरते भवति । तदा स्वामिन्या कृतरूपमङ्गीकृतवानित्यर्थः ।

**इति श्रीगोस्वामिसुतश्रीघनश्यामविरचिता मधुराष्टकटिप्पणी सम्पूर्णा ॥**

---

१ रहितेति पाठः । २ स्वच्छानमिति पाठः ।

दिमणिगणरचितमृगमदादितिर्यग्रेखशोभितभालनिन्दूनां नासापुटाग्रगतोदारलोलमुक्तानां स-माश्लिष्टोरोजेषु तरलितहाराणां विचित्रवसनान्तरशोभिताखिलाकल्पानां अलक्तकाऽङ्किताङ्गु-लिनिराजितनिविधनूपुराणां मूर्ध्न्यलोलग्रीव दधिकलशिकां वहन्तीनां व्रजाधिपसुतो वयस्यै रोधं सम्पाद्य समीपागतश्चकितनयनः प्रियाहृतचेताः वदनेन्दुसुषमामोहिताशेष-गोपवधूजनो वक्रोक्तिकपोलोरोजादिस्पर्शाविर्भावितमनोभवः दूरगगवाद्यनेक्षणापदेशापमा-रिताशेषनयस्यवृन्दः उपात्तोत्तमाङ्गस्थितदधिभाजनः करैकगृहीतविविधमणिमयकाञ्चीपट्टप्रसूनः विविधरुचिरप्रसूनप्रोद्भूतामलपरिमलोन्मत्तमधुपलतागेहानीतप्रियाजनो यद् यत् कृतवान् नीतवान् प्रेमाब्धितरणं सम्पादितवान् रमणं च मर्यादारहितं, वमितं हारादीनां, शमितं क्षुद्रघण्टिकादीनां, तत्सामयिकं ध्यायध्याय अनुवर्णयन्ति करणमित्यादिना । मधुराधिपतेरित्यादि पूर्ववत् ॥ ५ ॥

**गुञ्जा मधुरा माला मधुरा यमुना मधुरा वीची मधुरा ।**
**सलिलं मधुरं कमलं मधुरं मधुराधिपतेरखिलं मधुरम् ॥ ६ ॥**
**गोपी मधुरा लीला मधुरा युक्तं मधुरं मुक्तं मधुरम् ।**
**दृष्टं मधुरं शिष्टं मधुरं मधुराधिपतेरखिलं मधुरम् ॥ ७ ॥**

एवं कदाचित् तरणितनयाकूले बकुलाम्रकदम्बादिद्रुमाकुले धीरगन्धवाहे, केलिहिते रहसि, स्नानादिव्याजेन समागतया श्रीमत्प्रभुप्राणप्रियया मकरकुण्डलमण्डितगण्डमण्डलप्रभो-द्योतिताखिलभुवनः कमलदललोचनः अधरार्पितवेणु गुञ्जामणिमुक्ताहारादिराजितोरःस्थलः अवलोकितप्रियः निखिलमनोरथरूपागतः आश्लेषादिलीलां कृतवान् । यमुनायां सलिलकम-लादीना च क्रीडां कृतवान् । ततो निर्गमने सति निकुञ्जे पुष्पावलीरचितशयनकेलिजनितश्र-माम्भःसक्रान्ताननकमलया प्रियदत्तकमलकृतलीलया प्रियया, वनार्थं मार्गाः बहवः स्फुटिता इति प्रियेण सह यावत्पर्यन्त मार्गविभेदो भवति तावत्पर्यन्त गेहार्थं प्रचलितया प्रियार्पित-स्वोरःस्थहारया सङ्गतस्य मन्थरगते क्षण क्षण कृताश्लेषस्य घूर्णायमाननयनस्य सुषमावलो-कनैकपरायणस्य कदाचिद् पश्चात् कदाचिद् बाहुबन्धेन कदाचिदग्रतो गहने लतापिहितोदरे यथामार्गसौकर्यं भवति । एवं मार्गसन्धिस्थितयोः परस्परदृष्टे यामीत्याज्ञा गृहीत्वा गतयोः कृतान्योन्यगुञ्जामालेत्यादिहारविनिमययो कृतो यो माधुर्यानुभवो जात तमेव स्मारस्मार-मनुवर्णयन्ति गुञ्जेत्यादिना **शिष्टं मधुरमित्यन्तेन। मधुरापतेरित्यादि** पूर्ववत् ॥ ६-७ ॥

**गोपा मधुरा गावो मधुरा यष्टिर्मधुरा सृष्टिर्मधुरा ।**
**दलितं मधुरं फलितं मधुरं मधुराधिपतेरखिलं मधुरम् ॥ ८ ॥**

---

१ भ्रमेति पाठ । २ तरलतरेति पाठ । ३ रदने इति पाठ । ४ हासादीनामिति पाठ । ५ गमनार्थ-मिति पाठ ।

तदनन्तरं भगवान् गोपसमाजं सम्प्राप्तः, एतासां गेहागमनानन्तरं सायं प्रियागमनं प्रतीक्षन्त्यो गोष्ठादिषु स्थिताः । भगवानपि गोपसमाजस्थः तैर्गीतकीर्तिर्वेणुवादनपरायणो गोरजश्छुरितकुन्तलो व्रजस्थानां गवां च दिनतापं मोचयन् गोष्ठप्रवेशं करोति । ततो गोदोहने सर्वरसग्रहणार्थं उद्यतस्तदा दर्शनार्थं गतानां विचित्रवसनवतीनां विचित्रसूक्ष्मयष्टिग्रहणेन वर्णादिभेदेन गवाह्वानेन स्वसमीपागमनज्ञापकेन समागतानां सर्वांगोचरकटाक्षस्पर्शादिसङ्केतादिकृतामोदो निखिलरसपूर्णो दृष्टः, तस्मिन् सृष्टौ योऽनुभवो जातस्तमेवानुवर्णयन्ति गोपेत्यादि सृष्टिरित्यन्तेन । अतःपरं वक्तुमशक्यत्वं तन्निमग्नत्वेन प्रतिपादयन्ति दलितमिति । नन्दगेहालवालोदितस्य श्रीमद्गोपीजनरागसेकसंवृद्धकल्पवृक्षस्य दलितफलितादिकं सर्वं मधुरिमासीमा इति ॥ ८ ॥

॥ इति श्रीविठ्ठलेश्वरविरचिता मधुराष्टकविवृतिः सम्पूर्णा ॥



श्रीकृष्णाय नमः ।

श्रीगोपीजनवल्लभाय नमः ।

श्रीमदाचार्यचरणकमलेभ्यो नमः ।

# मधुराष्टकम् ।

## श्रीमद्बालकृष्णविरचितविवरणसमेतम् ।

---

प्रतिक्षणनवोल्लसत्स्मरशतातिलावण्यरुग्-
व्रजेशफलमाधुरीरससुधाब्धिलीलोर्मिभिः ॥
सदा मधुरमूर्तयो विविधभावमुग्धेक्षणाः ।
स्फुरन्तु हृदि मे श्रिया ललितवल्लवस्वामिनः ॥ १ ॥
शरणागतकरुणाभरकरणानिश्चलत्वरान् निजाचार्यान् ।
भजवल्लवजनवल्लभवल्लभनाम्नः प्रभून् नौमि ॥ २ ॥

अथ 'श्रावणस्यामले पक्ष' इति श्लोके श्रीभगवद्दर्शनस्योक्तत्वात् तस्मिन् समये साक्षाद् भगवान् कोटिकन्दर्पाधिकलावण्यगुणलीलाविशिष्टोद्बुद्धरसात्मकस्वरूपेण प्रकटीभूय श्रीमदाचार्याणां देहप्राणेन्द्रियान्तःकरणधर्मादि सर्वं साक्षादलौकिकरसात्मकवचनामृतपोषणेन स्वविषयीकृत्य बहिःसाक्षात्स्वरूपानुभवं कारितवान्, पश्चात् संपूर्णरसदानार्थं तिरोभूय अन्तर्देहप्राणेन्द्रियादिरूपः सन्नन्तरेव च निखिललीलारसानुभवं कारितवान्, अत एव 'स्फूर्जद्रासादिलीलामृतजलधिभराक्रान्तसर्व' इत्युक्तं श्रीमत्प्रभुचरणैः । सर्वोत्तमेपि 'तत्कथाक्षिप्तचित्तस्तद्विस्मृतान्यो व्रजप्रिय' इत्याद्युक्तम् । तदा पुनर्विप्रयोगदशानुभवे तद् विना स्थातुमशक्तौ गुणालंबनेनैव कालनिर्वाह इति श्रीमदाचार्यचरणा अहर्निशं उद्दीपनालम्बनविभावादि रसान्तःपातिसकलसामग्रीसम्पन्नं तत्तत्सामयिकलीलागुणविशिष्टमुद्बुद्धरसात्मकं स्वरूपं यथानुभूतं तत् तथा वर्णयन्ति अधरं मधुरमित्यादिभिः ।

**अधरं मधुरं वदनं मधुरं नयनं मधुरं हसितं मधुरम् ।**
**हृदयं मधुरं गमनं मधुरं मधुराधिपतेरखिलं मधुरम् ॥ १ ॥**

अहो रूपं तु किं वर्णनीयं मधुराधिपतेरखिलमेव मधुरं, यावन्तः तत्पदार्थास्ते मधुराः । अथवा रसाः वीरादयः तेषामपि शृङ्गाररसान्तःपातित्वेन मधुरत्वाद् रसत्वं, अन्यथा तत्त्वमेव नास्ति इति रसशास्त्रसिद्धान्तात् । तादृशानां अधिपतिः शृङ्गाररसः, तद्रूपस्य

---

१ व्रजेशवल्लमाधुरीतिपाठः । २ वल्लभेति पाठः ।

भगवतो यद्यपि अखिलमेव मधुरं, यथा राज्ञः परिधेयानि आभरणानि सुवर्णमयानि उपकरणानि अपि तथा, तथापि यस्य यादृग् रूपमाधुर्यं यस्यां यस्यां लीलायां समनुभूत विप्रयोगे तत्तत्स्मरणे तत्तन्माधुर्यस्य स्वरूपतो विशेषेण वक्तुमशक्यत्वात् तत्तन्नामनिरूपणपूर्वक पृथक्त्वेन तत्तन्मधुरमुच्यते । तत्र प्रथम रसात्मकवचनामृतप्रवेशेन स्वरूपानुभवो जात, तस्याधरसबन्धित्वात् पूर्वं तदनुभव एव अभूत्, इति वर्णनेपि प्रथम तद् **धरं मधुरमित्युक्तम्** । पश्चात् तत्सुधाप्रवेशे सम्पूर्णतद्वदनमाधुर्यलावण्यस्यानुभवो जात इति **वदनं मधुरमित्युक्तम्** । यथा 'बर्हापीडे'तिश्लोकोक्तसुधाप्रवेशानन्तर मक्षण्वता फलमिद'मित्युक्तम् । तदनु वदनमाधुर्यानुभवे कोटिकन्दर्पलावण्यरससवलिता पाङ्गरङ्गतरङ्गविलासानुभवस्य सम्पन्नत्वात् **नयनं मधुरमित्युक्तम्** । तदेवोक्त 'मनुरक्तकटाक्षमोक्ष'मिति, तत्रैव 'मदविघूर्णितलोचन' इत्यादि च । एतेन विचित्रभावलेलितत्व लोचनयोरुक्तम् । ततो विगाढरसे हासरसस्याप्यनुभवात् **हसितं मधुरमित्युक्तम्** । नयनमाधुर्यानन्तर हसितस्य निरूपणात् नयनयोरपि स्मेरत्व सूच्यते । ततो अधरवदनमाधुर्यानुभवतो भगवतो हार्दमपि रसपरवशत्वेन स्वाधीनत्वात् अतिमधुर ज्ञातमिति तथोक्त **हृदयं मधुरमिति** । एतेन यथा स्वस्य भगवति परमा प्रीति, तथा भगवतोपि स्वस्मिन् अनुभूतेति सूचितम् । किञ्च, हृदयपदेन वक्षोपि व्यज्यते । तेन भगवतो हृदय अपि मधुरतरोल्लसदभिनवकैशोरवय क्रमेण किञ्चित् उच्छून सुललितविलास प्रकटीकरोति, इति तादृशमालिङ्गनादौ स्पर्शादौ वीक्षणेपि प्रियाणा महारसानुभावकत्वेन परमानन्ददायक इति तत्स्मृत्वा तन्माधुर्यमुक्त **हृदयं मधुरमिति** । ततो रसान्ते अलसवलितभावादिसहित गमन रसादौ तु विलासलीलापूर्वक तद्भवति इति तदुभयानुभवात् **गमनं मधुरमित्युक्तम्** । एव पृथक्त्वेन तत्तन्माधुर्यनिरूपणे चित्त महारसाब्धौ लीनमासीत् । क्षणानन्तर उद्बोधेन पुन पूर्वरसावेशात् तादृशस्याखिलमेव मधुरमिति अनिर्वचनीयत्वेन अन्ते सर्वत्र **मधुराधिपतेरखिलं मधुरमित्युक्तम्** । अत्र स्मरामि इति क्रियाध्याहार सर्वत्र कर्तव्य ॥ १ ॥

**वचनं मधुरं चरितं मधुरं वसनं मधुरं वलितं मधुरम् ।**
**चलितं मधुरं भ्रमितं मधुरं मधुराधिपतेरखिलं मधुरम् ॥ २ ॥**

तत पुनरेकान्ते परमहृद्यानि नेपथ्यादिरचनरूपाणि धन्यादिविशेषज्ञापकानि परिहासकारकाणि यानि वचनानि 'रहसि संविदो या हृदिस्पृश' इत्याद्युक्तप्रकारकाणि भगवतोक्तानि तेषा माधुर्यस्यानुभूतत्वात् **वचनं मधुरमुक्तम्** । एतस्यैव माधुर्याब्धौ मनसो मग्नत्वात् अन्येषा वक्तुमशक्यत्वेन एकवचनमुक्तम् । वचने पश्चात् तद्वचनोक्तधन्यादिलीलाया तन्माधुर्यमनुभूत भवति इति **चरितं मधुरमित्युक्तम्** । ततस्तद्दृग-

१ विचित्रभावलेलितस्य इति पाठ । २ वल्गितमिति पाठ । ३ मधुरवचनेति पाठश्च । ४ रचनेति पाठ ।

तत्परिधानाचरणे उद्बुद्धरसात्मकस्य भगवत आच्छादकशक्तिरूपत्वेन वसनस्य रसोद्दीपकत्वाद् अवलोकने पुनः तन्माधुर्यमनुभूतं भवतीति **वसनं मधुरमित्युक्तम्** । अत एव 'वर्हापीडे'त्यस्य विवरणे *यत्र वसनाकृतिरपि न सम्यगवलोकिता तत्र तदाच्छन्नं रसं कथमुद्घाटयेयुरित्युक्तम्* । 'रसो हि गुप्त एव रसत्वमापद्येत' इत्युक्त्या तदाच्छादकमावश्यकम् । आच्छादकत्वेपि आकृतिदर्शनं रसोद्बोधकत्वात् सुतरां मधुरं भवतीति तथोक्तम् । ततो रसानुभवे अलसवलितादयो हावभावादयः सात्त्विकादिभावाश्च परममधुरा भवन्तीति तत् स्मृत्वा **वलितं मधुरमित्युक्तम्** । समुदितभावज्ञापनाय वलितपदम् । एते सर्वे रात्रिसम्बन्धिलीलाप्रकारा निरूपिताः । अतःपरं दिवासम्बन्धिलीलानां मधुरत्वं निरूपयन्ति **चलितमित्यादिभिः** । अयं भावः । प्रातर्यदा गोचारणार्थमुद्यतस्तदा वनलीलालोकनाय *अन्तरङ्गवयस्यैः सह नर्मपरिहासादिकं कुर्वन् अवलोकनार्थं बहिःस्थितानां प्रियाणां अतिहृदयङ्गमं लावण्यं प्रदर्शयंश्चलति*, तत्सामयिकं स्मृत्वोक्तं **चलितं मधुरमिति** । अथवा वनादागमनसमयेपि तथैव चलतीति तथोक्तम् । तदुक्तम् 'वनरजस्वलं दर्शयन्मुहु'रिति । अग्रे पुनर्लोके विपिनभ्रमणं मधुरं न भवतीति श्रमहेतुत्वात् भगवतस्तदभावात् तदपि मधुरं निरूप्यते । तथा च वनसम्बन्धिभूम्यादितृणपर्यंतसमस्तपदार्थानां रसात्मकचरणारविन्दमकरन्दसम्बन्धेन *लीलोपयोगिरसात्मकतां सम्पादयितुं* वने भ्रमणं करोतीति चरणारविन्दस्य रसात्मकत्वात् श्रीनिकेतनत्वाच्च भ्रमणजनितरजःसम्बन्धित्वे परमशोभातिशयेन मधुरत्वमेव भवति, नतु कदाचिदपि तदन्यथात्वमिति **भ्रमणमपि मधुरमुक्तम्** । एतदेवोक्तम् 'तृणचरानुगं श्रीनिकेतनम्' इत्यस्य विवरणे । अथवा तत्सङ्केतादिषु स्थितानां भक्तानां मिलनार्थं तत्र तत्र भ्रमणं करोति भगवान्, तत्तु तत्तत्प्रियामिलनोत्कलिकासमाकुलविविधरसभावात्मकमिति परमं मधुरमनुभूतं भवति, सङ्केतस्थप्रेयसीनां चरणारविन्दसंवाहनादिषु लीलायां चेति तत्स्मृत्वा **भ्रमितं मधुरमुक्तम्** । एवं श्रमसूचकमपि सर्वं रसात्मकस्य मधुरमिति निरूपयन्ति **मधुराधिपतेरखिलं मधुरमिति** । रसस्तु यत्र यत्र गच्छति तत्र तत्र रसत्वं सम्पाद्य मधुरत्वं सम्पादयतीति स्वस्य मधुरत्वे किं वाच्यमिति भावः । किञ्च, यथा रसस्य प्रवहणरूपत्वात् भ्रमणेपि मधुरत्वं न गच्छति, तथात्रापीति अपि सूच्यते ॥ २ ॥

**वेणुर्मधुरो रेणुर्मधुरः पाणिर्मधुरः पादौ मधुरौ ।**
**नृत्यं मधुरं सख्यं मधुरं मधुराधिपतेरखिलं मधुरम् ॥ ३ ॥**

अग्रे **वेणुर्मधुर** इत्युच्यते । तस्यायं भावः । सङ्केतस्थलज्ञापनार्थं वेणुनादे कृते 'कलपदैस्तनुभृत्सु सख्य' इत्युक्तत्वात् तत्र स्वनामादिश्रवणात् नादद्वारा तन्माधुर्यमपि अनुभूतं भवति । तथापि सङ्केते समागतानां प्रियसङ्गमे सम्पन्ने तदानन्दजनितपरमसौ-

१ लीलोदकण्ठ्यान्तरङ्गेति पाठः । २ सम्बन्धेपीति पाठः ।

भाग्यशोभाभरेण विलसद्वचनानां तासां प्रियाणां प्रियसमीपवर्तिवेणुविलोकने प्रियप्रापकत्वात् तस्मिन् परमस्नेहभरेण स्वरूपतस्तन्मर्यादालोपकं माधुर्यमनुभूतं भवतीति इति **वेणुर्मधुर** इत्युक्तम् । अधरामृतसम्बन्धेन तस्य तथात्वं स्पष्टमेव । अग्रे **रेणुर्मधुर** इत्युच्यते । तस्यायं भावः । गोचारणे रेणुसम्बन्धस्य आवश्यकत्वाद् अलकादिषु तस्य छुरितत्वेन यथा अलकानां कामरूपत्वेन माधुर्यं, तथा रजसो रजोगुणत्वाद् अनुरागरूपत्वेन परममाधुर्यं दृश्यते इति **रेणुर्मधुर** इत्युक्तम् । एतत्सर्वं 'तं गोरजश्छुरितकुन्तले'ति श्लोके निरूपितम् । वदनकमलसम्बन्धे रजसः परागरूपत्वान्माधुर्यं युक्तमेवेत्यपि सूचितम् । अथवा सन्ध्यायां आगमनसमये गोरेणुसङ्घाते घनीभूते इतरावलोकनाभावात् प्रियसङ्गमे च सम्पन्ने तन्मुखारविन्दकटाक्षादिरसानुभवात् स रेणुरपि परममधुरो भवति इति तथोक्तम् । एतेन अन्धकारादीनामपि लीलोपयोगित्वेन मधुरत्वमेव इति सूचितम् । एतत् स्वरूपं 'पीत्वा मुकुन्दमुखसारघे'त्यस्मिन् श्लोके 'सव्रीडहासविनयं यदपाङ्गमोक्ष'मित्यस्य विवरणे निरूपितम् । अथवा रेणुरत्र चरणारविन्दसम्बन्धी ज्ञेयः । तेन रसात्मकत्वात् लीलोपयोगिदेहसम्पादनैकस्वभावत्वाच्च लीलासम्बन्धिनीनां प्रियाणां तद्विरचितदेहवत्त्वेन तन्माधुर्यमनुभूतं भवतीति तथोक्तम् । अग्रे पुनर्वनादागमनसमये त्रिभङ्गललितस्वरूपेण वेणुं संवादयति तदा वेणुरन्ध्रेषु स्वाङ्गुलिचलने पाणेरपूर्वतरा शोभा प्रकटीभवतीति तत्स्मृत्वा **पाणिर्मधुर** इत्युक्तम् । तथैव पादयो'र्वामजान्वन्ताश्रितातिवक्रदक्षिणजानुक'मित्युक्तप्रकारेण स्थापने अनिर्वचनीयसौन्दर्यं प्रकटीभवतीति तत् स्मृत्वा **पादौ मधुरौ** इत्युक्तम् । तदेवोक्तं 'सौन्दर्यं किमपितरां प्रकटयति प्रेमवलम्ब्य'मिति प्रभुचरणैः स्वरूपवर्णने । अथवा दिवासम्बन्धिचरित्रे वनलीला सर्वा भक्तानां गृह एव अनुभूता भवति, तत्र पुलिन्दीमाग्यानन्दनकरणे भगवत्पदकमलसम्बन्धिकुङ्कुमस्मरणे जाते दयितास्तनरचिततद्रचनाचातुर्यकलातिकमनीयपाणिस्मरणात् तच्छोभामाधुर्यानुभवात् पाणिपादयोर्मधुरत्वं निरूपितमव्यवधानेन । एतच्च 'पूर्णाः पुलिन्द्य' इत्यत्र स्फुटीकृतम् । अथवा सन्ध्यायां तत्तत्प्रियावलोकनजनितविचित्रभावोद्धतरसेन दोहनविधौ नूपुरमुद्रिकादिभूषणभूषितपाणिपादसौन्दर्यमाधुर्यं प्रियाणामनुभूतं भवतीति तथोक्तम् । एतदेवोक्तं 'वेणुस्वनैः कलपदैर्नियोगपाशकृतलक्षणयो' रित्यनेन । अथवा लीलासमये तत्तद्बन्धादिरचनायां कुचकुम्भेषु मकरादिचित्ररचनायां चारुहृदयादिषु स्थापने च तापहारकत्वानन्ददायकत्वशोभातिशयत्वमधुरत्वादिगुणाः सर्वेऽनुभूता भवन्तीति तत् स्मृत्वोक्तं **पाणिर्मधुरः पादौ मधुरा**विति । अत एव 'शिरसि धेहि नः श्रीकरग्रह'मिति 'कृणु कुचेषु नः कृन्धि हृच्छय'मिति ताभिरुक्तं फलप्रकरणे । एवमनन्तप्रकारा भावनीयाः । अग्रे पुनर्नृत्यं मधुरमुच्यते । तस्यायं भावः । अत्र सर्वं व्रजभूषणसीमन्तिनीसम्बन्धिलीलोपयोगि निरूप्यते । तेन सायं

---

१ स्वरूपं वर्ण्यते इति पाठः ।

वनादागच्छन् वेणुं कूजयन् नृत्यन्मयूरानुकरणं कुर्वन् दिवा विरहतापं दयितानामपाकरोति। तन्नृत्यं त्वभिनयात्मकमित्यभिनयकरणे मधुरस्मितपूर्वकभ्रुकुटीभङ्गकटाक्षादिविलासेपूल्लसितेष्वतिरमणीयलावण्यरसभावामृतपोषपुष्टाः प्रिया भवन्तीति तत् स्मृत्वा नृत्यं मधुरमित्युक्तम्। तस्मिन्नेव समये पुनः समानशीलत्वं विना रसः पुष्टो न भवतीति सख्याङ्गीकारे सख्यरसस्याप्यनुभवात् तस्यापि मधुरत्वं निरूपितं सख्यं मधुरमिति। अत एव 'सव्रीडहासविनय यदपांगमोक्ष'मित्यत्र 'पुष्टे रसे हास' इत्युक्तम्। सख्ये सति हाससम्भवादत्र तन्निरूपणात् सख्येनैव रसपोष इति सख्यस्य मधुरत्वं निरूपितमिति भावः। एवं दिवासम्बन्धि सर्वं मधुरमेवेति **मधुराधिपतेरखिलं मधुरमि**त्यन्ते निरूपितम्॥ ३॥

एवं सख्यसहितं नृत्यस्वरूपं निरूप्य गीतं निरूप्यते।

**गीतं मधुरं पीतं मधुरं भुक्तं मधुरं सुप्तं मधुरम्।**
**रूपं मधुरं तिलकं मधुरं मधुराधिपतेरखिलं मधुरम्॥ ४॥**

**मधुरं** इदं **गीतं** नृत्यानन्तरं क्वचिद्देशविशेषे स्थित्वा करोतीति 'रङ्गे यथा नटवरौ क्व च गायमाना'वित्यत्र निरूपितम्। तस्य गीतस्य भावात्मकत्वात् तन्माधुर्यस्य व्रजसीमन्तिनीहृदयैकवेद्यत्वेन **गीतं मधुर**मित्युक्तम्। अथवा अत्र क्रमो न विवक्षितः। श्रीमदाचार्याणां हृदये विप्रयोगरसाविर्भावेन सर्वा एव लीला भगवतो विलासा प्रकटा जाता इति यदैव यत्स्फूर्तिः तदैव तन्निरूपयन्ति इति तत्सामयिकं गीतं सर्वमपि मधुरं निरूप्यते। एवं सति पूर्वं पाणिपादनृत्यसख्यानि निरूपितानि, तेन रासलीलास्फूर्तौ तत्र नृत्यस्य मुख्यत्वादभिनयार्थं पाणिपादयोश्चालनक्रियायां तत्तत्स्थानजनितशोभातिशयलावण्यादीनां अनिर्वचनीयमाधुर्यानुभवात् तन्माधुर्यं निरूप्य पश्चात् नृत्यस्य माधुर्यं निरूपितम्। ततो रसपोषार्थं सख्यं निरूप्य गीतं निरूपितम्। तेन इदं गीतं 'काचित् समं मुकुन्देने'त्यत्र यदुक्तं तदवगम्यते। तत्र भगवतापि गानं कृतमिति उक्तं'मुखब्जस्य नादस्यामृतमयत्वाये'त्याभासेन। स च मधुर एव कर्तव्य इत्युक्तत्वात् तत्स्मृत्वा **गीतं मधुर**मित्युक्तम्। किञ्च, रासलीलानन्तरं प्रातर्भगवति अन्तःप्रविष्टे 'वामबाहुकृतवामकपोल' इत्यादियुग्मश्लोकोक्तनिरूपितलीलासु सर्वत्र गीतस्यानुस्यूतत्वात्माधुर्यानुभवात् तत्सामयिकमपि उक्तमिति ज्ञेयम्। किञ्च, तत्र पुनः सायं व्रजागमनसमये 'मदविघूर्णितलोचन ईषन्मानदः स्वसुहृदा'मित्युक्तप्रकारकागमनस्योक्तत्वात् तत्र मदपदेन पूर्णावबोध उक्तो विवरणे। तस्यार्थस्तु निरवधिनायिकाविलासस्मृतिधाराजनितानन्दसन्दोहानुभव इति टिप्पण्यां विवृतः। 'स चेतरनिस्सारक' इति मदपदयुक्तं मूले। एवं सति सायं संयोगसमये यथा तादृशमदजनिता भावा स्वरूपे प्रकटा भवन्ति तथा वने प्रियाविरहेण पूर्वानुभूतप्रियारसामृतस्मृतिधारया नामस्वरूपात्मकं गीतमपि विचित्रभावोद्भूतं भवति इति तत्स्मृत्वा **गीतं मधुर**मित्युक्तम्। तेनेदं गीतं 'मणिधरः क्वचिदागणयन् गा' इत्यत्र यदुक्तं तदवगन्तव्यम्।

भाग्यशोभाभरेण विलसद्वचनानां तासां प्रियाणां प्रियसमीपवर्तिवेणुविलोकने प्रियप्रापकत्वात् तस्मिन् परमस्नेहभरेण स्वरूपतस्तन्मर्यादालोपकं माधुर्यमनुभूतं भवतीति इति **वेणुर्मधुर** इत्युक्तम् । अधरामृतसम्बन्धेन तस्य तथात्वं स्पष्टमेव । अग्रे **रेणुर्मधुर** इत्युच्यते । तस्यायं भावः । गोचारणे रेणुसम्बन्धस्य आवश्यकत्वाद् अलकादिषु तस्य छुरितत्वेन यथा अलकानां कामरूपत्वेन माधुर्यं, तथा रजसो रजोगुणत्वाद् अनुरागरूपत्वेन परममाधुर्यं दृश्यते इति **रेणुर्मधुर** इत्युक्तम् । एतत्सर्वं 'तं गोरजश्छुरितकुन्तले'ति श्लोके निरूपितम् । वदनकमलसम्बन्धे रजसः परागरूपत्वान्माधुर्यं युक्तमेवेत्यपि सूचितम् । अथवा सन्ध्यायां आगमनसमये गोरेणुसङ्घाते घनीभूते इतरावलोकनाभावात् प्रियसङ्गमे च सम्पन्ने तन्मुखारविन्दकटाक्षादिरसानुभवात् स रेणुरपि परममधुरो भवति इति तथोक्तम् । एतेन अन्धकारादीनामपि लीलोपयोगित्वेन मधुरत्वमेव इति सूचितम् । एतत् स्वरूपं 'पीत्वा मुकुन्दमुखसारघे'त्यस्मिन् श्लोके 'सव्रीडहासविनयं यदपाङ्गमोक्ष'मित्यस्य विवरणे निरूपितम् । अथवा रेणुरत्र चरणारविन्दसम्बन्धी ज्ञेयः । तेन रसात्मकत्वात् लीलोपयोगिदेहसम्पादनैकस्वभावत्वाच्च लीलासम्बन्धिनीनां प्रियाणां तद्विरचितदेहवत्त्वेन तन्माधुर्यमनुभूतं भवतीति तथोक्तम् । अग्रे पुनर्वनादागमनसमये त्रिभङ्गललितस्वरूपेण वेणुं संवादयति तदा वेणुरन्ध्रेषु स्वाङ्गुलिचलने पाणेरपूर्वतरा शोभा प्रकटीभवतीति तत्स्मृत्वा **पाणिर्मधुर** इत्युक्तम् । तथैव पादयो'र्वामजान्वन्ताश्रितातिवक्रदक्षिणजानुक'मित्युक्तप्रकारेण स्थापने अनिर्वचनीयसौन्दर्यं प्रकटीभवतीति तत् स्मृत्वा **पादौ मधुरौ** इत्युक्तम् । तदेवोक्तं 'सौन्दर्यं किमपितरां प्रकटयति प्रेमवलभ्य'मिति प्रभुचरणैः स्वरूपवर्णने । अथवा दिवासम्बन्धिचरित्रे वनलीला सर्वा भक्तानां गृह एव अनुभूता भवति, तत्र पुलिन्दीभाग्यानन्दनकरणे भगवत्पदकमलसम्बन्धिकुङ्कुमस्मरणे जाते दयितास्तनरचिततद्रचनाचातुर्यकलातिकमनीयपाणिस्मरणात् तच्छोभामाधुर्यानुभवात् पाणिपादयोर्मधुरत्वं निरूपितमव्यवधानेन । एतच्च 'पूर्णाः पुलिन्द्य' इत्यत्र स्फुटीकृतम् । अथवा सन्ध्यायां तत्तत्प्रियावलोकनजनितविचित्रभावोद्धतरसेन दोहनविधौ नूपुरमुद्रिकादिभूषणभूषितपाणिपादसौन्दर्यमाधुर्यं प्रियाणामनुभूतं भवतीति तथोक्तम् । एतदेवोक्तं 'वेणुस्वनैः कलपदैर्नियोगपाग्रकृतलक्षणयो' रित्यनेन । अथवा लीलासमये तत्तद्बन्धादिरचनायां कुचकुम्भेषु मकरादिचित्ररचनायां चारुहृदयादिषु स्थापने च तापहारकत्वानन्ददायकत्वशोभातिशयत्वमधुरत्वादिगुणाः सर्वेऽनुभूता भवन्तीति तत् स्मृत्वोक्तं **पाणिर्मधुरः पादौ मधुरावि**ति । अत एव 'शिरसि धेहि नः श्रीकरग्रह'मिति 'कृणु कुचेषु नः कृन्धि हृच्छय'मिति ताभिरुक्तं फलप्रकरणे । एवमनन्तप्रकारा भावनीयाः । अग्रे पुनर्नृत्यं मधुरमुच्यते । तस्यायं भावः । अत्र सर्वं व्रजभूषणसीमन्तिनीसम्बन्धिलीलोपयोगि निरूप्यते । तेन सायं

१ स्वरूपं वर्ण्यते इति पाठः ।

वनादागच्छन् वेणुं कूजयन् नृत्यन्मयूरानुकरणं कुर्वन् दिवा विरहतापं दयितानामपाकरोति । तद्नृत्यं स्वभिनयात्मकमित्यभिनयकरणे मधुरस्मितपूर्वकभ्रुकुटीभङ्गकटाक्षादिविलासेपूल्लसितेष्वतिरमणीयलावण्यरसभावामृतपोषपुष्टा प्रिया भवन्तीति तत् स्मृत्वा नृत्यं मधुरमित्युक्तम् । तस्मिन्नेव समये पुनः समानशीलत्व विना रसः पुष्टो न भवतीति सख्याङ्गीकारे सख्यरसस्याप्यनुभवात् तस्यापि मधुरत्वं निरूपित सख्यं मधुरमिति । अत एव 'सव्रीडहासविनय यदपांगमोक्ष'मित्यत्र 'पुष्टे रसे हास' इत्युक्तम् । सख्ये सति हाससम्भवादत्र तन्निरूपणात् सख्येनैव रसपोष इति सख्यस्य मधुरत्व निरूपितमिति भावः । एव दिवासम्बन्धि सर्वं मधुरमेवेति **मधुरापतेरखिलं मधुरमित्यन्ते** निरूपितम् ॥ ३ ॥

एवं सख्यसहित नृत्यस्वरूप निरूप्य गीत निरूप्यते ।

**गीतं मधुरं पीतं मधुरं भुक्तं मधुरं सुप्तं मधुरम् ।**
**रूपं मधुरं तिलकं मधुरं मधुराधिपतेरखिलं मधुरम् ॥ ४ ॥**

**मधुरं** इद **गीतं** नृत्यानन्तर क्वचिद्देशविशेषे स्थित्वा करोतीति 'रङ्गे यथा नटवरौ क्व च गायमाना'वित्यत्र निरूपितम् । तस्य गीतस्य भावात्मकत्वात् तन्माधुर्यस्य व्रजसीमन्तिनीहृदयैकवेद्यत्वेन **गीतं मधुरमित्युक्तम्** । अथवा अत्र क्रमो न विवक्षित । श्रीमदाचार्याणां हृदये विप्रयोगरसाविर्भावेन सर्वा एव लीला भगवतो विलासाः प्रकटा जाता इति यदैव यस्स्फूर्तिः तदैव तन्निरूपयन्ति इति तत्सामयिक गीत सर्वमपि मधुर निरूप्यते । एव सति पूर्वं पाणिपादनृत्यसख्यानि निरूपितानि, तेन रासलीलास्फूर्तौ तत्र नृत्यस्य मुख्यत्वादभिनयार्थं पाणिपादयोश्चालनक्रियाया तत्तत्सख्यानजनितशोभातिशयलावण्यादीनां अनिर्वचनीयमाधुर्यानुभवात् तन्माधुर्य निरूप्य पश्चात् नृत्यस्य माधुर्यं निरूपितम् । ततो रसपोषार्थं सख्य निरूप्य गीत निरूपितम् । तेन इद गीत 'काचित् सम मुकुन्देने'त्यत्र यदुक्त तदवगम्यते । तत्र भगवतापि गान कृतमिति उक्त'मुत्पन्नस्य नादस्यामृतमयत्वाये'त्याभासेन । स च मधुर एव कर्तव्य इत्युक्तत्वात् तत्स्मृत्वा **गीतं मधुरमित्युक्तम्** । किञ्च, रासलीलानन्तर प्रातर्भगवति अन्तःप्रविष्टे 'वामबाहुकृतवामकपोल' इत्यादियुग्मश्लोकोक्तनिरूपितलीलासु सर्वत्र गीतस्यानुस्यूतत्वान्माधुर्यानुभवात् तत्सामयिकमपि उक्तमिति ज्ञेयम् । किञ्च, तत्र पुनः साय व्रजागमनसमये 'मदविघूर्णितलोचन ईषन्मानदः स्वसुहृदा'मित्युक्तप्रकारकागमनस्योक्तत्वात् तत्र मदपदेन पूर्णानन्दबोध उक्तो विवरणे । तस्यार्थस्तु विविधनायिकाविलासस्मृतिधाराजनितानन्दसन्दोहानुभव इति टिप्पण्यां विवृतः । 'स चेतरविस्मारक' इति मदपदमुक्त मूले । एव सति साय सयोगसमये यथा तादृशमदजनिता भावाः स्वरूपे प्रकटा भवन्ति तथा वने प्रियाविरहेण पूर्वानुभूतप्रियारसामृतस्मृतिधारया नामस्वरूपात्मक गीतमपि विचित्रभावोद्भूत भवति इति तत्स्मृत्वा **गीतं मधुरमित्युक्तम्** । तेनेद गीत 'मणिधरः क्वचिदागणयन् गा' इत्यत्र यदुक्त तदवगन्तव्यम् ।

तत्र क्वचिदेव गा गणयतीति विवृतत्वात् तथात्व स्पष्टमेवेति भावः । एवमनन्ता भावा विभावनीयाः । ततः प्रदोपसमयलीलास्फूर्तौ तत्सम्बन्धिपदार्थानां माधुर्यं निरूपयन्ति **पीतं मधुरमिति** । अत्र सर्वस्यापि भावरूपत्वेन निरूपणात् क्तप्रत्ययान्तशब्दा अपि भावार्थका एव इह प्रयुक्ता इति पीतपदेन पान ज्ञेयम् । अय भाव. । पूर्वं वनलीलायां नादनिष्ठामृतपानेन गवां पशुत्वधर्मनिवृत्तिपूर्वक रसात्मकता निरूपिता 'गावश्च कृष्णमुख' इति पद्येन । पश्चात् साय दोहनसामयिकस्वरूपसौन्दर्यमहिम्नैव सा निरूपिता 'गागोपकै' रित्यनेन । एव सति रसात्मिकानां तासां रसोपि भावात्मकत्वेन मधुर एव भवितुमर्हति इति तद्रसपाने तस्य भावात्मकत्वेन भावजनकत्वात् भगवतस्तत्प्रियासम्बन्धिसाक्षाद्रसपानस्मरणेन विचित्रभावविलासललिततर तत् पान भवतीति तत्स्मृत्वा **पीतं मधुर**मित्युक्तम् । अन्यथा 'राधाधरसुधापातुः किमन्यन्मधुरायित'मित्युक्त्या तदन्यत्र रुचिरेव न सभवतीति कथ तत् पिबेदिति भावः । एव एतद्भोग्यपदार्थानां ह्यलौकिकरसात्मकत्वेन भावरूपत्वात् तदग्रे भोजनलीलाकरणात् तत्स्मृत्वा **भुक्तं मधुर**मित्युक्तम् । अत एव श्रीगोकुलाष्टके 'श्रीमद्गोकुलभोग्यश्री' रित्यत्र तत्तत्पदार्थानां स्वरूपात्मकत्वेन भावरूपत्व निरूपितम् । अग्रे भोजनानन्तर शयन निरूपयन्ति **सुप्तं मधुरमिति** । भगवतो हि शयनमपि भावात्मकत्वेन मधुरमेव । तदुक्त 'निरोधोऽस्यानुशयनमात्मनः सह शक्तिभि.' 'वृक्षमूलाश्रय. शेत' इत्यादिभि. । तादृशस्य मधुरत्व स्फुटमेवेति भावः । किञ्च, लीलायां यावन्त. प्रकारा. शयनस्य प्रियावक्ष.स्थलादिषु पदकमलधारणरूपाः धन्यादिप्रकाररूपा वा भवन्ति ते सर्वेपि अनुभूता इति तत् स्मृत्वा तथोक्तम् समुदायसूचकत्वेन । एव प्रदोपसामयिकलीला निरूप्य रात्रिचरित्र निरूपयन्ति **रूपं मधुरमिति** । रात्रौ भगवान् विविधनायिकाभोगोपयोगिकोटिकन्दर्पाधिकलावण्यमुद्बुद्धरसात्मक स्वरूप प्रकटीकृत्य तत्तत्सङ्केतेषु गच्छति तदा तदागमनावलोकनपराः प्रियास्तादृशपरमसौन्दर्यमाधुर्यरससिन्धुलहरीललिततरोल्लसदनेकभावलावण्यमनोहर रूप दृष्ट्वा तदवलोकनरसामृतसिन्धुमग्ना भवन्तीति तत् स्मृत्वा **रूपं मधुर**मित्युक्तम् । अथवा अग्रे पुन. प्रियाया. स्वकरकमलरचिततत्तद्भावात्मकसकलकलाकल्पविरचनायां सपूर्णस्वरूपमाधुर्यमनुभूत भवतीति तत् स्मृत्वा तथोक्तम् । अथवा परमसौरभसुरभितैलाभ्यञ्जनविधानपूर्वकमञ्जनादिसामयिक स्मृत्वा तथोक्तम् । अथवा निर्भररससामयिकमेव माधुर्यमनुभूयोक्तम् । एवमनेकधा भावनीयम् । अग्रे तिलकमाधुर्यमुच्यते **तिलकं मधुरमिति** । 'दर्शनीयतिलक' इति वाक्यात् सकलशृङ्गारेषु तिलकस्य मुख्यत्वात् तदेवोक्तम् । किञ्च, नायिकानां नखादारभ्य शृङ्गाररचना या क्रियते सा नायकस्य तिलकमारभ्येति रसशास्त्रोक्तत्वात्, प्रथम तिलकरचनायां मलयजतिलक विधाय तन्मध्ये कस्तूरीतिलकं कृत्वा तन्मध्ये

१ त्रिनयसम्बन्धीन्दत्र पाठ । २ गकराकल्येति द्वितीय पाठ । ३ मुख्यत्वमिति पाठ ।

मुक्ताफलबिन्दु क्रियत इति । तथा चोक्तमपि प्रभुचरणै 'प्रथम मलयजतिलक मृगनाभिजनुस्तदन्तरालेपि । तन्मध्येपि च कुङ्कुममुक्ते'ति । तथाविधरचनाया तादृशस्य परममोहनरूपत्वात् तत्सौन्दर्यमाधुर्यावलोकनरसपूरमग्ना भवन्ति प्रिया, तत्समय स्मृत्वा तथोक्तम् । एव तिलकमाधुर्य निरूप्य अन्येषामपि भूषणादीना तन्निरूपयन्ति **मधुराधिपतेरिति** । यद्यप्यखिलान्यपि भूषणादीनि मधुराण्येव तथापि तिलकस्य परमसौभाग्यस्थानस्थितत्वात् परमसौभाग्यरूपत्वेन महावशीकरणसामर्थ्यवत्त्वेन तिलकस्यैव मधुरत्व निरूपितम् । किञ्च, तिलकशोभावलोकने तन्माधुर्यामृतजलधिमग्न तन्मनो जातमिति तावद्देवो कृत्वा स्थितमिति भाव । किञ्चात्र 'मधुराधिपतेरखिल मधुर मित्यत्र अखिलपदेन अन्योपि भाव सूच्यते । तथाहि । प्रथममन्यत्र प्रियया सह रमण कृत्वा पुनरितरस्या समीप मागते प्रिये तच्चरणकुङ्कुमाङ्कितत्तिलकावलोकनाद् मानसम्भावनायामपि तज्जनितापूर्वशोभया सर्वविस्मरणे तद्वशीभूतो रमत इत्यखिल **मधुरमुक्तम्** । खण्डिताया एतदसम्भवात् ।

अथवा यथा पूर्वोक्ततादृग्रूपरसात्मकस्वाक्षाद् भगवत्स्वरूपान्त प्रवेशे श्रीमदाचार्याणा हृदये तत्तल्लीलाप्राकट्येन तत्तल्लीलानुभवोऽभूत्, तथा जन्मोत्सवमारभ्य बाल लीलाया अप्यनुभवो जात इति तत्सामयिकमाधुर्यस्मरणे, अत्र तदपि निरूपितमिति ज्ञेयम् । एव सति प्राकट्यसमयमारभ्य तत्तल्लीलास्मरणे प्रथम प्राकट्यानन्तरमेव स्वप्रियावलोकने अतिमृदुलनवकिसलयारुणरुचिरतराधरसौन्दर्यदर्शने चिरस्थितरसस्य भाविपानानन्दोत्कण्ठाजनितभावनया तन्माधुर्यानुभवाद् **अधर मधुरमित्युक्तम्** । पश्चात् तादृशवदनावलोकने चिबुककपोलादिशोभाया अपि रसैकपानपररूपत्वेन तदभिलापजनितभावनया तदनुभवात् सम्पूर्णवदनस्याप्यनुभवाद् **वदन मधुरमित्युक्तम्** । किञ्च तादृशे समये बालकवदन प्रोञ्छनाद्यलङ्कारालङ्कृत भवतीति तथोक्तम् । अथवा प्रतिमामोत्सवादिषु विशेषेणालङ्कृत भवतीति तत्स्मृत्वा तथोक्तम् । अग्रे नयन निरूपयन्ति **नयनं मधुरमिति** । अय भाव । नवकमलदलसदृशशोभातिशयरुचिरस्य श्रीमन्मातृचरणविरचितनवाञ्जनरेखाभिरमणीयप्रकम्पमुग्धभावस्यापि नयनस्य 'तोकता वपुषि, तत्र राजते दृशि तु मदमानिनीमानहरण' इत्युक्त्या परमप्रेमरसनिभृतमाधुर्य मधुरत्वेनानुभवात् तथोक्तमिति भाव । अग्रे हसित निरूपयन्ति **हसितमिति** । बाले हि प्रथममेव वचनाद्यसम्भवात् स्मितमेव भवति । तदप्यधरपल्लव एवेति, केप्येते मा मत्कृतिमपि न जानन्तीति स्वसङ्केत स्वप्रियाया ज्ञापयन्निव भगवास्तादृश स्मित करोति तत् तासामति हृदयङ्गम भवतीति तन्माधुर्य स्मृत्वा **हसित मधुरमित्युक्तम्** । किञ्च, बाल्ये तादृशमन्द हसितनिरूपणे अतिकोमलदुग्धदशनकिरणावलीजनितशोभातिशयमाधुर्यादिसद्भावोपि निरूपित इति ज्ञेयम् । अग्रे तादृश मधुरस्मितामृतलहरीविमलचन्द्रिकावारनरहृदय परममधुर

१ पालनेति पाठः । २ भावनायामिति पाठ । ३ स्पर्शेनि पाठ । ४ वा १ हीति पाठ ।

मनुभूत भवतीति तत्स्मृत्वा हृदय मधुरमित्युक्तम् । किञ्च, बाले तादृश हृदय व्याघ्रनखादिभूषणभूषितत्वेन परमरमणीय भवतीति तत्स्मृत्वा तथोक्तम् । अथवा तादृशबालकस्य क्रोडादाने हृदयादौ लालनादिकरणे च हृदये माधुर्य समनुभूत भवति इति तत्स्मृत्वा तथोक्तम् । अग्रे गमन निरूपयति **गमन**मिति । हृदयनिरूपणानन्तर गमननिरूपणात् तादृशबालकस्य प्रथम हृदयेनैव तत्तद् भवतीति तथोक्तम् । किञ्च, अतिप्रेम्णा क्रोडीकृत्य हृदयोपरि समादाय एकया लालने क्रियमाण पुनरन्यत्र बाहू प्रसार्य हृदयेनैव गमन करोति, पुनस्तत्सकाशाद् अन्यस्या एव समीपे समायाति । एव मुहुर्मुहुर्गमनेन सर्वासा प्रेयसीना आश्लेषाद्यभिलाषपूरणात् स्वस्य दक्षिणनायकत्वचातुर्यस्य बाल्ये एव ज्ञापनात् तादृश तदतिमधुरमनुभूत भवतीति तत्स्मृत्वा **गमनं मधुर**मुक्तम् । एव मधुराधिपते फलरूपस्याङ्कुरमारभ्यैव सर्वं मधुरमिति तत्स्मृत्वा **अखिलं मधुर**मित्युक्तम् । अत एव उपसहारे **दलितं मधुरं फलितं मधुर**मित्युक्तम् ।

ततो वचन निरूपयन्ति **वचनं मधुर**मिति । तादृशस्य बालकस्य वचन तु अव्यक्तमधुर भवति । तद्वचनाया अल्पदशनाना अधरपल्लवस्य च शोभाकिर्मीरितत्वेन परमरुचिरा भवतीति तादृशी सा प्रेयसीना अतिहृदयङ्गमेति तत् स्मृत्वा **वचन मधुर**मित्युक्तम् । किञ्च, मुग्धभावजनिताव्यक्तभाषणेपि प्रचुरप्रेमभावतीना यथा नयनयोर्मदमानिनीमानहरणत्वमनुभूत तथा तादृग्वचनानामपि तथैवानुभव इति तत् स्मृत्वा तथोक्तम् । एव वचन माधुर्यमुक्त्वा तदाचरितमाधुर्य निरूपयन्ति **चरितं मधुर**मिति । मुग्धदशायामपि नयनकरकमलादिभिर्यत्क्रियते तत् चरितशब्देनोच्यते । तथा च तत्तदङ्गस्पर्शनप्रदानादिरूप तत्प्रेयसीना लालनादौ अतिचतुरनायकचरितमिवानुभूत भवतीति तत्स्मृत्वा **चरित मधुर**मुक्तम् । अग्रे वसन मधुर निरूपयन्ति **वसन**मिति । तस्याय भाव । यद्यपि वसनस्य आच्छादकशक्तिरूपत्वमस्ति तथाप्येतादृशे वयसि वसनस्य निरावरणरसानुभावकत्वात् तन्माधुर्यमनुभूत भवति इति तत्स्मृत्वा वसन मधुरमित्युक्तम् । किञ्च, ईदृग्रूपस्य बालस्य वसनपरिधानासम्भवाद् वसन मधुरमित्युक्तेरयमाशय । यदा व्रजतरुण्य क्रोडीकृत्य वक्ष स्थलोपरि सस्थाप्य लालयन्ति तदा अन्य न ज्ञापयाम इति स्वाञ्चलेन सङ्गोप्याश्लेषादिना लालयन्ति, तदा तासा प्रियस्यापि तत्परममधुरत्वेन अनुभूत भवतीति तत्स्मृत्वा तथोक्तम् । अग्रे **चलित मधुर**मुच्यते । तस्याय भाव । पूर्वमेकया श्रीगोकुलतरुण्या क्रोडीकृत्य पुनर्वक्ष स्थलोपरि सस्थाप्य लालितक्षणानन्तर अन्यस्या समीपागमने पूर्वस्या कुचकुङ्कुमादिषु करकमलनखादिषु स्पर्श विधाय तदन्तिके गच्छतीति तादृशगमनमाधुर्य तदनुभवैकमनोहरमिति तत् स्मृत्वा **चलितं मधुर**मित्युक्तम् । अत पर रिङ्गणलीलास्फूर्तौ ता निरूपयन्ति **चलित मधुर**मिति । एतन्म

१ क्रोडगाया इति पाठ । २ एकयेति पाठ । ३ अन्या इति पाठ । ४ प्रचुरतरप्रेमवतीनामिति पाठ । ५ प्रतिष्ठाप्यति पाठ । ६ गमी इति पाठ ।

धुरत्वं तु 'गोकुले रामकेशवौ रिङ्गमाणौ विजह्रतु'रित्यत्र निरूपितम्। तत्र केशवपदार्थनिरूपणेन केशाकृतसौन्दर्यातिशयो निरूपितः। किङ्किणीवलयनूपुरादिशोभा चाग्रे निरूपिता। एवं सति तादृशं चलनमतिमुग्धभावरूपमतिमोहकत्वाद् मधुरं भवतीति तथोक्तम्। किञ्च, चलितवलितयोरव्यवधानेन निरूपणात् तादृशसञ्चलने पुनः परावृत्यावलोकयतीति चलितपदेनोच्यते। तेन सिंहावलोकनन्यायेन तच्चलनं करोतीति तादृशमदमन्थरावलोकनगौरवेण मदकलमातङ्गगतिरमणीयतरुणीमनोमोहनोत्तरलितमानिनीमानहरणत्वं चलने द्योतितमिति तत्स्मृत्वा **चलनं मधुरमि**त्युक्तम्। अग्रे भ्रमितं मधुरमिति निरूपयन्ति। तस्यायं भावः। 'यर्ह्यङ्गनादर्शनीये'त्युक्तभकारकव्रजाङ्गणरिङ्गणलीलायां घोषप्रघोषरुचिरान्नित्युक्त्या मुग्धभावप्रदर्शनार्थमेव तादृक् भ्रमणं करोति, तदा तत्प्रेयसीनां पूर्वं लालनादौ स्वेप्सितरसानुभवकरणादधुना तु एतादृशमुग्धभावप्रदर्शनाच्च तद् भ्रमणं मधुरमनुभूतं भवतीति तत्स्मृत्वा **भ्रमितं मधुरमि**त्युक्तम्। किञ्च, अग्रे बालैः सह भ्रमणकरणे रहसि प्रियासङ्गे सति तद् भ्रमणस्य रसानुभावकत्वादपि **मधुरत्वमु**क्तम्। अत्र 'कुमारौ द्विवार्षिक' इत्युक्त्या मुग्धभावप्रदर्शनोक्त्या चैषा बाल्यभावसहिता कुमारलीलोक्ता। केवलां त्वग्रे निरूपयिष्यन्ति इति अग्रे **मधुराधिपतेरखिलं मधुरमि**त्युक्तम्। बालभावेनापि सहिता कुमारलीला प्रेयसीनां स्वसमीहितरसदानात् मधुरा तदा केवलाया मधुरत्वे किं वाच्यमिति भावः।

अग्रे **वेणुर्मधुर** इति निरूपयन्ति। तस्यायं भावः। आक्रीडनपदार्थानां मध्ये वेणुर्मुख्य इति स एवोक्तः। स पुनर्बाल्येपि आक्रीडनक्रीडायां कदाचिदधरे स्थाप्यते, कदाचिद् वादयितुं फूत्करोति, कदाचित् बालभावकृतफूत्कारस्य वादनाशक्तौ स्वयमेव गुञ्जति, कदाचित्तादृशमुग्धभावेपि अतिमनोहरस्वभावस्वरादिमहितं वेणुं वादयति भगवान्, इत्येवं बाल्यमारभ्यैव प्रियाधरसम्बन्धस्य जातत्वात् तज्जनितविविधप्रकाररसौभाग्यानुभवाद् **वेणुर्मधुर** इत्युक्तम्। अग्रे रेणु निरूपयन्ति **रेणुर्मधुर** इति। 'पङ्काङ्गरागरुचिरा'विति श्लोके पङ्कस्याङ्गरागरूपत्वनिरूपणेन रिङ्गणलीलायां रेणोः प्रत्यङ्गसङ्गे अङ्गरागरचितपरममनोहरशोभाजनकत्वात् तन्मिषेण प्रोञ्छनकरणादौ तन्माधुर्यमनुभूतं भवतीति तत्स्मृत्वा तथोक्तम्। किञ्च, रेणुशब्दोत्र स्त्रीलिङ्गवाची भूरूपोप्यस्ति, तेन रिङ्गणलीलायां सकलाङ्गसङ्गो भुवः स्त्रिया इव कामलीलारससंयोगो भवतीति तादृशसान्निध्यलाभोद्बोधमिति तत् स्मृत्वा **रेणुर्मधुर** इत्युक्तम्। अत एव रेणुनिरूपणानन्तरं पाणिपादयोरव्यवधानेन निरूपणम्। रिङ्गणलीलायां भूमौ पतिते गाढाश्लेषादिकृतिरिव पाणिस्थितिर्भवति, बन्धादिविशेषप्रकार इव पादस्थितिर्भवति इति तत्प्रकारकानुभवस्तु तासामेव इति तथोक्तम्। अथवा लालनादौ पाणिपादयोः स्वकुचकुम्भादिषु स्थापने तन्माधुर्यमनुभूतं

१ स्फुरितेति पाठः। २ वलितेति पाठः। ३ स्वसमाह्रितेति पाठ। ४ पतने इति पाठ। ५ स्वकुचकुड्मलादिचिह्नानामिति पाठ।

भवतीति तथोक्तम् । अथवा पाणिपादादिषु तत्तत्कमलादिचिह्नाना दर्शनात् तत्तच्चिह्नोक्तधर्मास्तु बालभावमारभ्यैव प्रियाभिरनुभूयन्त इति तत्स्मृत्वा तथोक्तम् । एवमनेकप्रकारा भावनीया । अत पर नृत्य मधुरमुच्यते । लालनकरणे यथैव प्रिया नृत्य कारयति तथैव भगवान् नृत्यति इति तदवलोकने तासा यथा इदानीं अस्मत्सन्तोपार्थं अस्मद्वशो भूत्वा नृत्य करोति, तथाग्रेप्यस्मद्वशोऽस्मत्सन्तोष करिष्यति इत्याशया तत् नृत्य परमरसाधायक भवतीति नृत्य मधुरमित्युक्तम् । किञ्च, भ्रूभङ्गाद्यभिनयाना बाल्येपि कामिनीकामोद्बोधकत्वाद्रसाविष्टाना तथैवानुभवात् तत्स्मृत्वा तथोक्तम् । अत पर सख्य निरूपयन्ति सख्य मधुरमिति । अय भाव । 'समानशीलव्यसनेषु सख्य'मित्युक्तत्वात् सर्वसमक्ष स्वस्य बालभावेनैव खेलालनरसाविष्टा तत्तन्मधुरमुग्धभावानुसारिणीं विधाय पश्चात् सख्यभाव कृत्वा रहसि तत्तल्लीलारसानुभवमग्रे कारयतीति तत्स्मृत्वा सख्य मधुरमित्युक्तम् । अथवा बालभावेन सख्य कृत्वा सर्वसमक्षमेव प्रियाभि सह क्रीडाकरणे प्रिययो स्वसमीहितरसानुभव एव भवत्यन्येषा बालभावस्यैवेति तत्स्मृत्वा सख्य मधुरमित्युक्तम् ।

अग्रे गीत मधुरमुच्यते । तस्याय भाव । मुग्धभावागीकारेऽपि यावन्तो गीतभेदास्तदभिनये रसाविष्टानां कामरसाविर्भाव एव भवतीति गीत मधुरमित्युक्तम् । अथवा मुग्धभावप्रदर्शनार्थमेव कदाचिदव्यक्त गीत करोति तथापि तासा तादृशाभिनयजनितभ्रूभङ्गकटाक्षाद्यवलोकने कामरस एव उत्पद्यते, अन्येषा बाल्यरसाविर्भाव एव भवतीति तत्स्मृत्वा तथोक्त । अत एवोक्तम् 'व्रजजनश्लाघ्यगुणे'ति गीते, तेन तथात्वम् । अग्रे पीत मधुर भुक्त मधुरमुच्यते । तस्याय भाव । बाल्ये पानभोजनादिक श्री मन्मातृचरणसमीपे कृत भवति यद्यपि तथापि स्वभावाग्रहेणैव काश्चित् प्रिया समाहूय स्वसमीपे स्थापयित्वा तया सममेव पानभोजनादिक करोतीति तत्स्मृत्वा तथोक्तम् । अथवा चौरचर्योक्तप्रकारेण सर्वासामुपभोगकरणात् तथोक्तम् । अथवा साय प्रथम पय फेनादिपान भवति, पश्चाद्रात्री भोजन भवतीति, पूर्वं तदुक्तम् । तथा च स्वर्णपात्रे पय फेनपानव्याजेनेत्युक्त्या तस्य मधुरत्व युक्तमेवेति तथोक्तम् । एव अनेकप्रकारा पानभोजनादौ भावनीया । तत सुप्त मधुरमुच्यते । तस्याय भाव । यद्यपि शयन बाल्ये मातृचरणसमीपे तथापि भक्ताना रात्रौ विप्रयोगेन तदात्मकताया अन्तस्तत्प्राकट्ये तत्स्वरूपानुभव एव भवति इति तथोक्तम् । प्रातरेत्य बहिरवलोकनाभावजनिततापनिवृत्त्यर्थं 'चिरविरहितापहरे' इत्यादि गीतेन प्रार्थ्यते ताभि । अथवा क्रोडीकृत्य लालनादौ बाल

---

१ बाल्यति पाठ । २ लीलानुकरणे ३ भावप्रियोऽस्मत्तोष करिष्यतीति पाठ । ४ कामुकानामिति पाठ । ५ रसाविष्टगोपिकानामिति पाठ । ६ बालभावेति पाठ । ७ प्रियमिति पाठ । ८ सहैवेति पाठ । ९ उक्तमिति पाठ । १० आगत्येति पाठ ।

भावेन क्रोड एव कदाचित्स्वपिति तदा तस्याः प्रियायाः वक्षसि समालिङ्ग्य एककरेण कुचस्पर्शं कुर्वन् स्वपितीति पूर्णरसानुभव एव तस्या भवतीति तत्स्मृत्वा **सुप्तं मधुरमु**क्तम् । अग्रे **रूपं मधुरमुच्यते** । तस्याय भाव । एव क्रोड एव शयने कृते सर्वाङ्गावलोकनस्पर्शादौ तन्माधुर्यमनुभूत भवतीति **रूपं मधुरमुक्तम्** । अथवा, बाल्यदशायामपि तादृशरूपस्य परमसौभाग्यौदार्यगुणाधारत्वाद्रसाविष्टत्वा कामोदीपकत्वेन **रूपं मधुरमु**क्तम् । अग्रे तिलक निरूपयन्ति **तिलकं मधुरमिति** । यद्यपि गोरोचनादिकृततिलको मुग्धभावमेव प्रकटयति, तथापि तादृशे रूपे कृतत्वात् स्वस्यापि मोहनैकस्वभावात् कामभावमेवोत्पादयतीति तत्स्मृत्वा तथोक्तम् । किंच, अस्य तिलकस्य मुख्यत्वेन तन्निरूपणात् सर्वेषा भूषणानामपि निरूपण ज्ञेयम् । तेन सर्वाण्याभरणानि तादृशभावोद्दीपकानि मधुराण्येव इति ज्ञापनाय अग्रे निरूपयन्ति **मधुराधिपतेरखिलं मधुरम्** ।

अत पर केवला कुमारलीला निरूप्यते **करणं मधुरमिति** । यद्यपि श्रीमदाचार्यैं निखिललीलामाधुर्यानुभवाद् बाललीलामाधुर्यसमुदायेनैव '**अधरं मधुरं**'मित्यादि निरूपितम्, तथापि प्रथमदर्शने यादृशानुभवो जातस्तादृशमेव माधुर्यं प्रथम निरूपित भवतीत्यभिप्रायेण पूर्वं प्रथमानुभवप्रकारकभावविवरण कृत्वा पश्चादितरलीलामाधुर्यविवरण कृतमिति श्लोकचतुष्टयस्य पुन पृथक्तया बाललीलाभावनिरूपण कृतमिति ज्ञेयम् ॥ ४ ॥

प्रस्तुत निरूपयन्ति करण मधुरमिति ।

**करणं मधुरं रमणं मधुरं तरणं मधुरं हरणं मधुरम् ।**
**वमितं मधुरं शमितं मधुरं मधुराधिपतेरखिलं मधुरम् ॥ ५ ॥**

ईदृग्रूपतिलकनिरूपणेन भगवत सकलकलाचातुर्यातिशयस्फूर्तौ लीलासम्बन्धिविविधोपायविरचनस्याशक्यस्यापि शक्यत्वसम्पादनरूपत्वानुभवात् **करणं मधुरमित्युक्तम्** । एतत्सर्वं 'निलायनै सेतुबन्धैर्मर्कटोत्प्लवनादिभि । एव विहारैं कौमारैं कौमार जहतुर्व्रज' इत्यस्य विवरणे श्रीमदाचार्यैं 'ब्राह्मणोपि भवति क्षत्रियोपि भवत्येकस्या शाखायामारूढ' सर्वं फल भुङ्क्ते' इत्यादि निरूपितम् । विशेषत टिप्पण्या कारिकाभि स्फुटीकृत श्रीमत्प्रभुचरणै । अग्रे तादृशकृत्यनन्तर रमण मधुरमेव भवतीति **रमणं मधुरमित्युक्तम्** । तत कदाचिद् यमुनापारस्थभर्तृमिलनार्थं यातायातमपेक्षितमुभयो सान्निध्ये किंचिन्निमित्तान्तर विना न सम्भवतीति कौतूहलक्रीडया स्वस्य नाविककलाकौशल प्रदर्शयन् पारोत्तारण विधिं स्वयमेव करोति भगवांस्तदा भक्ताना पारावारोत्तरणविधाने परस्परमिलने सति चिरनिभृतनिर्भरोत्तरलितसुभगानुरागभरमधुरतरोल्लसितस्मितस्मेरापाङ्गभङ्गविलोकनवचनरचनाया परमकुतुकाकृतविचित्रभावानामु-च्छलितत्वाद् विलक्षणरसानुभवेन तत्तरणमतिमधुरमनुभूत

१ लीलात्मकभावेनेति पाठ । २ भवतीति पाठ । ३ प्रदर्शयेति पाठ । ४ पारोत्तारणेति पाठ ।

भवतीति तत्स्मृत्वा **तरणं मधुरमित्युक्तम्** । एवं तरणेपि भावा अनेका भावनीयाः । अग्रे पुनरुपद्रावकलीलां निरूपयन्ति **हरणं मधुरमिति** । **हरणं** चौर्यं यद्वादन्यसम्बन्धिवस्तुपदार्थानामाहरणं वा, तत्सर्वेषामुपद्रावकम्, भक्तानां तु परमरसानुभावकत्वेन परममधुरमनुभूतं भवतीति तत्स्मृत्वा **हरणं मधुरमित्युक्तम्** । अत्राप्यनेकप्रकारा ज्ञेयाः । किञ्च, चौर्यसमये गृहीतश्चेद् विविधभावकृतापाङ्गादिदर्शनेन स्वरूपरसानुभव एव भवतीति तत्स्मृत्वा तस्य मधुरत्वं निरूपितमिति भावः । एतदग्रे ततोऽप्युपद्रावकमाहुः **वमितं मधुरमिति** । चौर्येण दधिदुग्धादिकं पिबतीति ज्ञात्वा गृहीतश्चेत् तन्मुखोपरि दुग्धादिगण्डूषं कृत्वा पलायते, तदा पुनः कौतुकरसाविष्टास्तत्कृतिं विलोकयन्त्यो हसन्त्येव, न तु तासां कोपादिकं भवति, इति प्रभुरपि दूरे स्थित्वा तन्मुखमवलोकयन् हसतीति स्वरूपमाधुर्यरससमोहिता एव करोतीति तत्समयं स्मृत्वा **वमितं मधुरमित्युक्तम्** । अग्रे पुनस्ताद्दशोपद्रवोपलम्भनार्थं यदा श्रीमातृचरणसमीपे प्रियाः समायान्ति तत्पूर्वमेवागत्य श्रीमन्मातृचरणसमीपे *परमसाधुर्भूत्वा विविधमुग्धभावैः क्रीडति, तदा तास्ताद्दशोपद्रवकर्तुः* ताद्दशलीलाशान्तस्वरूपत्वं विलक्ष्य तज्जनितमुग्धभावातिसौन्दर्यं प्रकटीभवतीति तदनिर्वचनीयमाधुर्यरसानुभवेन विविधभावतरङ्गान्दोलितहृदया स्वरूपमेव पश्यन्त्यः किमपि वक्तुं न शक्नुवन्ति, तत्समयं स्मृत्वोक्तं **शमितं मधुरमिति** । एतदेवोक्तं 'तरङ्गा इव रागाब्धेरुदिता प्रिययोर्मिथः । भावा वक्तुमशक्यास्ते ज्ञेयास्तु तदनुग्रहात्' इति प्रभुचरणैः । एवं तत्तत्सामयिकं उपद्रावकमपि परममधुरमित्युक्तम् । अग्रे **मधुराधिपतेरखिलं मधुरमिति** ॥ ५ ॥

अत परं यमुनातीरलीलास्फूर्तौ तन्निरूपयन्ति **गुञ्जा मधुरा** इत्यादिभिः ।

**गुञ्जा मधुरा माला मधुरा यमुना मधुरा वीची मधुरा ।**
**सलिलं मधुरं कमलं मधुरं मधुराधिपतेरखिलं मधुरम् ॥ ६ ॥**

यमुनातीरवनेषु गुञ्जातरवो बहवोपि सन्ति फलिता इति 'गुञ्जानां मधुराञ्जनदीप्तिभिः सुनासापुटमुक्ताफलभूषणं तवास्यसदृशं भवती'त्युक्तत्वेन भावात्मकत्वात् धारणं करोति भगवांस्तेन भावात्मकत्वेन तन्माधुर्यं स्मृत्वा तथोक्तम् । तथैव वन्यमालाया धारणमपि पुष्पाणां प्रियाहसितसादृश्येन तद्ग्रथितमालाया भावात्मकत्वेन रसोद्बोधकत्वात् परमसौन्दर्यमाधुर्यानुभवात् मालाया मधुरत्वं निरूपितम् । मालाया 'बर्हापीडे'ति श्लोके विक्षेपकशक्तिमत्त्वेन रसोद्दीपकत्वं निरूपितमेवेति स्फुटमेव तथात्वमिति भावः । अथवा 'दिव्यगन्धतुलसीमधुमत्तै'रित्युक्ते लीलायां प्रियाविरचितमालाधारणेन आलिङ्गनादिसम्मर्दनजनितकुङ्कुमादिसौरभशोभारचितमाधुर्यानुभवात् तथोक्तम् । अथवा 'श्रीवोरःस्थलकटितटका

१ एषमनन्ता भावास्तरणेऽपि भावनीया इति पाठः । २ वीच्येति पाठः ।

श्रीदामप्रपदयोः सततं, विहरन्ती वनमाला मत्तालिकुलैरभवदुद्गीते'ति श्लोके तत्तदङ्गविहारव्यञ्जितविपरीतरसभावात्मकत्वं मालाया द्योत्यते । तेन तन्माधुर्यसौभाग्यं किं वाच्यमिति भावः । एवमनेकविधा भावाः मालायामपि भावनीयाः । एवं तीरसम्पत्तिमाधुर्यं निरूप्य यमुनाया माधुर्यं निरूपयन्ति **यमुना मधुरेति** । यमुनायाः साक्षाद्रसात्मकभगवत्सारूप्यजनितपरमरुचिरशोभातिशयेन निरन्तरं साक्षाद्रसात्मकभगवद्व्रजरसङ्गरमणीलीलारसानुभवोद्भूतरसभावात्मकत्वेन च माधुर्यस्य प्रकटत्वात् स्वरूपतो **यमुना मधुरे**त्युक्तम् । ततस्तरङ्गानामुच्यते **वीची मधुरेति** । अत्र वीचीनिरूपणे त्रिविधवायुनिरूपणमपि ज्ञेयम् । अन्यथा वीचीनामसम्भवात् । सोपि लीलायां रसाधायकत्वात् मन्द एवेति वीचयोपि मृदुलतरा एव सूच्यन्ते । तादृशीनां शृङ्गाररसजलधिसमुच्छलत्तरलतरङ्गसदृशप्रियापाङ्गरङ्गसमसौभाग्येन भावात्मकत्वाद् मधुरत्वं निरूपितम् । ततो जलस्य माधुर्यं निरूपयन्ति **सलिलं मधुरमिति** । 'उपरि चलदमलकमलारुणद्युतिरेणुजलभरेणामुना व्रजयुवतिकुचकुङ्कुमारुणमुरः स्मरयसि मारपितुरधुने'ति निरूपणात् जलस्यापि तादृशरसात्मकभावरूपत्वात् मधुरत्वं निरूपितम् । किञ्च, 'सकलगोपिकासङ्गमस्मरश्रमजलाणुभिः सकलगात्रजैः सङ्गम' इत्युक्तप्रकारकरसात्मकत्वेनापि मधुरत्वस्मरणात् तथात्वमुक्तम् । तेन जलक्रीडाजनितपरमानन्दानुभावकत्वात् तथोक्तमित्यपि सूचितम् । किञ्च, कुमारिकाभिः जलक्रीडायां व्रतचर्योक्तप्रकारकसलिलमाधुर्यं यथानुभूतं तथा स्वस्याप्यनुभवात् तथोक्तमित्येवमनेकप्रकारा भावनीयाः । ततः कमलानां निरूपयन्ति **कमलं मधुरमिति** । यद्यपि कमलानां माधुर्यं तापहारकादिधर्मैः प्रकटमेव, तथापि 'अत्राधिरजनिहरिविहृतिभीक्षितुं कुवलयाभिधनयनान्युपसि तनुप' इति यमुनाष्टपदीगीतोक्तनयनरूपत्वेन रसात्मकत्वात् तल्लीलावलोकनजनितविविधभावसंवलिततद्रसरूपमकरन्दमाधुर्यानुभवात् तथोक्तमिति भावः । अथवा, प्रियानेत्रस[ादृ]श्यशोभातिशयधारणेन भावात्मकत्वात् तथोक्तम् । एवं यमुनासम्बन्धिसमस्तपदार्थानां माधुर्यवत्त्वमेवेत्यग्रे **मधुराधिपतेरि**त्युक्तम् ॥ ६ ॥

अतः परं समस्तलीलोपयोगिपदार्थानां उद्दीपनविभावादीनां माधुर्यं निरूपयन्ति **गोपी मधुरेति** ।

**गोपी मधुरा लीला मधुरा युक्तं मधुरं मुक्तं मधुरम् ।**
**दृष्टं मधुरं शिष्टं मधुरं मधुराधिपतेरखिलं मधुरम् ॥ ७ ॥**

**गोपीपदेन** शुद्धभावात्मिकास्ता उक्ताः । यद्यपि लोकेपि नायिकानां माधुर्यं भवति तथाप्येकान्तिका एताः शुद्धभावेन परमस्निग्धाः अलौकिकरसात्मिका भगवत्स्वरूपैकनिष्ठा इति स्वरूपत एव साहजिकमलौकिकमाधुर्यमस्तीति तादृशस्वरूपानुभवाद् **गोपी मधुरे**त्युक्तम् । किञ्च, एतासां शुद्धभाववत्त्वेन देहप्राणेन्द्रियान्तःकरणादयोपि भगवत्स्व-

१ भावात्मनेति च पाठः । २ सम्येनेति पाठः ।

रूपभावात्मका एवेति तत्सौन्दर्यमाधुर्यलावण्यादीनां सर्वदा प्रकाशमानत्वात् सार्वदिकमेव तासामलौकिकं माधुर्यमिति तत्स्मृत्वा तयोक्तम् । किञ्च, यमुनामाधुर्यवर्णनप्रस्तावे **गोपी मधुरेति** निरूपणात् जलक्रीडासमय सूच्यते । तेन जलक्रीडायां गोपीनां वसनभूषणादीनामल्पत्वसम्भवात् स्वाभाविकं सौन्दर्यजनितमसाधारणं माधुर्यं तत्तदङ्गेष्वनुभूतं भवतीति तत्स्मृत्वा तयोक्तम् । अत्र गोपीपदे त्वेकवचनं शुद्धभावात्मकजात्यभिप्रायेणोक्तम् । ततो लीलाया मधुरत्वं निरूपयन्ति **लीला मधुरेति** । तादृशीनां लीला हावभावकटाक्षादिरूपाः 'काचित्कराम्बुजं शौरे'रित्यारभ्य 'पादन्यासैर्भुजविधुतिभि'रित्यादिसर्वाः शरत्काव्यकथारसाश्रया इत्यन्तेनोक्ताः सर्वा मधुरा इति तदखिलं स्मृत्वा तयोक्तम् । यद्यपि लोकेऽपि कामलीला मधुरा भवति, तथापि भगवल्लीलायामुद्दीपनविभावानामालम्बनविभावानां चालौकिकरसात्मकत्वात् तल्लीलानामप्यलौकिकत्वेन तन्माधुर्यस्य वैलक्षण्यानुभवात् तल्लीला मधुरेत्युक्तम् । किञ्च, गोपीपदस्य शुद्धभावार्थकत्वात् शुद्धभावप्रसादित इति प्रस्तावे कुमारीणां तथा निरूपणात् ता अपि अत्र निरूप्यन्ते **गोपी मधुरा लीला मधुरेति** । किञ्च, यमुनासम्बन्धिलीलानिरूपणप्रस्तावे 'गोपी मधुरे'ति निरूपणेनापि व्रतसम्बन्धिन्यो ज्ञायन्ते । यमुनायाः कुमारीकामपूरकत्वात् । तदुक्तम् । 'कुमारीकामपूरके कुरु भक्तिराय'मिति । तास्तु यमुनायां शृङ्गारोद्दीपकवसनेन भूषणादित्यागेन विहरन्तीति तासां परमसौन्दर्यमाधुर्यरमणीयतरप्रत्यङ्गावलोकनार्थं भगवता वसनेषु हृतेषु पुनस्तत्प्रार्थनतदुत्तरविरचनायाभन्तरुच्छलद्रसाब्धिपूरजनितविचित्रभावतरङ्गसंवलितावलोकनपरिहासकौतुकरसात्मकमुग्धभावातिललितसकलाङ्गावलोकनजनितपरमरसानुभवोऽभूद्भगवत इति तत्स्मृत्वा **गोपी मधुरा लीला मधुरे**त्युक्तम् । अग्रे पुनः स्वसमीपागमने स्वकरकमलेनालौकिकरसात्मकवसनयोजनं युक्तपदेनोच्यते । तादृशं वसनपरिधापनं स्मृत्वा **युक्तं मधुर**मित्युक्तम् । अग्रे मुक्तं मधुरं निरूप्यते । तस्यायं भावः । तत्तदङ्गपरमसौन्दर्यमाधुर्यावलोकनपूर्वकं नीवीपरिधापने सात्त्विकभावाविर्भावेन करकमलान्नीवी स्खलतीति तत् स्मृत्वा **मुक्तं मधुर**मुक्तम् । अथवा सौन्दर्यावलोकनार्थमेव करकमलान्नीवीं मुञ्चतीति तयोक्तम् । अथवा परिहासार्थमपि तथा करोतीत्यनन्तप्रकारकभावसंवलितं मोचनमुक्तम् । अथवा प्रौढानामेव मोचनमुच्यते । तदा 'नीवीं प्रति प्रणिहिते च करे प्रियेणे'त्युक्त्या तन्मोचनमाधुर्यं तदनुभवैकवेद्यमिति तत्स्मृत्वा तयोक्तम् । अग्रे **दृष्टं मधुरं** निरूप्यते । तस्यायं भावः । तादृशे समये परस्परोच्छलितकामभावतरलतरावलोकनं परममधुरं भवतीति तयोक्तम् । अथवा [1]एतस्यानामेतावत्पर्यन्तं कौमारभावसंवलितावलोकनमभूद्धुनैव तथाविधकामरूपवसनपरिधापने तद्रसात्मकं परस्परं निरीक्षणं परममधुरं भवतीति तत्स्मृत्वा **दृष्टं मधुर**मुक्तम् । तथा चोक्तं 'प्रेष्ठसङ्गमसज्जिता' इत्यस्य विवरणे 'रसात्मका जातास्ता'

---

१ वृद्धायोनामिति पाठः

इति श्रीभागवते । अतः परं श्रीमतः **शिष्टं मधुरं** निरूप्यते । अत्राय भावः । व्रतस्थाः सर्वा ऋषयः । तेषां परमानुग्रहेण देहप्राणेन्द्रियान्तःकरण तद्धर्मादयः सर्वे भगवता स्वविषयीकृताः, अधुना लीलात्मकस्वरूपप्राप्त्यनन्तर तदीयपुस्त्वाख्यो यो धर्मः सोवशिष्टः पृथक्तया भगवता स्वान्तःस्थापितोऽङ्गीकृतत्वात् । तद्धर्मरूपा एव ते वयस्याः, तेषां दर्शने तासां स्वधर्मरूपत्वाज्ञानाल्लज्जया विविधभावसंवलितवचनमाधुरीसमुद्रलहरीविलासा जाताः, तेषां तु तेद्धर्मरूपवयस्यत्वेन पृथग् विद्यमानत्वाद् भगवत्कृतिचातुर्यज्ञानेन स्वस्यापि तदङ्गीकृतिजनितरसात्मकभावरूपत्वसम्पत्तिज्ञानेन च विविधभावाकूत तल्लीलावलोकनं भवतीति तत्स्मृत्वोक्त **शिष्टं मधुरमिति** । तादृशलीलावलोकनमितरपुरुषाणां न सम्भवति रसाभाससम्पादकत्वात् । अथवा उद्दीपनालम्बनविभावलीलानिरूपणानन्तर 'शिष्ट मधुर'मिति निरूपणात् शिष्टपदेन रमणमेवोक्तम् । तेन 'आत्तगजेन्द्रलील' इत्येतत्प्रकारकानिर्वचनीयमाधुर्यानुभवात् तयोक्तम् । अथवा शिष्टपदेन रत्यन्तो ज्ञेयः । तेन लोके तदन्ते विरतिर्भवतीति रसाभावो निरूपित इत्यतो भगवतस्तत्करणमपि मधुरमेवेह विरत्यभावादिति **शिष्टं मधुरमुक्तमिति** भावः । तथा चोक्त 'स्वरतिरात्तगजेन्द्रलील'इति । तादृशमपि भगवत्सम्बन्धिरससम्पादकमिति **मधुराधिपतेरखिलं मधुरमित्युक्तमग्रे** ॥ ७ ॥

अतः पर परेषामप्ययोग्यानां योग्यत्व निरूपयन्ति **गोपा मधुरा** इति ।

**गोपा मधुरा गावो मधुरा यष्टिर्मधुरा सृष्टिर्मधुरा ।**
**दलितं मधुरं फलितं मधुरं मधुराधिपतेरखिलं मधुरम् ॥ ८ ॥**

**गोपा** अन्तरङ्गाः शुद्धभाव प्रपन्नाः सङ्केतादिषु भगवल्लीलासाधकाः तत्तद्भक्तसङ्गमकरणैकतत्पराः सर्वदा भगवद्भावाविष्टाः सर्वदानुभूतलीलागुणगानरसैकसरसमानसाः, अत एव बहिरपि तदेकरसार्द्रनयनाः तत्तत्प्रियासम्बन्धिवार्तानुवादकरणोपयोगित्वेन भगवतोऽतिप्रियाः, तादृशानां तेषा तावच्छिथिलधर्मादिस्फूर्तौ **गोपा मधुरा** इत्युक्तम् । एतदेवोक्त वेणुगीते 'एते देवाः साक्षिण' इति विवरणे । ततोग्रे इतोप्ययोग्यानां माधुर्यं निरूपयन्ति **गावो मधुरा** इति । गावस्तु पशुत्वेन अत्यन्त अयोग्या., तथापि वेणुनादामृतप्रवेशो तासामपि रसात्मकालौकिकभावसम्पत्तिः पशुत्वधर्मनिवृत्तिपूर्वकं सम्पन्नेति 'गावश्च कृष्णमुखनिर्गतवेणुगीतपीयूषमुत्तभितकर्णपुटैः पिबन्त्य' इत्यनेन निरूपितम् । अत एव गावोपि भावात्मकत्वेन मधुरा एवेति तयोक्तम् । अथवा गावोऽनुभाविका., गोदोहनादिव्याजेन तत्तद्भक्तसयोगे तत्तद्रसानुभवकारिका इति विप्रयोगसमये तासां गवां दर्शनस्पर्शादौ तत्तत्प्रियावलोकनस्पर्शादिमाधुर्यानुभवो भवतीति तत्स्मृत्वा **गावो मधुरा इत्युक्तम्** । अतः परमचेतनानां तत्रापि शुष्काणां मधुरत्व निरू-

१ स्वधर्मरूपेति पाठ । २ पूर्वानुभूतेति पाठ । ३ अनुभाविका इति च पाठ ।

पयन्ति यष्टिर्मधुरेति । यष्टिर्नीरसा, तस्या अपि मधुरत्वस्य सम्पादने अत्यलौकिकं चरित्रं भगवतो निरूपितम् । अयं भावः । यष्टिस्तु नियामिका दण्डसाधिका भवति । रसात्मकलीलायां दण्डान्तराभावात् यष्टिनिरूपणेन दानलीला व्यज्यते । तेन दधि विक्रयार्थं निर्गताना वने समागताना व्रजवल्लवीना निरोधार्थं प्रवृत्तस्य तन्निरोधसाधिका यष्टिरिति ज्ञाप्यते । तथा च तन्निरोधकरणे परस्परोत्तरप्रत्युत्तररसार्णवे मग्नानां संमुखे सति प्रथम निरोधव्याजेन परमलावण्यरससवलितानेकभावोल्लसितापूर्वतररुचिरस्मितैस्सरोत्फुल्लविलोचनसुधासिन्धुप्रसृतमाधुरीमरातिमधुरापाङ्गभङ्गीभिरनङ्गरङ्गतरङ्गार्नुत्तेजयता भगवता तासां वक्षःस्थलादिषु यष्ट्यैव स्पर्शः क्रियते, तदा करकमलसम्बन्धजनितरसात्मकयष्टिस्पर्शेन कुसुमशरस्पर्शाघातेनेव तासां हृदयं विविधभावोद्घूर्णितं भवतीति तन्माधुर्यं तासामेव वेद्य नान्येषाम् । रसस्य तदनुभयात् तत्स्मृत्वा यष्टिर्मधुरेत्युक्तम् । एवं लोकदृष्ट्या अयोग्यानामपि भगवत्सम्बन्धित्वेन मधुरत्वं निरूप्य लीलासृष्टिः सर्वापि मधुरैवेति निरूपयन्ति सृष्टिर्मधुरेति । अयं भावः । 'पुष्टिं कायेने'ति वाक्यात् साक्षाद्रसात्मकभगवच्चरणारविन्दरजआदितदप्राकृतभूतसम्पादितस्वरूपा लीलासृष्टिः, तत्र यस्य यादृशरूपमपेक्षितं तादृशमेव भवितुमर्हतीति लोकदृष्ट्या यष्टेः नीरसत्वेऽपि रसात्मकसृष्ट्यन्तर्गतत्वेन भावात्मकत्वात् तस्या मधुरत्वं निरूप्य सृष्टिरेव सर्वा मधुरेति ज्ञापनाय सृष्टिर्मधुरेत्युक्तम् । एवं भगवतः सर्वं रसात्मकमिति निरूप्य तादृशस्य स्वरूपनिरूपणपूर्वकं उपसंहरन्ति दलितं मधुरं फलितं मधुरमिति । अत्र भगवतो रसात्मकफलरूपत्वाद् व्रजसीमन्तिनीनां तद्दलत्वेनोपभोगयोग्यत्वेन माधुर्यं निरूपितम् । एवं सति फलस्य वृक्षाश्रयत्वाद् भगवतो वृक्षरूपत्वमपि निरूप्यते । तथा चोक्तमपि श्रीप्रभुचरणैः 'नन्दगेहालवालोदितश्रीरागसेकसवृद्धसुरवृक्ष' तथा 'भावैरङ्कुरितं महीमृगदृशामाकल्पमासिञ्चित'मिति । लोके वृक्षस्य फलमेव उपभोग्यं भवति । अयं तु अङ्कुरमारभ्य फलपर्यन्तमनवरतसुरवृक्ष एव रसात्मकः उपभोक्ष्यते इति ज्ञापयितुं दलितं मधुरमित्युक्तम् । वृक्षस्य यथा प्रथममङ्कुरमारभ्य पल्लवशाखाकलिकापुष्पफलानि क्रमशो भवन्ति, तथास्यापि नन्दगेहालवाले प्राकट्यादारभ्य बाल्यकौमारपौगण्डकैशोरपर्यन्तं सर्वदा रसात्मकत्वेन उपभोग्यत्वमेवेत्यलौकिकत्वेन ततो वैलक्षण्यं निरूपितम् । किञ्च, अयं रसात्मको वृक्ष इति रसस्य भावात्मकत्वेन भावानां कोमलप्रौढतरादिविविधविचित्ररूपत्वादङ्कुरपल्लवादिरूपत्वं शास्त्रे निरूपितं 'अङ्कुरपल्लवशाखेत्यादिने'ति । तादृशत्वज्ञापनाय भगवतः पल्लवादिधारणं श्रीभागवते निरूपितम् 'चूतप्रवालबर्हस्तबकोत्पलाब्जमाले'त्यत्र । तद्भावास्तु विवरणे 'वस्तुनिर्देशमात्रेणे'त्यादिकारिकाभिः स्फुटीकृताः इति तत् सर्वं

---

१ तरुणीनामित्यपि पाठः २ समुत्तरङ्गेति पाठः । ३ सेरामङ्केति च पाठः । ४ दभिनयतेति पाठः । ५ सृष्टेरिति पाठः ।

स्मृत्वा **दलितं मधुरं फलितं मधुरमुक्तम्**व्यवधानेन । किञ्च, अत्रोपक्रमोपसंहारा-भ्यामपि अयमेव भावार्थः स्फुटीभवति । तथाच उपक्रमे अधरस्योक्तत्वात् उपसंहारे दलितस्य निरूपणाच्च अधरस्य दलरूपत्वेन उपक्रमोपसंहारसङ्गतौ सत्यां तन्मध्यपातिसम्पूर्णवृक्षस्यैव रसात्मकत्वेन उपभोग्यत्वमिति ज्ञापनार्थं अन्ते पुनः **फलितं मधुरमुक्त**मिति भावः । एवं सम्पूर्णवृक्षस्य रसरूपत्वं निरूप्य फलरूपत्वं निरूपयन्ति **फलितं मधुर**मिति । 'अतो निरोधो महाफलं' इत्युक्तत्वात् फलप्रकरणीयपूर्णसंयोगरसानुभवानन्तरं विप्रयोगे श्रीमदुद्धवमिलनजनितोत्सवभराविर्भूतविचित्रभावामृतसिन्धुकल्लोलदोलायितव्रजयुवतिदेहप्राणेन्द्रियान्तःकरणादिषु तत्तद्रूपेण निरन्तरं लीलाकरणरूपं यत्फलितं तन्मधुरमित्युक्तम्, तथा निरोधस्य सम्पूर्णत्वादिति । अत एव 'उद्धवागमने जात उत्सवः सुमहान्यये'ति निरूपितं निरोधवर्णने । एवं फलपर्यन्तं निरूप्य भगवतो धुर्मेयरसात्मकत्वादुभयरसलीलापि सर्वा मधुरैवेति निरूपयन्तो निरोधसमाप्तिं निरूपयन्ति **मधुराधिपतेरखिलं मधुर**मिति । उभयरसरूपस्य सर्वं मधुरमेवेति निरूपणात् संयोगे यथा शृङ्गाररसान्तःपातित्वेन वीरादीनामपि मधुरत्वम्, तथा विप्रयोगेपि अत्यार्त्या कथञ्चिदपि प्रियचरणसम्बन्धो भवत्विति बुद्ध्या कृताना 'कंसाश्चित् पूतनायन्त्या' इत्यादिउक्तप्रकारकनीरादीना रसत्वेन मधुरत्वमेवेति ज्ञापनाय अखिलमेव तादृशस्य भगवतो मधुरमित्युक्तं श्रीमदाचार्यचरणैः **मधुराधिपतेरखिलं मधुर**मिति ॥ ८ ॥

मधुराधिपते रूपमाधुर्यमधुराखिलान् ।
श्रीमदाचार्यचरणान् नमामि मधुरप्रदान् ॥ १ ॥
स्वतः समुल्लसद्भूरिकरुणामृतकेलिन ।
अनुग्रहानिलेनेदं मानसं सुरभीकृतम् ॥ २ ॥
ततः स्फुटोऽभून्मधुरभावाना कोपि सौरभः ।
विकसच्छ्रीमदाचार्यमुखपद्मसुधात्मनाम् ॥ ३ ॥
अगाधं माधुर्यं जयति मधुराधीशजलधे
रगाधस्तल्लीलाम्बुधिमधुरिमा वागविषयः ॥
अपि स्वाचार्यास्याम्बुजमधुरता तत्र कृपया ।
स्फुटा भावा केचित् तदिह खलु विन्दोर्विलसितम् ॥ ४ ॥
श्रीविठ्ठलेश्वरपदाम्बुजमञ्जुमाध्वीमाधुर्यलुब्धमदमत्तमधुव्रतस्य ।
आनन्दगुञ्जितमिमालपितं ममेदं सौहार्दतः स्वसुहृदः परिशीलयन्तु ॥ ५ ॥

**इति श्रीवल्लभाचार्यसूनुश्रीगोस्वामिश्रीविठ्ठलेश्वरदीक्षितात्मज-**
**श्रीबालकृष्णकृतं श्रीमधुराष्टकविवरणं सम्पूर्णम् ।**

१ तदव्यवधानेनेति पाठः । २ तत्तद्रूपेणेति पाठः । ३ रसात्मकस्येति पाठः । ४ आसवात्मनामिति आमत्मा मनामिति च पाठौ ।

श्रीकृष्णाय नमः ।

श्रीगोपीजनवल्लभाय नमः ।

श्रीमदाचार्यचरणकमलेभ्यो नमः ।

# मधुराष्टकम् ।

## श्रीवल्लभकृतविवरणसमेतम् ।

---

जयन्ति जगतीतले भगवदास्यवैश्वानरा स्वकीयजनभावनाप्रकटवल्लभाधीश्वरा ।
वियोगतरलीकृतव्रजवधूविलास यमुस्त एव मधुराष्टके मधुरगीतपूर्णात्मका. ॥ १ ॥

यत्करुणीकृतदृष्ट्या भावा स्वत एव वर्धिता सततम् ।
हृदये तदेकशरणे वन्दे तान् श्रीमदाचार्यान् ॥ २ ॥

श्रीमदाचार्यचरणकमलैकरसाश्रय । ससिक्तहृदयात्माह व्याख्यास्ये मधुराष्टकम् ॥ ३ ॥
सर्वा सर्वात्मभावेन भगवद्ध्यानतत्परा । साक्षात्फलात्मरूपेण कृष्णेनाङ्गीकृता हि ता ॥ ४ ॥
ततो मानादिभावेन स्वान्ते मान पर दधु । तद्वीक्ष्य भगवान्मध्यस्तिरोधान चकार हि ॥ ५ ॥
तद्वर्ण्यते द्विधा तासु स्वरूपेण गुणेन च । गुणानामपि तादात्म्य स्वरूप वै रसाकरम् ॥ ६ ॥
'रसो वै स' इति श्रुत्या तत्तथैव निगद्यते । 'यत्राकृतिस्तत्र गुणा' इति न्यायोपदेशत ॥ ७ ॥
तस्मात्स्वरूपमाधुर्य गुणाना वा तथैव च । विवेकरहिता भक्ता भावयेयुर्मुहुर्मुहु ॥ ८ ॥
प्रत्यङ्गभावनापूर्व गान सर्वा पृथक् पृथक् । कालक्षेपाय तास्तत्र कुर्वन्तीति परस्परम् ॥ ९ ॥

अथ श्रीमद्वल्लभाधीशचरणास्तादृशीना भाव स्वहृदि समाधाय तत्तल्लीलानुभव कुर्वन्तस्तादृशालापसयुक्तगुणगानपरा सन्तो यथा कथञ्चिद्विप्रयोगकालक्षेपार्थं सर्वथा यत्क्षणमपि तेन विना स्थातु न शक्यते, तदनिर्वाहकत्वेन कल्पान्तरोपसमकक्षत्वेन 'त्रुटिर्युगायते त्वामपश्यता'मिति वाक्यात्तादृशभावयुक्ताना भाव चानुभूय स्वस्य प्रथममित्येव तदास्यरूपत्वेनोद्गताधरसुधापानकरणत्वेन च प्रार्थयन्ति अधरं मधुरमिति ।

**अधरं मधुरं वदनं मधुरं नयनं मधुरं हसितं मधुरम् ।**
**हृदयं मधुर गमनं मधुरं मधुराधिपतेरखिलं मधुरम् ॥ १ ॥**

या सुधा सर्वभोग्यरूपा, स्वामिनीना गुणगानदशायामेव कर्णद्वारेण हृदये प्रवेष्टुं शक्या, तत्रापि तदधरसम्बन्धेनैव मधुरा, सा लोभात्मक अधर एव स्थापिता, तत्प्रार्थनाया तावन्मानमित्युक्तम्, तथा च तद्गुणगानलीलासामयिकमनुभावादिक सर्वं हृदि कृत्वेत्युक्तमि

त्वर्थः। यद्वा। अधरमेव मधुरमिति स्वामिनीनामिव भगवतस्तद्गुणालापेनैवोत्कण्ठाविरहशामकत्वात्तद्भावापन्नमिति सार्वदिकं सूचितम्। तेन तद्विना क्षणमपि कुत्रापि स्थातु न शक्नोतीति भावः। तादृग्भावसम्पादने श्रीमदाचार्याणामेव श्रीयमुनावल्लीलोपयोगित्वादिकमस्तीति ज्ञापनायाप्युक्तम्। अथवा। पूर्वोक्तभाववतीनामवस्थां दृष्ट्वा स्वस्मिन्नपि तद्भावापन्नतया विप्रयोगरसानुभवार्थं तद्भावपूरकत्वेनानन्यधर्मस्फूर्त्या कथमपि शरीरसम्पादकत्वेन च रसवशात्तथैवोक्तम्। अत एव 'तत्कथाक्षिप्तचित्त' इति सर्वोत्तमे प्रभुभिर्निरूपितम्। अथवा। समानशीलव्यसनवत्त्वेन सजातीयतादृशीभिः सह लीलामृतजलधिमध्यपातित्वादवगाहनपूर्वकं माधुर्यविशिष्टमधरमेव प्रार्थयन्ति। तथा च विविधलीलाभावतरङ्गनिमग्नत्वे तदाधारत्वेनैव स्वस्वरूपस्थितिरिति भावः। अत एव तृतीयाध्याये'प्यधरसीधुनाप्याययस्व न'इति। अथवा। स्वस्य तदास्यरूपत्वेन प्रतिक्षण तदधरसुधासवलितत्वानुकूलकृतिकरणत्वेन चैतयोर्व्यापारसत्त्वादिति सर्वदा तदनुभवेनाधुनापि पूर्वोत्तरस्सराश्रयानुभूत स्मृत्वा तासां भावपोषणार्थं सम्प्रत्येकां प्रत्यवदन् अधरं मधुरमिति। एवमधरशोभाजनितमाधुर्यं निरूप्य वदनशोभां निरूपयन्ति **वदनं मधुरमिति**। पूर्वोक्तभाववतीना सर्वदा भक्तिरूपभगवन्मुखारविन्ददर्शनेनोत्कटभावजनिततापोपशमनत्वादिदानीं तद्राहित्येन कथ तत्तापशान्तिरिति परस्पर तद्गतमाधुर्यनिरूपणार्थमत्यार्तिपूर्वकं तद्विषयक दर्शनमेव भावयन्ति। तथा च। तादृगवस्थाया सर्वथा जीवनासम्भावनाया स्वाम्यनुपयोगदशायां तदनुभव स्वास्थ्ये हेतुरिति तथानापीति। अथवा। स्वामिनीना फलरूप तावदिदमेव यत प्रातरागम्य सायमागमनपर्यन्त तद्भावनपर्यन्त तद्भावनया तावत्पर्यन्तमपि विधुचकोरवत्स्मरणमानेनैव तावत्काल कथमपि नीयते। पुनस्तत्समयप्रतीक्षयैव तादृगुच्छलितरसस्वभावत्वात्सन्मुखाभिसरणादिकमपि क्रियत एव। तदैव भगवानपि मयूरानुकरणपूर्वकं नृत्य कुर्वन् तादृशकटाक्षावलोकनादिभिस्तासा सर्वभावपूर्वकमनोरथमापूरयन् गोष्ठ प्राप्नोतीत्यर्थ। अत एव 'मुदितवक्त्रमुपयाति दुरन्त मोचयन्व्रजगवा दिनताप'मिति। एतावन्मात्रं सर्व हृदि धृत्वा **वदनं मधुरमित्युक्तम्**। यद्वा। 'बर्हापीडे'ति श्लोके गोपिकानामेव भावरूपस्तदर्थमेव कोटिकन्दर्पलावण्यरूपो भगवान् प्रकटः कृष्ण इत्युच्यते। तस्मात्स्वामिनीना यत्फलित फल तदनुभूय समानशीलव्यसनवतीषु तान्निदिदमेव निश्चीयते। 'अक्षण्वता फलमिद न पर विदाम' इति ताभिर्गीतमपि। तथा सति फलसम्बन्धि मधुरत्वमित्युक्तम्। यद्वा। वदनस्य चन्द्रोपमत्वमपि घटत एव। यथा शीतलत्वात्तापहारकत्वाज्जीवनसम्पादकत्वाच्च भगवन्मुखचन्द्रोपि तासां सुखदोस्त्विति भाव। अथवा। स्वास्य तदास्यरूपत्वेन प्रतिस्वामिनीमाननिराकरणदशायामपि तद्गुणानुवादार्थं मध्यस्थतया प्रत्युपकृतित्वेन च सर्वदोभयरसप्राप्तावपि माधुर्यविशिष्ट कटाक्षादिभावयुक्त वदनमप्यनुभवयोग्य करोतीति फलितम्। अत एव 'मधुरया गिरा वल्गुवाक्यये'त्युक्तम्। एतत्सर्वं हृदि कृत्वा **वदनं मधुरमित्युक्तम्**। एव वदनशोभा-

जनितमाधुर्यं निरूप्य नयनशोभाजनितमाधुर्यं निरूपयन्ति नयनं मधुरमिति । एतद्भाव-वतीनां तु भगवदीक्षणमात्रेणैव कामभावजननात्तासामिन्द्रियादिषु तद्भावप्रसरणात् क्षणमात्र-मप्येताः स्थातुं न शक्नुवन्तीति, तथावस्थायां तादृगीक्षणापेक्षायां तस्यैव स्वरूपभावेन चक्षुः, नो चेत्तद्विना पलार्द्धेऽपि विरहसामयिकं जीवनमेव न सम्भवेत्, तथा सति तावदीक्षणमात्रे-णैव तासां जीवनमुचितमिति भावः । अत एव 'त्वत्सुन्दरस्मितनिरीक्षणे'त्यभिप्रायेण नयनं मधुरमित्युक्तम् । अथवा । नयनमिति जात्यभिप्रायेणैकवचनम् । तथा सति स्वामिनीनां कटाक्षादीन्यलससंवलितानि भावरूपाणि प्रियावलोकनरूपाणि भगवन्नयने प्रतिबिम्बितानि तद्भावपूर्वककटाक्षावलोकनानुसन्धानेन मधुरत्वप्रतीतिरित्यपि सुष्ठूक्तिः । अत एव 'शश्वप्रि-यामितापाङ्गे'त्यत्र तथैव निरूपणादिति भावः । यद्वा । नयतीति नयनं, तेन सर्वान् लीला-सृष्टिस्थान् भजनानन्दानुभवार्थं स्वरूपानन्ददानार्थं च लीलामृतसमुद्राडुद्धृत्य तदनुभवं कारयित्वा नेत्रद्वारेण पुनस्तत्रैव तथा लीनान् करोतीति फलितमित्यर्थः । अत एव 'प्रहृ-सितं प्रिय प्रेमवीक्षण'मिति तामिर्गीतम् । अथवा स्वस्य सन्नियोगशिष्टत्वेन तावन्मात्रं सर्वं हृदि कृत्वा नयनं मधुरमित्युक्तम् । एवं नयनशोभाजनितमाधुर्यं निरूप्य हास्यशोभाजनित-माधुर्यं निरूपयन्ति हसितं मधुरमिति । एतद्भाववतीनां मानसस्य त्रिगुणात्मकत्वेन निरूपणाद्भगवानपि प्रेमहासावलोकनपूर्वकैस्त्रिभिः कृत्वा तद्धरणं करोतीति तदाक्षिप्त-मनाः सत्यः स्वप्रेष्ठमपि नालोकितवत्यस्तावत्कालं कथमपि वहन्त्यस्तद्धसितस्य माधुर्य स्वस्वास्थ्यहेतुतया सम्प्रति निरूपयन्ति । तथा सति तद्धर्मपुरःसरत्वेन तद्धासापेक्षकमाधु-र्यावलोकनेनैव जीवनसम्भावना, नान्यथेति भावः । अत एव 'उदारहासद्विजकुन्ददीधि-ति'रिति लीलोपयोगित्वेन निरूपितम् । यद्वा । भगवतः सर्वदा लीलापरवशत्वात्तद्भक्तभावा-नुकूलत्वेनैव स्थितिश्चोच्यते । तेन तत्तद्भावानुरूपहास्योक्तिरपि निश्चीयते । तस्मादेतासां वियोगभावजनितहास्यप्रार्थनायां तद्धसितस्य जीवनसम्पादकत्वात्सुधारूपमाधुर्यं प्रार्थयन्ती-ति भावः । अथवा । स्वस्य तदास्यरूपत्वाद्धास्यस्य तदाधारकत्वेन प्रतिक्षणं स्वामिनीविष-यकमपि तदनुसृत्य तत्सम्बन्धेन द्विगुणितमाधुर्यं भावयन्तीति श्रीमदाचार्यैस्तावन्मात्रमपि सर्वं हृदि धृत्वा हसितं मधुरमित्युक्तम् । एवं हास्यजनितमाधुर्यं निरूप्य हृदयमाधुर्यं निरूपयन्ति हृदयं मधुरमिति । तिरोधानदशायामपि भगवानेतासां हृद्येव स्थितः, न त्वन्यत्र, नो चेत्, तासां लीलाभावनमेव न सम्भवेदतोऽन्यत्रापि स्थितिः, परं भावरूपेणात्रैव ज्ञायते । किञ्च, धर्मसहित एव हृदयारूढो जातो, न तु केवलं धर्मः, तस्मिन् समये तद्धृदय-सम्बन्धमात्रेणैव तथैवोक्तमित्यभिप्रायो ज्ञापितः । यद्वा । रसोद्बुद्धदशायामपि विपरीतानुकर-णत्वोक्त्या तद्धर्मान् स्वस्मिन्नपि स्थापितवत्यः, स्वधर्मांस्तास्वेव स्थापयन्ति इति विशेषतः पर-स्परं हृदयोपगूहनं जातमिति तथैवोक्तम् । तथा सति तद्भावानुकूलालिङ्गनपूर्वककृतिमत्त्वादि-धर्मसहितत्वेन हृदयं मधुरमेव प्राप्तमिति भावः । अथवा हृदय एव स्वामिनीभावनि-

रूपकत्वेन भगवानपि स्वस्मिंस्तद्धर्मान् संस्थाप्य तद्भावमङ्गीकरोति । तथा सति सर्वभाव-
प्रपत्तावेताभिस्तद्भावात्मक हृदयं मधुररूपेणैवानुभूतमिति भावः । अथवा । स्वस्य भगवदा-
त्मकत्वेन स्वामिनीभावसन्नियोगशिष्टत्वेन च सर्वदोभयरसात्मकं हृदय चानुभूय मधुर-
मित्युक्तम् । एवं हृदयमाधुर्यं निरूप्य गमनमाधुर्यं निरूपयन्ति **गमनं मधुरमिति ।**
भगवतो भावात्मकत्वाद्भावानुकरणकृतिमत्वाच्च लीलोपयोगिनीनां हृदयदेशे भावरूपेणैव
गमन करोतीति सर्वत्र गमनशील एव भवति । अत एव तद्भाववतीनां हृदये भावानुकूल-
लीलाविष्करणार्थं मानादिदोषदूरीकरणार्थं च तत्तद्भावरूपेण गमन, तत्रापि रसानुभावकत्वेन
तदनुकूलमजनानन्ददानेन वा गमन तथैवोक्तमितिभावः । अथवा । यदैतासां परित्यज्यान्यत्र
यनान्तरमपि गच्छेत् तदा द्रुमलतादीन् ता एव पृच्छन्ति । अत्रैव समागतोऽयं नन्दसूनुर्भ-
वद्भिर्दृष्टश्चेन्न. सूचनीय इत्यर्थः । नोचेत्, कथ पदपङ्क्तिर्भूमौ दृश्यत इति तद्दर्शनानां मनोनु-
रञ्जकत्वेन **गमनं मधुरमित्युक्तम् ।** तथा सति सर्वथेदानीमयमपि यत्र कुत्र वा हर्षादि-
पूर्वक गमन प्रापयिष्यतीति भावः । यद्वा । तत्सन्नियोगशिष्टत्वव्यतिरेकेणापि विप्रयोगपुष्टीक-
रणेऽप्यसमर्थः स्यादतो भावनायां साक्षात्स्पर्शाभावादाविर्भूतलीलायां गतिर्गमनमिति तत्प्राप्तिः
सूचिता । तथा सति सयोगरसानुभवकर्तॄणां विप्रयोगरसस्य तत्पूर्वाङ्गत्वात्तेन विना तदसम्भवा-
त्त एवातिप्रियत्वेन माधुर्योक्तिरिति भावः । अथवा । स्वस्य भगवत्सहकारिगमनशीलत्वेन
यत्र यत्र भगवानागच्छति तत्र तत्रैव अन्त. स्वयमपि स्थितः सन् तादृशीनां हृदि गमनपूर्व-
कमाधुर्यं चानुभूय **गमनं मधुरमित्युक्तम् ।** एव गमनमाधुर्यं निरूप्य धर्मित्वेन च माधुर्यं
निरूपयन्ति **मधुराधिपतेरखिलं मधुरमिति ।** भगवतो रसात्मकत्वात्तल्लीलाया अपि
रसात्मकत्व, यथा स्वरूपेऽनुभवादीनां भावनापर्यवसायित्व, तथा लीलायामपि ज्ञापयितु तास्ता
अनुचक्रुरित्युक्तम् । तेन स्वरूपस्य लीलात्मकत्वात्तदधीनत्वाच्च सन्नियोगशिष्टत्वादपि यत्र
यत्र लीला भवति तत्र तत्र स्वरूपमप्युद्बुद्ध भवतीति निर्गलितार्थ. । यद्वा । यत्राकृतिस्तत्र
गुणा वसन्तीति न्यायेन गुणानां माधुर्येणैव निरूपणत्वात्तदधिष्ठातर्यपि माधुर्यवाचकत्वे किं
वाच्यमिति कैमुतिकन्यायः प्रदर्शित. । तथा सति **मधुराधिपतेर्**भगवतो यदखिलं
लीलात्मकं स्वरूपात्मक वा तत्सर्वं **मधुरमेव** भावनीयमिति दिक् । अथवा । स्वस्य सन्नि-
योगशिष्टत्वेनैव स्वरूपात्मकत्व लीलात्मकत्व च बोधयन्स्वकीयान्प्रति तादृग्मानपरवश-
त्वादतिकरुणत्वेन तथैवोक्तवानिति भाव. । अत एव 'तल्लीलाप्रेमपूरित' इति सर्वोत्तमे
प्रभुभिर्नाम निरूपितम् ।

एवं लीलानुभावज्ञा. सात्त्विकादिगुणान्विताः । पुनस्तद्गतमाधुर्यभावन कर्तुमुद्यता. ॥ १ ॥
तथैव श्रीमदाचार्यास्तासां भाव विभाव्य च । विप्रयोगरस प्राप्य सगतास्तदधीनताम् ॥२॥

**वचनं मधुरं चरितं मधुरं वसनं मधुरं वलितं मधुरम् ।**
**चलितं मधुरं भ्रमितं मधुरं मधुराधिपतेरखिलं मधुरम् ॥ २ ॥**

**वचनं मधुरमिति** । भगवद्वचनं भक्तानामाकारणार्थं जातमिति यदैव ताभिः श्रुतं तदैव गृहादिकं सर्वं त्यक्त्वा शीघ्रतया तद्भावाधीनत्वेनैव यत्र भगवांस्तिष्ठति तत्रैव ताः समागच्छन्तीति पुनः प्रश्नानुकरणकर्तृत्वेन तद्वचनानां मधुरत्वप्रतीतिरिति तथैवोक्तम् । यद्वा । भगवता निषेधव्यतिरेकेणापि यानि वाक्यानि प्रियरूपेणैवोक्तानि तान्येव मधुराणीति वा । तथैव बोधनार्थं तदधिकारसंपत्तावपि तैरेव प्रार्थनं कृतवत्य इत्यपि सूचितम् । तथा सति तद्व्यतिरेकेणासां जीवनसम्भावनैव नास्तीति भावः प्रतिफलितः । अत एव 'संरम्भगद्गदगिरो ब्रुवतानुरक्ता' इत्युक्तम् । अथवा । स्वस्य सन्नियोगशिष्टतासम्पादकधर्मवत्त्वेन तासां विलासात्मकं लीलात्मकं हृद्यनुभूय तथैवोक्तम् । एवं वचनमाधुर्यं निरूप्य चरितमाधुर्यं निरूपयन्ति **चरितं मधुरमिति** । भगवतश्चरित्रमपि पूतनासुपयःपानादिकं तत्तल्लीलानुकरणपूर्वकं भगवति हृद्याविर्भूते तदात्मकत्वात्तदनुकरणं शक्यमिति तद्भावनया तत् कृतवत्यः पश्चात् तेन चरितावगाहकरसात्मकमाधुर्यं भावयन्तीति भावः । यद्वा । 'दावाग्निं पश्यतोल्वण'-मिति वाक्यात्तादृशीनामतिभीतानां तल्लीलावेशवतीनां विरहसामयिकं सर्वं तादृशमेव ज्ञायते । यत एतादृशीनामेव दावाग्निदर्शनं नान्यासामिति तादृशेपि समये जीवनाभावमालक्ष्य तत्प्रतीकाररूपमाधुर्यं प्रार्थयन्तीत्यर्थः । तथा सति जीवनसम्भावनापूर्वकमाधुर्यावगाहकत्वेन लीलानुकरणमिति भावः । अथवा । स्वामिनीनां तान्येवातिप्रियाणि यानि भगवता बाल्यानुकृतिमत्त्वेन रसात्मकानि कृतानि चरितानि तान्यपि मनस्यनुभूय ताभिस्तथैवोक्तमिति भावः । अथवा । स्वस्य तदात्मत्वात्तल्लीलावलोकनत्वाच्चरितानुगतमाधुर्यविलासादिकं विरहरसापन्नत्वेनैव प्रार्थयन्तीति भावः । एवं चरितमाधुर्यं निरूप्य वसनमाधुर्यं निरूपयन्ति **वसनं मधुरमिति** । स्वामिनीनां कटाक्षावलोकनादिभावपरिपूर्णस्योद्बुद्धरसात्मकस्य भगवतो लीलामृतसमुद्रत्वेनोच्छलिततरङ्गत्वादाच्छादकशक्तिमत्त्वेन पीताम्बरधारणं स्वावश्यकमिति तद्वेष्टितत्वेनैव रसाधायकत्वं ज्ञायते । अन्यथा तादृशोद्बुद्धरसात्मकस्वरूपं निरीक्ष्य विमोहिता एव स्युः, लीलाऽपि न स्यादतोपि तद्ग्रहणं युक्तमेवेति तत्साहाय्यकत्वेनैव रसप्राप्तिः सूचितेति भावः । तदेव मधुरमिति प्रार्थनायां ताभिस्तथैवोच्यत इत्यर्थः । अत एव, 'कनककपिशं वासो बिभ्र'दित्युक्तम् । अथवा । स्वस्य तदात्मकत्वेन तादृशोद्बुद्धरसात्मकदशायामपि तदपेक्षणीयत्वात्पूर्वोक्तमपि सर्वं हृदि कृत्वा तथैव प्रार्थनं कृतमिति भावः । अत एव 'मालानुपृक्तपरिधानविचित्रवेषा'विति । एवं वसनमाधुर्यं निरूप्य वलितमाधुर्यं निरूपयन्ति **वलितं मधुरमिति** । भगवतो गोपालैः सह वनगमनं तु प्रत्यहमिति गाश्चारयन्निकुञ्जगह्वरादीन्वीक्ष्य, तान् गोचारणार्थं वनान्तरे प्रेषयित्वा यद्गोवत्सादिकं [illegible] तत्रैवास्तीति तदपि विज्ञापयित्वा स्वयं विश्रामं करोति । तत्रापि सख्यादिप्रेरणया सर्वदा तद्भावाधीनत्वात्तद्विप्रयोगजनितखेददूरीकरणार्थं क्रीडादिकमपि करोतीति तादृशीनां तत्समय एव दानावसर इति सूचितं । अलस इति शेषः । तथा सत्यलसवलितादृि कटाक्षाणां माधुर्यं स्मृत्वा तथैव प्रार्थयन्तीति भावः ।

अथवा । सर्पमणिनृत्यन्यायेनापि रसवशात्तद्भावपुर सरो भूत्वा तादृशानुकरणपूर्वक नृत्य कुर्वन् वलितरूप जातमित्यर्थ. । तेन त्रिभङ्गललितस्वरूपविशिष्टमाधुर्यादिकमनुभूय ताभिस्त थैवोक्तमिति भाव । यद्वा । स्वस्य तत्स्वरूपात्मकत्वेन तत्तद्रसानुभवकर्तृत्वेन सर्वदा मन्नि-योगशिष्टत्वावगाहकधर्मत्वेन च तादृशमेव माधुर्यं प्रार्थ्यत इति भाव । एव वलितमाधुर्य निरूप्य चलितमाधुर्यं निरूपयन्ति **चलितं मधुरमिति** । भगवतश्चलन, तदपि सायमा-गमनसमये कुन्ददामकृतकौतुकवेषत्वेन गवा पश्चाद् गोपै सह हासपूर्वकलीलामाकलयन् नृत्यरसानुकूलकशक्तिमत्त्वेन तथा भावसम्पादकत्वेन च तथा भवतीत्यर्थ । तेन तादृशीना मनोभिलाषादिक मन्थरगतिचलनेनैव सिध्यतीति चलनविशिष्टमाधुर्यं प्रार्थयन्तीति भाव । अथवा । स्वामिनीना भावपूर्णकटाक्षावलोकनेन तादृशोद्बुद्धरसात्मक सन् तदैव तासा मनोरथादिकमापूरयन् तादृग्दर्शनलाभसतुष्टतया मुहुर्मुहुस्तादृशमाधुर्यावलोकन कुर्वन् प्रन प्रनिशतीत्यर्थ. । तथा सति अन्तरङ्गभक्ताना तादृशानुभवकर्त्रीणामन्योन्यनिलासादिकृत माधुर्यभावन तु युक्तमेवेति भाव सूचित । अथवा । स्वस्य तत्मन्नियोगशिष्टत्वापन्नत्वेनो-भयरसानुभवकर्तृत्वेन प्रतिक्षण चलनविशिष्टमाधुर्यं प्रार्थयन्तीति भाव । एव चलित-माधुर्य निरूप्य भ्रमितमाधुर्यं निरूपयन्ति **भ्रमितं मधुरमिति** । भगवतो बाल दशायामपि प्रतिस्वामिनीभावपूरकत्वेन तत्तन्मनोरथपूरणार्थं तासा गृहे क्रीडाव्याजेन स्वयमभिसरण करोतीति रसशास्त्रे तथैवोक्तत्वादित्यर्थ । तेनालम्बनविभावाधीनत्वेन रसस्योक्तत्वात्पुष्टीकरणार्थ तथाकरणमिति भाव । यद्वा । भगवतोऽनन्तशक्तिमत्त्वान्मा-तृचरणादीना निकट एव स्थित सन् सर्वाज्ञातरूपत्वेन समानशीलव्यसनवतीना गृहेषु गत्वा यत्नादिक कुर्वन्नपि हस्तेन शिक्यमवलम्ब्य प्रत्यह दधिनवनीतादिक चोरयतीत्यर्थ । तथा सति सार्वदिकरसानुभवकर्त्रीणा तथानुभववत्त्वाद्वैतवीर्यविशिष्टमाधुर्यभावन तु युक्तमेवेति भाव । अत एव 'प्रहसितमुखी न ह्युपालब्धुमैच्छ'दिति । एव धर्मविशिष्ट माधुर्य निरूप्य धर्मिविशिष्टमाधुर्यं निरूपयन्ति **मधुराधिपतेरखिलं मधुरमिति** । न केवल धर्माणामेव प्रार्थनमुचित, किन्तु तद्विशिष्टधर्मिण एवेति तद्गुणसंविज्ञानबहुव्रीहित्वेन लम्बकर्णमानयेत्यत्र तथैवानुभवसत्त्वात् तथैवोच्यत इत्यर्थ । तथा सति माधुर्यविशिष्टषड्गुणैश्वर्यात्मकस्य भगवतो मधुराधिपतेर्यदखिल तत्सर्वं तत्स्वरूपमाधुर्यवद्भावनीयमिति भाव । अत एव 'नवीनमधुरस्नेह प्रेयसीप्रेमसश्रय' इति ॥ २ ॥

एव लीलात्मकास्तास्ता पुनस्तास्ता विचेतस ।कुर्वन्तीति रसावेशात् कालक्षेपाय सर्वथा ॥१॥
तद्वदेव सदा श्रीमदाचार्या भावतत्परा । माधुर्यानुभवव्याप्ते तल्लीला वर्णयन्ति हि ॥ २ ॥

**वेणुर्मधुरो रेणुर्मधुरः पाणिर्मधुरः पादौ मधुरौ ।**
**नृत्यं मधुरं सख्यं मधुरं मधुराधिपतेरखिलं मधुरम् ॥ ३ ॥**

**वेणुर्मधुर इति** । भगवताधरसुधाभोगोपभोगित्वेन स अधर एव स्थापितस्तत्रापि

हस्तयुगलचालनेन तत्साहाय्यकतया स्वयं रसाविष्टो जात इत्यर्थः । तेन मयूरानुकरणपूर्वकनृत्यकरणतदधीनत्वेनैवेति ज्ञापनायापि माधुर्यानुभवपूर्वकं तथैव प्रार्थयन्तीति भावः । अत एव 'रन्ध्रान्वेणोरधरसुधया पूरय'न्नित्युक्तम् । अथवा । गोचारणक्रीडायामपि वेणोरावश्यकत्वाद्गवामाह्वानादिकं तु तेन विना न संभवतीत्यर्थः । किञ्च, संकेतस्थले सखीनामाकारणार्थं नादमयस्पष्टीकरणार्थं च तासां हृदि प्रविश्य वेणुरेव सर्वं सूचयतीत्यर्थः । तथा सति भगवान्वेणुव्यतिरेकेण रासमेकं विहाय किमपि कर्तुं न शक्नोतीति लीलायां वेणुकर्तृकमाधुर्यं भावयन्तीति भावः । अत एव वेणुरपि सहायतां प्राप्स्यतीत्युक्तमप्याचार्यवर्यैः फलप्रकरणोपक्रमे । यद्वा । स्वस्य भगवदास्यस्वरूपत्वेन तदाधारकवेणुरूपत्वेन च तयोः सन्नियोगशिष्टत्वात्तत्कृतमाधुर्यानुभवं कुर्वन्तीति भावः । एवं वेणुमाधुर्यं निरूप्य रेणुमाधुर्यं निरूपयन्ति **रेणुर्मधुर** इति । यच्चरणरजो ब्रह्मादीनामपि दुर्लभं, तदर्थं तपः कुर्वन्ति, परन्तु नाद्यापि प्राप्तम् । किञ्च, लक्ष्मीरपि तद्रजःकामनयान्यसुरप्रयासशंकया वा तत्प्रास्यर्थमेव माहात्म्यज्ञानपूर्वकमक्तिभावात्तच्चरणमेवाश्रयतीत्यर्थः । तथा सति भगवच्चरणानामरविंदपदोपादानत्वात्परागोपलक्षकरजोमाधुर्यं प्रार्थयन्तीति भावः । अत एव 'गोविन्दांघ्र्यब्जरेणव' इत्युक्तम् । अथवा । भगवतः स्वामिनीभावाधीनकृतिमत्त्वेन तच्चरणरजःकामना तु सर्वदैव तिष्ठतीति तद्भावोपलब्धौ तादृशीभिस्तथैवोक्तमित्यर्थः । तेनोभयचरणरजःकामनयैव तादृशीनां जीवनसंभावनम्, नान्यथेति भावः । यद्वा । स्वस्य तदात्मकत्वादुभयसंबन्धसंपादकत्वेनोभयत्रापि परस्परं चरणरजःकामनापूर्वकमाधुर्यं निरूपयन्तीति भावः । एवं रेणुमाधुर्यं निरूप्य पाणिमाधुर्यं निरूपयन्ति **पाणिर्मधुर** इति । भगवता गोवर्धनधारणं तु गोकुलरक्षार्थं कृतं, गोकुलरक्षणं तावदनन्यस्वामित्वेनेत्यर्थः । तेन भक्तवात्सल्यानुग्राहकशक्तिमत्त्वेन गोपगोपीगवामपि तदंतःस्थापयित्वा छत्राकमिव तदुद्धरणं करोतीति भावः । तदा जीवनसंपादकत्वेन च तन्मुखावलोकनपूर्वकमाधुर्यं पाणावेवेति ज्ञापनायापि तथैव प्रार्थयन्तीत्यर्थः । अनेन भगवतोऽनन्यगोकुलस्वामित्वं सूचितमिति भावः । यद्वा । स्वामिनीनां चूडाबन्धनादिकृतिमत्त्वेन केशप्रसाधनं तु पाणिकृतमेवेति तत्र अग्रे पुष्पाणि संस्थाप्य स्वयमेव सर्वं करोतीत्यर्थः । तथा सति तादृशीनां तादृक्पाणिकृतमाधुर्यावलोकनं तु युक्तमेवेति भावः । अथवा । स्वस्य भगवत्सन्नियोगशिष्टतानुकूलशक्तिमत्त्वेन तत्सख्याधिकरणत्वात्तत्सामयिकं पाणिकृतमाधुर्यं प्रार्थयन्तीति भावः । एवं पाणिमाधुर्यं निरूप्य पादमाधुर्यं निरूपयन्ति **पादौ मधुर** इति । भगवति जीवैर्नमनातिरिक्तं कर्तुं न शक्यमिति तादृशनमनाधिकारशक्तिमत्त्वेन तादृशभावोपलब्धौ तदात्मकाः सत्यः स्वशिरसा माधुर्यविशिष्टपादतलस्पर्शनं कुर्वन्तीत्यर्थः । अत एव 'सन्त्यज्य सर्वविषयांस्तव पादमूल'मित्याद्युक्तयः । तेन तत्संबंधव्यतिरेकेणासां जीवनसंभावनाभाव इति भावः । यद्वा । अविचार्य प्रियत्वकरणं तु दासानामेव धर्मो, नान्येषां तेन तादृशवनविहारजनितश्रमनिराकरणार्थं भगवतः पादसेवनं त्वावश्यकमिति तथैव प्रार्थयन्ति

इत्यर्थ । तथा च स्वधर्मावबोधकशक्तिमत्त्वेन दास्यानुकरणपूर्वकं माधुर्यविशिष्टपादसेवनं कुर्वन्तीति भाव । अथवा स्वस्य तदास्यरूपत्वेन तदात्मकत्वात्तादृक्श्रमादिकं सर्वं विज्ञाय तादृशीभि सह तथैव सेवनं भावयन्ति इति भाव । एव पादमाधुर्यं निरूप्य नृत्यमाधुर्यं निरूपयन्ति नृत्यं मधुरमिति । यदि ता सर्वथा भगवद्व्यतिरेकेण स्थातु न शक्नुवन्ति तदा भगवांस्तासा तादृशोत्कटभाव वीक्ष्य तादृशीभि सहोद्बुद्धशृंगाररसात्मरूप्य रूपेण तासा स्वरूपानददानार्थं तन्मण्डलेन वेष्टितत्वेन नृत्य कुर्वन् रासलीला करोतीत्यर्थ । तथा सत्यन्योन्यमुखावलोकन गानपूर्वकमाधुर्यविशिष्टनृत्यानुकरण प्रार्थयन्ति इति भाव । अथवा रसावेशदशायामपि यथा यथा हस्तकादिभाव प्रदर्श्य भगवान् नृत्य करोति तथैता अपि पार्श्वभाग एव स्थिता सत्य पूर्णरसात्मक नृत्य कुर्वन्तीत्यर्थ । तेन मध्ये· रसावेशभरेण काश्चिद् हृष्टरोमा सत्य भगवतश्चुम्बनादिक कुर्वन्तीति भाव । यद्वा रस एव रासस्थलीलाया एव फलदाननिश्चयात्स्वस्य तादृग्लीलानुभवपूर्वकरसात्मकत्वेन माधुर्यविशिष्ट तादृश नृत्य भावयन्तीति भाव । एव नृत्यमाधुर्यं निरूप्य सख्यमाधुर्य निरूपयन्ति सख्य मधुरमिति । सख्य तु समानशीलव्यसनेष्वेव, नान्यनेति, अत एवार्जुनादयो भगवदभिप्रेतकार्यकरणादविचार्य प्रियत्वकरणाद्वा त एवातरगसखाय इत्युच्यन्ते । भगवानपि तदभिप्रेतकार्यकरणत्वात् स्वस्मिन् तादृशसख्यत्व मन्यते । तथा सति परस्परमनो रथाभिपूरकत्वेनैता अपि तद्भावानुकूलकमाधुर्यविशिष्टसख्यभाव प्रार्थयन्तीत्यर्थ । अत एव 'सखे दर्शय सनिधि मित्येव प्रार्थयन्तीति भाव । अथवा । वय तु ते प्रिया , अस्मद्रक्षण तु त्वया कर्तव्यमेव, नो चेन्नाथत्वमेव न सभवतीति तथैव सपादयेति प्रार्थना । अतोऽस्मदगीकारार्थमेव व्रज एवाविर्भूत इति प्रयोजनवशात् सखारूपेणास्मा पालयतीत्यर्थ । किञ्च । यदि चेत् पालन न करिष्यसि तदास्माक प्राणा अपि स्थिरा न भविष्यन्तीति त्वदव तारप्रयोजन व्यर्थमेव भविष्यतीत्येतावत्सर्वं विचार्यैव करणीयमित्यर्थ । तथा सति 'वीरयो पिता सख उदेयिवान्सात्वता कुल' इत्याद्युक्तयस्तथैवार्थं द्योतयन्तीति भाव । यद्वा । स्वस्य साक्षात्स्वरूपात्मकत्वेन समानशीलव्यसनत्वेन च तादृशीना प्रार्थनादिक समीक्ष्य स्वयमपि तादृशमाधुर्यविशिष्टसख्य प्रार्थयन्ति इति भाव । एव धर्मविशिष्टमाधुर्यं निरूप्य धर्मिवि शिष्टमाधुर्यं निरूपयन्ति मधुराधिपतेरखिल मधुरमिति । लीलाना धर्मात्मकत्वात्त दात्मका सत्यस्तदानन्दानुभव कृत्वा ताभिरेव भगवत्स्फूर्तिर्नायत इति निश्चित्य तास्ता माधुर्यरूपेणैवानुभूय यत्रैतादृश माधुर्यं यस्य तस्य मधुराधिपतेर्यदखिल लीलाचरित्रावयवा दिक तत्सर्वं मधुरमेव भावयन्तीति भाव । आचार्या अपि तादृशानुकरणकृतिमत्त्वेन विप्र योगदशाया तथैव विभावयन्तीत्यर्थ ।

एव पुन प्रिया सर्वा मिलित्वा यमुनातटे । भगवद्गीतमाश्रित्य तदेवाद्यानुवर्णयन् ॥१॥
तथैव श्रीमदाचार्या विप्रयोगनिरूपणात् । तत्पुष्टीकरणाद्यान तत्स्वय चानुवर्णयन् ॥२॥

**गीतं मधुरं पीतं मधुरं भुक्तं मधुरं सुप्तं मधुरम् ।**
**रूपं मधुरं तिलकं मधुरं मधुराधिपतेरखिलं मधुरम् ॥ ४ ॥**

**गीतं मधुरमिति** । गीतादि कामरसोद्बोधक, तत्र स्त्रीणां विशेषत इति कामभाववतीनां तु ततोधिक तदुद्बोधक भवतीत्यर्थः । तथा सति स्वयमपि गानं कुर्वन्त्यः परस्पर माधुर्यरसात्मक वेणुकूजितगानं प्रार्थयन्तीति भावः । अत एव 'निशम्य गीतं तदनंगवर्धन'-मित्याद्युक्तम् । अथवा । गान तु भगवत्कृतमेवेति तत्कर्तृकस्वरूपस्फूर्तौ तदालंबनविभावत्वेन कामभावत्वेन च भगवन्तमेव प्रार्थयन्तीति भावः। अत एव 'गायन्त स्त्रियः कामयन्त' इति श्रुतेः । यद्वा । सायमागमनसमयेपि स्वामिन्यो व्रजाद्बहिरेवागत्य तत्प्रतीक्षां कुर्वन्त्यस्तिष्ठन्तीति यदा पुनर्दूरत एव यथा यथा वेणुकूजितगीत शृण्वन्त्यस्तथा तथोद्बुद्धशृगाररसात्मकस्वरूपनिरीक्षणार्थं निकट एव समागच्छन्तीत्यर्थः । तदा भगवानपि तद्भावात्मकस्वरूपनिरीक्षणार्थत्वेन तत्तन्मनोरथानुकूलकनृत्य कुर्वन् गोपैः सह सांकेतिकं सर्वमेव सूचनार्थं तथा गीतं श्रावयतीत्यर्थः । तथा सति गीतकर्तृकसर्वव्यापारेणैव तादृशीनां फलानुभूतिर्भवतीति भावः । अथवा । स्वस्य तदात्मकत्वात्तदनुभवयोग्यतासपन्नत्वेन मध्यस्थतया तदनुगुणकार्यकर्तृत्वेन च प्रतिक्षण तत्तल्लीलायां माधुर्यविशिष्टगीत प्रार्थयन्तीति भावः । एव गीतमाधुर्यं निरूप्य पीतमाधुर्यं निरूपयन्ति **पीतं मधुरमिति** । भगवतः पानं हि तत् । गोष्ठ एव स्वय स्थितः सन् गोपवेपदुग्धादि दोहन कारयित्वा गोचारणात्पूर्वमेव तान्पाययित्वा स्वयमपि पीत्वा पश्चाद्वनगमादिक करोतीत्यर्थः । किञ्च, ये तृणादिक न भक्षयन्ति, सर्वथा तदाधारत्वेनैव स्थिता भवन्तीति तान्वत्सानपि स्वहस्तेनैव पय॰ पाययतीत्यर्थ॰ । तथा सति धात्र्यानुकृतिमत्त्वेन भगवता मत्कृत दुग्धपानादिक तदेव प्रार्थयन्तीति भाव॰ । अथवा। सकेतस्थले स्वामिनीभिः सह विहारादिक कुर्वन् तादृशोद्बुद्धरसात्मकत्वेन परस्परकटाक्षावलोकनेनोत्कटरसपान करोतीत्यर्थ॰ । तेनेदानीं भगवद्व्यतिरेकेण स्थातुमशक्यत्वात्तदेव माधुर्यविशिष्टपान भावयन्तीति भाव॰। अत एव 'त्वदधरमधुरमधूनि पिबन्त दृश्यसे पुरतो गतागत'मित्यादि जयदेवोक्तिरपि । अथवा । स्वस्य तदात्मरूपत्वेन तदाधारत्वात्तत्तल्लीलोपयोगितन्माधुर्यादिक तत्सामयिक प्रार्थयन्तीति भावः । एव पीतमाधुर्यं निरूप्य भुक्तमाधुर्यं निरूपयन्ति **भुक्तं मधुरमिति** । भगवान् पुष्टिमार्गीयपदार्थानां भोगकरणार्थमेव प्रकटीभूतस्तस्माद्बाललीलायां क्रीडाव्याजेन स्वामिनीनां गृहे गत्वा तादृग्भावपरवशत्वेन तदाज्ञापूर्वक यथा भवति तथा शिक्यस्थितानां पदार्थानां भोग करोतीत्यर्थ । अन्यथा तदङ्गीकार विना तेषां साफल्यमेव नास्तीति तास्तथैव प्रार्थयन्तीति भावः । अत एव 'अस्मदीयपदार्थाना भोगः कार्यस्त्वयैव ही'ति सर्वथा प्रपत्तिभावपूर्वक निरूपितमित्यर्थ । अथवा । यज्ञपत्नीनां फलदानार्थमेव तत्र गत्वाग्रे बालकान् सप्रेष्य याचनरूपत्वेन तद्भावात्मक तन्नत्य सर्वमङ्गीकरोतीत्यर्थः । तत्रापि मुख्यायास्तदपेक्षयोत्कृष्टत्वेन साक्षादग-

संगत्वेन च तत्समर्पितभोजनादिकं भगवान्पुष्टिमार्गरीत्यैवांगीकरोतीत्यर्थः । तथा सति सर्वात्मभाववतीनां तदुच्छिष्टोपभोगित्वेनैव जीवनसंभावना नान्ययैतदभिप्रायं ज्ञात्वा तास्त्वैव प्रार्थयन्तीति भावः । यद्वा । श्रीगोवर्धनसान्वादिषु स्थित्वा गोपबालैः सह क्रीडां कुर्वन् तत्प्रतीक्षापूर्वकं यथा भवति तथा मात्रा प्रेषितसख्यानीतभोजनादिकं तद्भावाधीनत्वेन सर्वान् भोजयित्वा रामेण सह स्वयमपि भोजनं करोतीत्यर्थः । किंच । महेन्द्रयागनिराकरणत्वेन निजानां निरोधकरणार्थमेव स्वाज्ञया नन्दादीन्प्रबोध्यानेकविधान्याकान्कारयित्वा स्वयं तद्रूपीभूत्वा तत्समर्पितं सर्वं भुनक्तीत्यर्थः । तेन सर्वात्मभाववत्यस्तास्तादृशरसात्मकस्वरूपानुभवकरणत्वेन तत्तल्लीलात्मकमाधुर्यविशिष्टभुक्तं भोजनमिति प्रार्थयन्तीति भावः । अथवा । स्वस्य तदासरूपत्वात्तद्भोक्तृत्वं स्वस्मिन्नेव प्रतिफलतीति विप्रयोगानुभवकरणत्वेन पूर्वानुभूतभुक्तं स्वयमपि भावयन्तीति भावः । अत एव 'श्रीकृष्णास्यं यज्ञभोक्ते'ति सर्वोत्तमे नामद्वयमुक्तम् । एवं भुक्तमाधुर्यं निरूप्य सुप्तमाधुर्यं निरूपयन्ति **सुप्तं मधुरमिति** । यशोदोत्संगलालितस्य भगवतस्तद्धस्तलालनेनैव सर्वदा शयनमुचितं, तत्रापि स्तनपानदानापेक्षितत्वात्तद्व्यतिरेकेण शयनादिकं न करोतीत्यर्थः । अत एव 'तमंकमारूढमपाययत् स्तन'मित्याद्युक्तम् । अथवा । प्रातरारभ्य सायमागमनपर्यंतं गोचारणादिकं कृत्वा तत्तल्लीलाविहारजनितश्रमनिराकरणार्थं स्वामिनीनां भवन एव गत्वा तादृशभावात्मकत्वेन तल्लालनपूर्वकं शयनं करोतीत्यर्थः । तथा सति तासां दिवाविरहखिन्नमानसानां भगवच्चरणारविंदसंबंधेनैव तापशान्तिर्नान्यथेति तास्तथैव शयनं प्रार्थयन्तीति भावः । यद्वा । वन एव विहारादिकं कुर्वन् बालान्प्रति तथैवोक्तवान्, गोचारणादिकं भवद्भिरेव कर्तव्यं, मया तु श्रमवशात् कुंजान्तरे यत्किंचित् विश्राममात्रं क्रियत इति तदनुज्ञया तेपि तथैव कुर्वन्तीत्यर्थः । ततः संकेतस्थले स्वानुगुणत्वेनैव ता अपि समागच्छन्तीति तत्कृतभावपूर्वककटाक्षावलोकनादिभिः सर्वांगजनितश्रमं निवार्य भगवान् शयनं करोतीत्यर्थः । तथा च सति तालवृन्तादिकं कुर्वत्यः स्वाभिलषितमनोरथादिकं यथा भवति तथा तल्लीलानुस्मरणवशात्तद्भावयन्तीति भावः । अथवा । प्रातरेव किंचिदुन्मीलदुन्नतभ्रूभंगकटाक्षावलोकनादिना स्वामिनीनामथ च तथाभाववतीनामतीवसुखजनकत्वात्तत्तद्रसानुभवकत्वेन तदेव प्रार्थयन्तीति भावः । तेन तादृगुन्मीलितनयननलिनदर्शनव्यतिरेकेण तासां जीवनासंभवात् नेष्टापत्तिरिति भावः । यद्वा । स्वस्य साक्षाद्रसात्मकसत्रियोगशिष्टत्वेन तत्र सानुभवकत्वेन चाधुना विप्रयोगदशापन्नत्वेन पूर्वानुभूतं स्मारंस्मारं तथैव प्रार्थयन्तीति भावः । एवं सुप्तमाधुर्यं निरूप्य रूपमाधुर्यं निरूपयन्ति **रूपं मधुरमिति** । भगवतो रूपं रसात्मकं, 'रसघन' इति श्रुतेः । तत्रापि तत्तद्रसानुभवकर्तृत्वेन स्वयं तत्तद्रूपो भवतीति 'रंगं गतः साग्रज' इत्यत्र तथैव निरूपणात् । तथा सति स्वयं शृंगाररस एव स्थितः सन् तेषु तेषु तत्तद्रसानुभवं कारयतीति भावः । अत एव 'गोप्यः कामा'दित्याद्युक्तम् । अथवा । शृंगारो हि द्विविधः, संयोगविप्रयोगाभ्याम्, रस-

शास्त्रे तथैव निरूपणात् । तथा सत्यानन्दमात्रकरपादमुखोदरादिमत्त्वेनोभयरसात्मको भगवान् प्रतिपाद्यते । किंच । व्रजसीमन्तिनीनां उद्बुद्धशृङ्गाररसात्मकस्वरूपेणैवानन्दानुभवं प्रयच्छतीत्यर्थः । अत एव 'रसो वै सः रसं ह्येवायं लब्ध्वाऽऽनन्दी भवती'ति श्रुतेस्तथैवोक्तत्वात् । अथवा । भगवान् शृङ्गारोद्बुद्धदशायां तदधीनत्वान्नृत्यादिकरणत्वेन भक्तानां रसोद्दीपनं कुर्वन् अधरस्थितवेणुकूजनं करोतीत्यर्थः । तथा सति व्रजदेवीनां भावपूरणार्थमेव तादृग्रसानुभवजनकत्वेन त्रिभङ्गललितरूपः स्वयमेव भवतीति भावः । एता अपि तादृक्स्वरूपदर्शनापेक्षायां विरहदशापन्नत्वेन सर्वथा जीवनसम्भावनारहितत्वेन च माधुर्यविशिष्टत्रिभङ्गललितरूपं प्रार्थयन्तीति भावः । अत एव 'दर्शनीयतिलको वनमाले'त्यत्र तथैव निरूपितमाचार्यैः । यद्वा, रासलीलायां भक्तकण्ठावलम्बितनृत्यकरणत्वेन रसात्मकस्वरूपनिरूपणत्वात्तादृशीनां भावपूरणार्थं प्रभुस्तथैव करोतीत्यर्थः । तथा सत्येतासां तादृशमण्डलानुकरणकनृत्यकर्तृत्वेनाधुनापि साधनासाध्यत्वेन तांश्च मुहुर्मुहुर्माधुर्यात्मकतद्रूपमेव भावयन्तीति भावः । अत एव 'तासां मध्ये द्वयोर्द्वयो'रित्युक्तम् । अथवा । स्वस्य सर्वदा सन्नियोगशिष्टत्वेन निरूपणत्वात् भगवत्स्पृहक्रीडाकरणत्वेनाधुना तादृग्भाववतीभिः सह विप्रयोगरसानुभवार्थं स्वयमपि तथा प्रार्थनं कुर्वन्तीति भावः । एवं रूपमाधुर्यं निरूप्य तिलकमाधुर्यं निरूपयन्ति **तिलकं मधुरमिति** । भगवतो बाललीलायां मातृचरणादिभिर्लालनवशान्नेत्राञ्जनं कृत्वा भाग्यविशाले भाले रक्षार्थं वात्सल्यानुपूर्वकं यथा भवति तथा गोरोचनेन तिलकं क्रियत इत्यर्थः । तथा सति दर्शनोत्कण्ठितबुद्धीनां तेन विना प्राणधारणं न सम्भवतीति तास्तथैव प्रार्थयन्तीति भावः । यद्वा । बाललीलायां भगवतः शृङ्गारादिकं तु गोपीजनैः क्रियत इति स्थलान्तरे नीत्वा स्वामिनीसाहित्येनैव यथा तथा भवति नान्यथेत्यर्थः । तस्माद्वस्त्रालङ्कारम् पितकरणानन्तरं स्वामिनीभिरेव भावपूर्वककटाक्षावलोकनं यथा भवति तथा नवकुङ्कुमेन कस्तूरिकया वा मकरपत्रिकातिलकं क्रियत इति भावः । एतासामपि तद्भावाधीनकृतिमत्त्वात् तादृशकृतिव्यतिरेकेण जीवनं व्यर्थमिति ज्ञात्वा तास्तथैव प्रार्थयन्तीति भावः । अथवा । स्वस्य भगवदात्मकत्वेन तद्भावात्मकत्वेन च तादृशलीलोपयोगित्वात्तत्सामयिकं सर्वं स्मृत्वैव तादृशीभिः सह मनसि भावयन्तीति भावः । एवं धर्मविशिष्टमाधुर्यं निरूप्य धर्मिविशिष्टमाधुर्यं निरूपयन्ति **मधुराधिपतेरखिलं मधुरमिति** । यत्र धर्माणां माधुर्यमीदृग्भावपूर्वकं निरूपितम्, तत्र धर्मिमाधुर्ये किं वाच्यमिति कैमुतिकन्यायः प्रदर्शित इत्यर्थः । एतदेव सर्वं मनसि धृत्वा मधुराधिपतेरखिलं मधुरमित्येवोक्तं श्रीमदाचार्यैः ।

एवं स्वान्तःस्थितं भावं तां पुष्टं कर्तुमुद्यताः । तास्तां लीलां प्रकुर्वन्त्यः पुनर्गानं मुखे जगुः ॥ १ ॥
तथैव श्रीमदाचार्यास्तं पुष्टं कर्तुमुद्यताः । पुनः स्वान्तर्गतं भावं भगवद्भावसंश्रिताः ॥ २ ॥

**करणं मधुरं हरणं मधुरं तरणं मधुरं रमणं मधुरम् ।**
**वमितं मधुरं शमितं मधुरं मधुराधिपतेरखिलं मधुरम् ॥ ५ ॥**

करण मधुरमिति । यदि भगवानेव तासां हृदि स्वयमेव तिष्ठन् बाह्यतिरोधानाकृतिकरणत्वेन लीलात्मकस्वरूपानन्ददानं न प्रयच्छेत्तदा ताभिः सयोगरस एवानुभूतो भवति, न तु विप्रयोग॰, तदपेक्षया विना सोपि न पुष्टो भवतीत्यर्थ॰ । तेनैतासां पूर्वं सयोगरसानुभव कारयित्वैतत्स्वरूपानभिज्ञत्वेन पश्चात् तत्पुष्टीकरणार्थं तिरोधानलीलया विप्रयोगरसानुभव कारयित्वापि पुन॰ सयोगरसाभिनिवेशे स्वय तथा करोतीति भावः । अथवा । पुनराविर्भूय रासलीलाकरणत्वेन तासां तादृग्भावसपादकत्वादलौकिककामप्राकट्येन कामरूपः स्वयमेवाविर्भवतीत्यर्थः । अन्यथा गानप्रलापादिरहितेन रोदनप्राप्तानां जीवनसमावनया तत्संभावनैव नास्तीति भाव॰ । यद्वा । तास्वभिमानादिदोपकरण तु भगवतैव कृतमिति, परन्तु दासधर्मत्वाचास्तु स्वापराधमेव मन्यन्ते, न तु मप्रवत्कृत, तथापि भगवत्कृतमेवेत्यर्थ॰ । किञ्च । दैन्यानुकरणत्वेन साधनासाध्यत्वात् रोदनमेव तासां निरीक्ष्य स्वयमतिदयालुत्वेन सतुष्टः सन् तत्पूर्वोक्तदोप स्वयं निवार्य पश्चात्तन्मध्य एवाविर्भाव करोतीति तदपि तत्कृतमेवेत्यर्थ॰ । तथा सत्येतासां दैन्यभावसाधनत्वेनैव साक्षात्स्वरूपसम्बन्धानुभवो भवतीति, नान्यथेति भाव॰ । अत एव 'भक्तानां दैन्यमेवैक हरितोपणसाधन'मित्युक्तमाचार्यवर्यैः । अथवा । स्वस्य साक्षाद्भगवत्स्वरूपात्मकत्वेन सर्वदा तद्रसपूर्णत्वेन च स्वस्मिन्विप्रयोगरसपोषणार्थमेव तदनुकरणत्वेन दैन्य यथा भवति तथा करणनिशिष्टमाधुर्यं प्रार्थयन्तीति भाव॰ । एव करणमाधुर्यं निरूप्य हरणमाधुर्यं निरूपयन्ति हरणं मधुरमिति । कुमारीणा वरदानप्रस्तावे जलक्रीडादिदोपनिवारणार्थमन्यभजननिवारकत्वेन स्वांगीकारपूर्वकशुद्धभावोत्पादनार्थं तासा वासांसि गृहीत्वा सत्वरमेव स्वय नीप आरुह्य तथोक्तवान्, यदि भवत्यो दास्यश्चेत्तदा मदुक्तमेव करणीय, अन्यथा तु न दास्य एव । तत्रापि जलाद्बहिरागत्य नमनपूर्वक यथा भवति तथा यदि याचन करिष्यथ तदाहमपि भवतीनां शुद्धभाव दृष्ट्वा दास्यामीत्यर्थ॰ । तथा सति लौकिकानुरोध परित्यज्य भगवदाज्ञाकरणत्वेन तास्तथैव कुर्वन्तीति भाव । तादृशानुकरणकृतिमत्त्वेन तल्लीलावलोकनत्वेन च तादृग्भावसपादनार्थं विरहदशाया वस्त्रानुसधानादेता अपि तथा प्रार्थयन्तीति भाव॰ । यद्वा । भगवतो गुणा॰ षड् व्यामोहका अपि सन्ति, तैरेव मनोहरणादिक कृत्वा तत्र स्थित एव व्यामोहकरूपो भवतीत्यर्थ । तथा सति मन क्षोभजनकत्वेन जीवनासमावनत्वेन च तत्कृतप्रार्थनायां तथैव निरूपणादिति भाव॰ । अत एव 'प्रणतकामद पद्मजार्चित'मित्याद्युक्तम् । अथवा । स्वामिनीना मानदशायामपि तद्विना स्थातु न शक्यत इति तन्निराकरणार्थमेव तादृशकटाक्षावलोकनादिभिस्तद्धरण करोतीत्यर्थं । तादृशशृंगारात्मकस्वरूपावलोकनत्वेन ता अपि मानादिक त्यजन्तीति भावः । अत एव 'दृशि तु मदमानिनीमानहरण'मित्युक्तम् । अथवा, स्वस्य रसात्मकभगवत्स्वरूपसन्नियोगशिष्टत्वेन तत्तत्कार्यदर्शनानुकरणत्वेन च विरहानुभवकरणार्थं तादृशीनां

शास्त्रे तथैव निरूपणात् । तथा सत्यानंदमात्रकरपादमुखोदरादिमत्त्वेनोभयरसात्मको भगवान् प्रतिपाद्यते । किंच । व्रजसीमंतिनीनां उद्बुद्धशृंगाररसात्मकस्वरूपेणैवानंदानुभवं प्रयच्छतीत्यर्थः । अत एव 'रसो वै सः रसं ह्येवायं लब्ध्वाऽनन्दी भवती'ति श्रुतेस्तथैवोक्तत्वात् । अथवा । भगवान् शृंगारोद्बुद्धदशायां तदधीनत्वाद्धृत्यादिकरणत्वेन भक्तानां रसोद्दीपनं कुर्वन् अधरस्थितवेणुकूजनं करोतीत्यर्थः । तथा सति व्रजदेवीनां भावपूरणार्थमेव तादृग्रसानुभवजनकत्वेन त्रिभंगललितरूपः स्वयमेव भवतीति भावः । एता अपि तादृक्स्वरूपदर्शनापेक्षायां विरहदशापन्नत्वेन सर्वथा जीवनसंभावनारहितत्वेन च माधुर्यविशिष्टत्रिभंगललितरूपं प्रार्थयन्तीति भावः । अत एव 'दर्शनीयतिलको वनमाले'त्यत्र तथैव निरूपितमाचार्यैः । यद्वा, रासलीलायां भक्तकंठावलंबितनृत्यकरणत्वेन रसात्मकस्वरूपनिरूपणत्वात्तादृशीनां भावपूरणार्थं प्रभुस्तथैव करोतीत्यर्थः । तथा सत्येतासां तादृशमण्डलानुकरणकनृत्यकर्तृत्वेनाधुनापि साधनासाध्यत्वेन ताश्च मुहुर्मुहुर्माधुर्यात्मकं तद्रूपमेव भावयन्तीति भावः । अत एव 'तासां मध्ये द्वयोर्द्वयो'रित्युक्तम् । अथवा । स्वस्य सर्वदा सन्नियोगशिष्टत्वेन निरूपणत्वात् भगवत्सहक्रीडाकरणत्वेनाधुना तादृग्भाववतीभिः सह विप्रयोगरसानुभवार्थं स्वयमपि तथा प्रार्थनं कुर्वन्तीति भावः । एवं रूपमाधुर्यं निरूप्य तिलकमाधुर्यं निरूपयन्ति **तिलकं मधुरमिति** । भगवतो बाललीलायां मातृचरणादिभिर्लालनवशान्नेत्राञ्जनं कृत्वा भाग्यविशाले भाले रक्षार्थं वात्सल्यानुपूर्वकं यथा भवति तथा गोरोचनेन तिलकं क्रियत इत्यर्थः । तथा सति दर्शनोत्कण्ठितबुद्धीनां तेन विना प्राणधारणं न संभवतीति तास्तथैव प्रार्थयन्तीति भावः । यद्वा । बाललीलायां भगवतः शृंगारादिकं तु गोपीजनैः क्रियत इति स्थलान्तरे नीत्वा स्वामिनीसाहित्येनैव यथा तथा भवति नान्यथेत्यर्थः । तस्माद्वस्त्रालंकारभूषितकरणानन्तरं स्वामिनीभिरेव भावपूर्वककटाक्षावलोकनं यथा भवति तथा नवकुंकुमेन कस्तूरिकया वा मकरपत्रिकातिलकं क्रियत इति भावः । एतासामपि तद्भावाधीनकृतिमत्त्वात् तादृशकृतिव्यतिरेकेण जीवनं व्यर्थमिति ज्ञात्वा तास्तथैव प्रार्थयन्तीति भावः । अथवा । स्वस्य भगवदात्मकत्वेन तद्भावात्मकत्वेन च तादृशलीलोपयोगित्वात्तत्सामयिकं सर्वं स्मृत्वैव तादृशीभिः सह मनसि भावयन्तीति भावः । एवं धर्मविशिष्टमाधुर्यं निरूप्य धर्मिविशिष्टमाधुर्यं निरूपयन्ति **मधुराधिपतेरखिलं मधुरमिति** । यत्र धर्माणां माधुर्यमीदृग् भावपूर्वकं निरूपितम्, तत्र धर्मिमाधुर्ये किं वाच्यमिति कैमुतिकन्यायः प्रदर्शित इत्यर्थः । एतद्देव सर्वं मनसि धृत्वा मधुराधिपतेरखिलं मधुरमित्येवोक्तं श्रीमदाचार्यैः ।

एवं स्वांतःस्थितं भावं ताः पुष्टं कर्तुमुद्यताः । तास्ता लीलाः प्रकुर्वन्त्यः पुनर्गानं मुखे जगुः १
तथैव श्रीमदाचार्यास्तं पुष्टं कर्तुमुद्यताः । पुनः स्वांतर्गतं भावं भगवद्भावसंश्रिताः ॥ २ ॥

**करणं मधुरं हरणं मधुरं तरणं मधुरं रमणं मधुरम् ।**
**वमितं मधुरं शमितं मधुरं मधुराधिपतेरखिलं मधुरम् ॥ ५ ॥**

भातीत्यर्थः । तथा सति तादृग्दर्शनाभिलापपूरितविग्रहत्वेन तेन विना स्थातुं न शक्नुवन्तीति भावः । अथवा । भगवतः शृंगारोद्बुद्धरसात्मकस्वरूपत्वेन स्वामिनीभावाधीनकृतिकरणत्वात्सर्वदा तद्ध्यानात्मको भूत्वा तद्विलासादीन् भक्तानामनुभावयतीत्यर्थः । अत एव केशप्रसाधनत्वे तथैव निरूपितमाचार्यवर्यैः । तथा सति जीवनसंपादनार्थमेव तदेव प्रार्थयन्तीति भावः । यद्वा । स्वामिनीनां स्वान्तर्गतमाभावरूपेण यत्कृतं भगवता तद्वमितं, तत्प्रार्थयन्तीति भावः । यद्वा । स्वामिनीनां स्वान्तर्गतभावज्ञापनार्थं वेणुकूजनादिकं कुर्वन् तत्रैव भावपूरकत्वेन तासां भावोच्छलनादिकं सर्वं ज्ञापयतीत्यर्थः । तेनैतद्भाववतीनां जीवनसंभावनारहितानां भगवन्मुखोद्गतामृतरसात्रि वेणुश्रवणं तथैव भवतीति भावः । अथवा । स्वस्य साक्षाद्भगवदास्यरूपत्वेन सर्वदा तदुपभोगित्वेन चांतर्निष्ठभाव बहिः प्रकटीकरणार्थं तथैव भावयन्तीति भावः । एवं वमितमाधुर्यं निरूप्य शमितमाधुर्यं निरूपयन्ति **शमितं मधुरमिति** । भगवान् क्रीडां करोतीत्यर्थः । अन्यथा महदुपद्रवसहितं दुष्टदैत्यादिनिवारणं कथं स्यादिति भावः । अथवा । शमु उपशम इति धातावुपदेशकाल एवोपसर्गस्य पतितत्वात्तेन भक्तवात्सल्यानुग्राहकधर्मवत्त्वेन पूतनादीनां शमनं करोतीत्यर्थः । अत एव 'गोप्यस्तूर्णं समभ्येत्य जगृहुर्जातसंभ्रमा' इति श्रीशुकैरुक्तम् । तथा सति पूर्वोक्तानुस्मरणकृतिमत्त्वेनाधुनापि तास्तद्वदेव रक्षार्थं द्रष्टुकामाः शमनं प्रार्थयन्तीति भावः । अथवा । कर्तुमकर्तुमन्यथाकर्तुं समर्थत्वेन पूर्वं स्वरूपानन्ददानं कृत्वा पश्चात् तदकर्तुं विप्रयोगं विधाय पुनरन्यथाकर्तृत्वेन दैन्यप्रादुर्भावानन्तरं तासां यथा पूर्ववत् करोतीत्यर्थः । तेन स्वस्यैव सर्वकर्तृत्वेनैतासां जीवनसंपादकत्वात्तन्निराकरणं न युक्तमिति भावः । अत एव 'साक्षान्मन्मथमन्मथ' इत्युक्तम् । अथवा । स्वस्य साक्षाद्रसात्मकसन्नियोगशिष्टत्वेनोभयरसानुभवकरणार्थं तादृशीभिः सह शमनविशिष्टमाधुर्यं प्रार्थयन्तीति भावोपि सूचितः । एवं धर्मविशिष्टमाधुर्यं निरूप्य धर्मिविशिष्टमाधुर्यं निरूपयन्ति **मधुराधिपतेरखिलं मधुरमिति** । यत्र भक्तानां विप्रयोगदशापन्नत्वेन लीलायां मधुरत्वस्यैव प्रतीतिस्तत्र साक्षात्स्वरूपानन्दानुभवे का वार्तेति संशयनिराकरणपूर्वकज्ञापनार्थं मधुरा या भगवल्लीलास्तासां योऽधिपो भगवान् षड्गुणैश्वर्यसंपन्नः सर्वकरणसमर्थः फलदाता तस्य यत्सर्वं निरूपितं तन्मधुरमेवेत्यर्थः । अखिलमित्यव्ययेनाविकृतत्वं निरूपितम् ।

एवं पुलिनमागत्य कालिन्द्याः तस्य भावनाः । स्तुतिं चक्रुरुदारां च स्वप्रियालापपूर्विकाम् ॥१

तथैव श्रीमदाचार्या भावनां भावपूर्विकाम् । यमुनासहितां चक्रुर्महतीं स्तुतिमुत्तमाम् ॥२॥

**गुञ्जा मधुरा माला मधुरा यमुना मधुरा वीची मधुरा ।**
**सलिलं मधुरं कमलं मधुरं मधुराधिपतेरखिलं मधुरम् ॥ ६ ॥**

**गुञ्जा मधुरेति** । भगवान् रसात्मकः शृंगारात्मा गोचारणादिक्रीडाकरणार्थं शिरसि मयूरमुकुटं कंठे गुञ्जां कटितटे सुवर्णमेखलामंसे पीतवस्त्रं बिभर्ति । ततस्तद्रूपणयुक्तसौंदर्यावलोकनत्वेन किंचित्स्वास्यकरणत्वादेतास्तथैव प्रार्थयन्तीति भावः । अत एव

भाव मनसि धृत्वा तथैव प्रार्थयन्तीति भाव । एव हरणमाधुर्य निरूप्य तरणमाधुर्यं निरूपयन्ति तरणं मधुरमिति । भगवान् भक्ताना मज्जानन्दानुभवकरणार्थं वैकुण्ठदर्शनार्थं च पूर्वं तथैव तेषा मज्जन करोतीति । पुन स्वभजनानन्दप्रापणार्थमेव लीलासमुद्रे निमज्य स्वेच्छया पुनस्तत्क्रीडाकरणार्थं तान् तारयतीत्यर्थ । तथा सति विप्रयोगलीलामृतसमुद्रमज्जनत्वेन भगवतस्तारकरूपत्वात्तास्तथैव प्रार्थयन्तीति भावः। अथवा। तॄ प्लवनतरणयोरिति धातो रुभयार्थकत्वात्संयोगविप्रयोगरसानुभवकर्तृत्वेन तादृशलीलामृतसमुद्रे पुन पुनस्तन्मज्जनोन्मज्जनादिक करोतीत्यर्थ । किंच। स्वयमपि तदधीनत्वादाधाराधेयभावत्त्वाच्चानन्तशक्तिमत्त्वेन तथैव करोतीत्यर्थ । अत एव प्रभुभि तथैवोक्त श्रीमद्गोकुलाष्टके 'श्रीमद्गोकुलतारक' इति। क्रीडास्थानत्वात्तथैवोचितमिति भाव । अथवा। श्रीयमुनाया स्थित सन् जलदोपात्मकसुरदूरीकरणत्वेन भक्ताना स्वस्यापि वा प्रतिबन्धनिराकरणत्वेन च तत्सयधसपादक स्वास्स्वय तरति ता अपि तारयतीत्यर्थ । तथा सति मज्जनसमयानुकूलव्यापारकृतिमत्त्वेन भगवति निश्चयत्वात्तरणविशिष्टमाधुर्यं प्रार्थयन्तीति भाव । अत एव 'यमुनानाविको गोपीपारावारकृतोद्यम' इत्युक्तम्। अथवा। स्वस्य साक्षात्तत्स्वरूपात्मकत्वात्तत्तल्लीलामृतसमुद्रमज्जनोन्मज्जनेन विप्रयोगरसानुभव कुर्वन्त श्रीमदाचार्यवर्यास्तदनुकरणत्वेन तथैव मनसि विभावयन्तीति भाव । एव तरणमाधुर्यं निरूप्य रमणमाधुर्यं निरूपयन्ति रमण मधुरमिति। भगवान् गोचारणादिक्रीडाकरणार्थं गोपबालै समानवयस्कै सह लीलापरवशत्वेन प्रत्यह वनगमन करोतीत्यर्थ । तत्रापि सखामडलीकरणत्वेन बाल्यरसानुभव कर्तुं तत्तच्चरितानुसारेण तै साक रमण करोतीति तत्तल्लीलास्मरणत्वेन विप्रयोगे कालक्षेपार्थं ता अपि माधुर्यविशिष्टरमण प्रार्थयन्तीति भाव । अथवा। श्रीगोवर्धनसान्वादिषु स्थित सन् भोजनानुकूलपाल्यचरितानुकरणत्वेन तथा भोजनादिक करोतीत्यर्थ । तथा सति केषाञ्चित् भोजन दत्त केषाञ्चित् वाक्यमात्रेणैव केषाञ्चिद्भक्तभाडादिक तथा रमण करोतीति भाव । यद्वा भगवत स्वामिनीभावात्मकत्वान्निकुञ्जगह्वरातरेषु तादृशविहारकर्त्रीभि सह तत्तद्भोगकरणार्थं रमणादिक करोतीत्यर्थ । तास्तादृग्विलाससपत्तावपि भावात्मकत्वात्तथैव भगवन्त प्रार्थयन्तीति भाव । अथवा। रासलीलाकरणत्वेन यावतीर्गोपीर्व्रजयोषितस्तावतमात्मान कृत्वा तासा साक्षात्स्वरूपानन्ददानार्थं ताभि सह रमण करोतीत्यर्थ । तथा सति भगवद्भावात्मिका सत्य शक्तिविशिष्टरमण प्रार्थयन्तीति भाव । अत एव 'एकाकी न रमते स द्वितीयमैच्छ'दिति श्रुते । अथवा। स्वस्य सद्वियोगक्लिष्टत्वेन यावतो भगवद्धर्मांस्तावन्त एवात्रापि स्थिता सन्तीति तासु तद्धर्मान् स्थापयन्तस्तादृशीना जीवनसपादकत्वेन परस्पर मिलित्वा रमणमाधुर्यं भावयन्तीति भाव । एव रमणमाधुर्यं निरूप्य वमितमाधुर्यं निरूपयन्ति वमित मधुरमिति। भगवतो भावात्मकत्वाच्चदीक्षणादीनि तथैव सन्तीति क्रीडासक्तत्वेन प्रत्यगेषु रात्रिजागरजनितविलाससूचकत्वात् भक्तानामतिसतोषदायकत्वेन भावोद्गारिणीदृष्टिपातत्वाद्वमित तथैव

भातीत्यर्थः। तथा सति तादृग्दर्शनाभिलापपूरितविग्रहत्वेन तेन विना स्थातुं न शक्नुवन्तीति जीवनसंपादनार्थमेव तदेव प्रार्थयन्तीति भावः। अथवा। भगवतः शृंगारोद्धुद्धरसात्मकस्वरूपत्वेन स्वामिनीभावाधीनकृतिकरणत्वात्सर्वदा तद्ध्यानात्मको भूत्वा तद्विलासादीन् भक्तानामनुभावयतीत्यर्थः। अत एव केशप्रसाधनत्वे तथैव निरूपितमाचार्यवर्यैः। तथा सति भावरूपेण यत्कृतं भगवता तद्वमितं, तत्प्रार्थयन्तीति भावः। यद्वा। स्वामिनीनां स्वान्तर्गतभावज्ञापनार्थं वेणुकूजनादिकं कुर्वन् तत्रैव भावपूरकत्वेन तासां भावोच्छलनादिकं सर्वं ज्ञापयतीत्यर्थः। तेनैतद्भाववतीनां जीवनसंभावनारहितानां भगवन्मुखोद्गतामृतस्राविवेणुश्रवणं तथैव भवतीति भावः। अथवा। स्वस्य साक्षाद्भगवदास्यरूपत्वेन सर्वदा तदुपभोगित्वेन चांतर्निष्ठभाव बहिः प्रकटीकरणार्थं तथैव भावयन्तीति भावः। एवं वमितमाधुर्यं निरूप्य शमितमाधुर्यं निरूपयन्ति **शमितं मधुरमिति**। भगवान् क्रीडां करोतीत्यर्थः। अन्यथा महदुपद्रवसहितं दुष्टदैत्यादिनिवारणं कथं स्यादिति भावः। अथवा। शमु उपशम इति धातूपदेशकाल एवोपसर्गस्य पतितत्वात्तेन भक्तवात्सल्यानुग्राहकधर्मवत्त्वेन पूतनादीनां शमनं करोतीत्यर्थः। अत एव 'गोप्यस्तूर्णं समभ्येत्य जगृहुर्जातसंभ्रमा' इति श्रीशुकैरुक्तम्। तथा सति पूर्वोक्तानुस्मरणकृतिमत्त्वेनाधुनापि तास्तद्वदेव रक्षार्थं द्रष्टुकामाः शमनं प्रार्थयन्तीति भावः। अथवा। कर्तुमकर्तुमन्यथाकर्तुं समर्थत्वेन पूर्वं स्वरूपानन्ददानं कृत्वा पश्चात् तदकर्तुं विप्रयोगं विधाय पुनरन्यथाकर्तृत्वेन दैन्यप्रादुर्भावानन्तरं तासां यथा पूर्ववत् करोतीत्यर्थः। तेन स्वस्यैव सर्वकर्तृत्वेनैतासां जीवनसंपादकत्वात्तन्निराकरणं न युक्तमिति भावः। अत एव 'साक्षान्मन्मथमन्मथ' इत्युक्तम्। अथवा। स्वस्य साक्षाद्रसात्मकसन्नियोगशिष्टत्वेनोभयरसानुभवकरणार्थं तादृशीभिः सह शमनविशिष्टमाधुर्यं प्रार्थयन्तीति भावोपि सूचितः। एवं धर्मविशिष्टमाधुर्यं निरूप्य धर्मिविशिष्टमाधुर्यं निरूपयन्ति **मधुराधिपतेरखिलं मधुरमिति**। यत्र भक्तानां विप्रयोगदशापन्नत्वेन लीलायां मधुरत्वस्यैव प्रतीतिस्तत्र साक्षात्स्वरूपानन्दानुभवे का वार्तेति संशयनिराकरणपूर्वकज्ञापनार्थं मधुरा या भगवल्लीलास्तासां योऽधिपो भगवान् षड्गुणैश्वर्यसंपन्नः सर्वकरणसमर्थः फलदाता तस्य यत्सर्वं निरूपितं तन्मधुरमेवेत्यर्थः। अखिलमित्यव्ययेनाविकृतत्वं निरूपितम्।

एवं पुलिनमागत्य कालिन्द्याः तस्य भावनाः। स्तुतिं चक्रुरुदारां च स्वप्रियालापपूर्विकाम्॥१
तथैव श्रीमदाचार्या भावनां भावपूर्विकाम्। यमुनासहितां चक्रुर्महतीं स्तुतिमुत्तमाम्॥२॥

**गुञ्जा मधुरा माला मधुरा यमुना मधुरा वीची मधुरा।**
**सलिलं मधुरं कमलं मधुरं मधुराधिपतेरखिलं मधुरम्॥ ६॥**

**गुञ्जा मधुरेति**। भगवान् रसात्मकः शृंगारात्मा गोचारणादिक्रीडाकरणार्थं शिरसि मयूरमुकुटं कंठे गुञ्जां कटितटे सुवर्णमेखलामंसे पीतवस्त्रं बिभर्ति। ततस्तद्रूपणयुक्तसौंदर्यावलोकनत्वेन किंचित्स्वास्थ्यकरणत्वादेतास्तथैव प्रार्थयन्तीति भावः। अत एव

'गुञ्जावतंसपरिपिच्छलसन्मुखाये'ति भक्षणोक्तम् । अथवा । भगवतः स्वामिनीभावात्मकत्वात् गुञ्जादिधारणं तु युक्तमेवेति वने विहारादिकं कुर्वन् तत्स्मरणकर्तृत्वेन तद्व्यतिरेकेण स्वातुमशक्यत्वात्किंचित्स्थैर्यकरणार्थं तदंगीकृतत्वेन स्वयमपि धारणं करोतीत्यर्थः । तथा सति गुंजाया वनस्थितत्वात्तद्दर्शनेन तत्स्मृतिजननात् भावपूर्वकालिंगनकरणत्वेन तां दधातीति भावः । अथवा । स्वामिनीनां वनगमनाभावादेतस्या वनस्थितत्वाच्च ताभिः कथं ग्रहीतुं शक्येति तासामतीव तुष्टिकरणार्थं तदर्थं वा स्वयमेव धारयतीत्यर्थः । तेन यावद् दर्शनादिकं न भवति तावदेव स्वयं धीयते पश्चात्साक्षात्स्वरूपमिलनानन्तरं तु पूर्णांगीकरणत्वेनैव ता एव धारयन्तीति भावः । अथवा । स्वस सन्नियोगशिष्टत्वेनोभयसम्बन्धित्वादत्र ता गृहीत्वा स्वयमेव तत्र गत्वा तत्पुरत एव हस्ते संस्थाप्य प्रार्थनापूर्वकं यथा भवति तथांगीकारयन्तीति पूर्वावस्थानिरूपकत्वेनैवाधुना पुनस्तदनुभवकरणार्थं तादृशीभिः सह गुंजामाधुर्यं प्रार्थयन्तीति भावः । एवं गुंजामाधुर्यं निरूप्य मालामाधुर्यं निरूपयन्ति **माला मधुरेति** । माला वैजयन्ती सर्वजयप्रकाशिका कीर्तिमयी च सर्वदोद्बुद्धशृंगाररसार्थमेवाच्छादकत्वेन तां विभावयन्तीत्यर्थः । नो चेद्रसोच्छलितत्वात्सर्वा एव विमोहिता भवेयुः, तर्हि किमपि कार्यं स्वतः परतो न भविष्यतीत्याशंक्य तासां फलानुभवकरणार्थं सर्वसाधिकां तां दधातीत्यर्थः । तथा सति सन्मुखस्थितस्वरूपावलोकनकटाक्षादिपूरितत्वेन स्वानुभूतरसानन्दानुभवं सर्वाः प्रतिक्षणं कुर्वन्तीति भावः । अत एव तादृशोद्बुद्धशृंगाररसात्मकस्वरूपप्राकट्यो वनवैजयन्ती च मालां बिभ्रदित्युक्तम् । अथवा । माला वनमाला, नानाप्रकाराणि पुष्पाणि यस्यामिति तादृशशृंगाररसोद्बोधनाय पुष्पाणां रसोद्दीपकत्वात्तत्प्रकारिकां दधातीत्यर्थः । यद्वा । वनमालाया द्विरूपत्वात् पादावलंबिता माला वनमाला प्रकीर्तितेति मालेत्युपलक्षणमात्रं, किंतु कंठाभरणमारभ्य यावंतो मुक्ताहारास्तावंत एव सर्वान् धृत्वा पश्चात्तदधो मालामेतां धारितवानित्यर्थः । तथा सति सर्वालंकारभूषितत्वेनापि वनगतशोभाया आवश्यकत्वात्कामोद्दीपनार्थं तादृशभाववत्यो माधुर्यविशिष्टमालां प्रार्थयन्तीति भावः । अत एव '*मुक्ताहारोल्लसद्वक्ष*' इति । अथवा । स्वस साक्षाद्भगवन्मुखारविन्दत्वेन तदात्मकत्वाद्विप्रयोगदशापन्नत्वेन तद्विना स्थातुं अशक्यत्वाच्च तत्तत्सामयिकं सर्वं स्मृत्वा तादृशभाववतीभिः सह तथैव विभावयन्तीति भावः । एवं मालामाधुर्यं निरूप्य यमुनामाधुर्यं निरूपयन्ति **यमुना मधुरेति** । श्रीयमुनाया भगवत्समानधर्मत्वाद्यथा भगवांल्लीलात्मकस्तथेयमपि लीला सृष्टिस्थानां स्वरूपानन्ददानादिकं करोतीत्यर्थः । किंच । भगवानप्येतदधीनत्वेनैव सर्वं करोतीति स्वैश्वर्यादिकं तत्रैव स्थाप्य तद्द्वारेणैव फलं प्रयच्छतीति सन्नियोगशिष्टत्वेनैव सर्वं करोतीति सन्नियोगशिष्टत्वेनैव सर्वदा तिष्ठतीत्यर्थः। अथवा । जलविहारादिकं तावदत्रैव भवतीति प्रेष्ठानुकूलकरणत्वेन तासामाकारणं स्वयमेव करोतीति भगवता स्तुतेत्यर्थः । स्वामिन्य अपि सर्वदैतदधीनस्थितिकरणत्वेन स्वानुभूतसुखसंदर्शनादेतामेव स्तुवन्तीत्यर्थः । तथा सत्येतावद्धर्मसामर्थ्यवत्त्वेनैतस्यामेव दृष्टा तस्य,

साधनत्वेन तादृक्प्रियसंगमाभिलाषवत्यस्तामेव माधुर्यविशिष्टां प्रार्थयन्तीति भावः । यद्वा । स्वामिनीनां विप्रयोगदशायामपि तादृशप्रियविश्लेषपीडनादिकं वीक्ष्य कर्तुमकर्तुमन्यथाकर्तुं समर्थत्वेन तद्धर्मात्मकत्वात्साक्षात्स्वरूपानुभवं कारयतीत्यर्थः । किंच । गोचारणादिक्रीडां कुर्वतो भगवतः प्रियाविप्रयोगभावात्मकस्य सर्वथा क्षणमपि तद्विना स्थातुमशक्यस्यार्तिं मत्वा स्वपुलिन एव तत्संबंधं रचयतीत्यर्थः । तथा चैतावन्मात्रकृतिकरणत्वेन तादृशोपकृति-स्वाभावात्मूर्च्छिताः सत्यो माधुर्यविशिष्टयमुनां प्रार्थयन्तीति भावः । अथवा । यमुना यम-भगिनी । यमोपि भगिनीसम्बन्धव्यतिरिक्तानां पीडयति, न तु तदीयानां, वयं तु तदंगीकृता एवेति तत्सदृशकामपीडनादस्माकं रक्षिष्यतीति विश्वासतो यमुनां प्रार्थयन्तीति भावः । यद्वा । कालिन्दीरूपत्वेनाविर्भूतत्वात्कलिं द्यतीति कलिन्दस्तस्य कन्येति भगवत्प्रतिबन्ध-कादिदोषदूरीकरणत्वेनास्माकमंगीकारं करोत्विति प्रार्थनेत्यर्थः । तथा सति सर्वकरणसमर्थत्वे जाते यदि तादृक्प्रभुसम्बन्धं करिष्यति तदैव जीवनसंभावना, नोचेदसमञ्जसमिति भावः । अथवा । स्वस्य साक्षाद्भगवत्स्वरूपात्मकत्वेन समानशीलव्यसनवत्त्वेन चैतदवस्थापन्नत्वा-त्तद्वारेणैव तादृशीनां मनोभिलाषपूरणार्थं स्वयमपि तथा प्रार्थयन्तीति भावः । एवं यमुनामा-धुर्यं निरूप्य वीचीमाधुर्यं निरूपयन्ति **वीची मधुरेति** । वीचीति जात्येकवचनाभिप्रायेण, किन्तु तरंगा बहव एवाऽसंख्याताः, तेषां शोभादिकरणत्वेन शीतलत्वादिधर्मदायकत्वेना-प्यायकत्वाद् भगवदुपयोगिन एव भवन्तीत्यर्थः । तथा सति क्रीडोपयोगित्वात्तापनिवा-रकत्वादिधर्मवत्त्वेन स्वगतविप्रयोगदुःखनिवारणार्थं तास्तयैव प्रार्थयन्तीति भावः । अथवा । तरंगाणां भुजनिरूपकत्वेनैव सर्वोपकरणत्वं, नहि कोपि हस्तव्यतिरेकेण किमपि कार्यं कर्तुं शक्नोति, तस्मात्पुलिनस्थवालुकासमीचीनकरणादिकं तु तरलतरंगप्रसारणेनैव भवति, नान्यथेत्यर्थः । तेनैतद्दर्शनमनोरथपूरकत्वेन कामजनिततापनिवृत्तित्वान्माधुर्यविशिष्ट-तरंगान्प्रार्थयन्तीति भावः । यद्वा । पुलिनं तावत्क्रीडास्थलं, तत्र जलापेक्षया सिञ्चनादिकं युक्तमेवेति, नो चेत् भगवच्चरणारविन्दानामतीवकोमलत्वाद्रमणादिकं कथं संभवतीति तैस्त-थैव क्रियत इत्यर्थः । तथा सति तद्वस्तुकृतव्यापारसामग्रीदर्शनात्प्रियमिलनादिकं ताव-दत्रैव भविष्यतीति तन्निकटस्थिता एव तद्रूपां तां प्रार्थयन्तीति भावः । अत एव 'कृष्णाया हस्ततरलाचितकोमलवालुक'मित्यत्र तथैव निरूपितमाचार्यवर्यैः । यद्वा । स्वस्य साक्षाद्र-सात्मकसन्नियोगशिष्टत्वेनैतत्सजातीयत्वेनापि समानशीलव्यसनवत्त्वादिधर्मदर्शनात्प्रियप्रति-बन्धनिवारकशक्तिविशिष्टत्वेन तत्करग्रहणपूर्वकं यथा भवति तथा प्रार्थयन्तीति भावः । एवं वीचीमाधुर्यं निरूप्य सलिलमाधुर्यं निरूपयन्ति **सलिलं मधुरमिति** । यमुनासा-हित्यात्सलिलं तज्जलमेव निरूप्यते । क्रीडार्थं जलं तावदवश्यमपेक्ष्यं श्रमनिवारकत्वेनैव, पुनस्तत्संभावना नान्यथेत्यर्थः । तथा सति तादृशीनां तद्गतलीलावगाहकशक्तिसत्त्वेनाधु-नापि तत्तत्क्रीडाकरणार्थं स्मरणमात्रेणैव तापनिवारकत्वाद्योपकृतिं ज्ञात्वा तादृक् जलं प्रार्थ-

यन्तीति भाव । अथवा कुमारीणा वरदानप्रस्तावे पूर्वमन्यदेवोपासनया फलप्रतिबन्धकत्वेन तावत्काल व्यर्थमेव जातमिति पश्चाद्व्रतान्तरारम्भकत्वेन उपोषणविधिप्राप्तत्वात् देवहेलनक्रीडादिदोषनिवारकत्वेन तज्जलमेव फलप्रतिपादक भवतीत्यर्थ । अत एव 'कालिन्द्या स्नातुमन्वह'मित्युक्तम्। तथा सत्येतज्जलसम्बन्धमात्रेणैवानिष्टनिवृत्तीष्टप्राप्तित्वाद् भगवद्भावसम्पादकत्वेन तज्जल प्रार्थयन्तीति भाव । यद्वा। भगवान् गोचारणादिक्रीडा कुर्वन्मात्रा प्रेषितभोजनादिक कृत्वा पुनर्गृहगमनशकाभावत्वेन तृषार्तान्वीक्ष्य यमुनाकूल एवागतस्तत्र सर्वान् जल पाययित्वा स्वयमपि पश्चात्पिबतीत्यर्थ। तेन जल एव मधुररस इतिन्यायात्तत्रापि श्रीयमुनासम्बन्धित्वेन शीतलत्वसुमृष्टत्वादिगुणवज्जल प्रार्थयन्तीति भाव । अत एव 'सुमृष्ट शीतला शिवा' इत्युक्तम्। अथवा। भगवत क्रीडाकरणत्वेन तत्रैव रसाविर्भावत्वा त्तादृशीभि सह रमणकर्तृत्वेन श्रमजनितखेददूरीकरणार्थं जलोत्क्षेपणादिकर्तृत्वेन विहारादिक करोतीत्यर्थ । तथा सति साक्षात्स्वरूपावलोकनकटाक्षादिभावपूर्वकस्पर्शनाभिप्रायेण माधुर्यविशिष्टजल प्रार्थयन्तीति भाव। यद्वा। स्वस्य भगवदास्यरूपत्वेन रसात्मकत्वात्तज्जलपानादिकरणत्वेनाधुना विप्रयोगरसानुभवकत्वात्कथमपि इष्टप्राप्तिसिद्ध्यर्थं दोषनिराकरणत्वेन तादृशीभि सह तथैव प्रार्थयन्तीति भाव । एव सलिलमाधुर्य निरूप्य कमलमाधुर्य निरूपयन्ति कमल मधुरमिति। भगवान्वनादागमनसमये गा पुरस्कृत्य पश्चात्स्वयमपि हस्ते कमल भ्रामयन् नूपुरशब्दानुकरणत्वेन शनै शनैरागच्छतीत्यर्थ । किंच। स्वामिनीमिलनानुकूलकृतिकरणत्वेन तादृग्भावसम्पादकत्वादत्यार्तिनिरूपकत्वेन यावद् दर्शनादिक न भवति, तावत्कोमलत्वशीतलत्वतापहारकत्वादिगुणयुक्तत्वेन स्वोपकारकृतिमत्त्वात्कमल धारितवानित्यर्थ । तथा सति तादृग्दर्शनापेक्षापूर्वकत्वेन तद्विना स्थातुमशक्यत्वादेता कमलविशिष्टमाधुर्यं प्रार्थयन्तीति भाव । अथवा। भक्तानामखिलप्रकाशानुकूलकृतिकरणत्वेन तद्रसलभ्यत्वात्सुखसेव्यत्वबोधनाय तेषा रसात्मके हृदि चक्षुषि वा स्थापयितु तयोग्यतासूचनत्वेन चरणे कमलाभिध चिह्न दधातीत्यर्थ। तेन मन पूर्वककटाक्षावलोकनादिव्यापारसत्त्वेन चरणपकजानुरजकत्वाद्रसाधायकत्वेनैतास्तत्कमल प्रार्थयन्तीति भाव । अत एव 'जीवैर्नमनातिरिक्त कर्तु न शक्य'मिति शिक्षयानामिस्तथैवोक्त 'प्रणतदेहिना'मिति। यद्वा। भगवन्मुखस्यैव कमलत्वेन निरूपणत्वाचन्द्रवत्तापहारकत्वेन नेत्रद्वारेणैव लावण्यामृतपानकरणत्वेन च ताभि तथैवोच्यत इत्यर्थ । तेन मुखाबुजदर्शनादेव तासा तापशान्तिर्नान्यथेति मरणसभावनैव निश्चीयत इति भाव । अत एव 'जलरुहानन चारु दर्शये'त्युक्तम्। अथवा। कमलगतकमलनिरूपकत्वेन तादृग्भागविशिष्टत्वेन तद्विकासित्वेन च सौरभादिगुणदायकत्वान्नेत्रयो कमलत्वोपमयोस्तत्सादृश्य घटत एवेत्यर्थ । अत एव कमले कमलोत्पत्तिरिति विरोधालकारत्वेन भगवति तयोच्यत इत्यर्थ । यद्वा। स्वस्य साक्षाद्भगवदास्यरूपत्वेन मुखारविन्दरसभोक्तृत्व नेत्राम्बुजे स्यादपि तैयव रसपानकरणादधुना वैसादृश्यनिरूपकत्वेन

पूर्वानुभूतं सर्वं स्मृत्वा ताभिः सह तथैव भावयन्तीति भावः। एवं धर्मविशिष्टमाधुर्यं निरूप्य धर्मिविशिष्टमाधुर्यं निरूपयन्ति मधुराधिपतेरखिलं मधुरमिति। यत्र यत्सम्बन्धेन लीलौपयिकपदार्थानां प्रतिक्षणं माधुर्यं नवं नवं जायत इति तदधिष्ठातरि किमिति न, किंतु वर्तत इति काकूक्तिनिश्चयोपक्रमत्वाद्भगवतो मधुराधिपतेः सर्वसामग्रीसहितस्य यदखिलं तत्सर्वं मधुरमेवेति प्रार्थना विषयीक्रियत इत्यर्थः।

एव स्वदुःखं विस्मृत्य तद्दुःखं वीक्ष्य वा पुनः। तत्कथां शुश्रुवुः सर्वाः स्वदुःखालापनाशिकाम्॥१॥
तथैव श्रीमदाचार्याः समाधाय मनः स्वयं। तथैव सहसा स्थित्वा दौर्मनस्यं त्यजन्ति वै॥२॥

**गोपी मधुरा लीला मधुरा युक्तं मधुरं भुक्तं मधुरम्।**
**हृष्टं मधुरं शिष्टं मधुरं मधुराधिपतेरखिलं मधुरम्॥ ७॥**

**गोपी मधुरेति।** क्रीडार्थमेव यामेकां गृहीत्वा रहस्येतद्व्यतिरिक्तास्त्यक्त्वा तदनुगुणत्वेनैव तादृग्वनान्तरं प्राप्य तत्तत्सामग्रीसम्पादनरताः केशप्रसाधनादिकं कृत्वा नृत्यादिकं करोतीति भगवानेतयैवोपभुक्त इत्यर्थः। एवं सति तदनुकरणत्वेनैव कदाचित् युष्माकमपि तदाज्ञया वा जीवनसम्पादनं करिष्यतीति तामेव प्रार्थयन्तीति भावः। अथवा। तामपि त्यक्त्वा ततोऽपि वनान्तरं गत्वा स्वयमेव तिष्ठति, न तु तत्सहित इति, तर्हि तामेव दृष्ट्वा सर्वास्तत्रैव स्थिता भवन्तीति, यद्येतन्मिलनार्थं भगवानागमिष्यति तदाऽस्माकमपि दर्शनं भविष्यतीत्येतत्साहाय्यकर्तृत्वेन तां मिलनोत्साहकतया माधुर्यविशिष्टां तां प्रार्थयन्तीति तदर्थयन्तीति तदर्थमेव सर्वं कुर्वन्तीत्यर्थः। तथा सत्येतद्गत्यनुसारेणास्माकमपि गतिर्भविष्यतीति नातः परमेनां त्यक्त्वा गन्तुं शक्नुवन्तीति सहसा प्रवृत्तिरिति भावः। यद्वा। पुलिनस्थत्वात्पुनर्दर्शनमेतत्कृतोपकारत्वेनैव ज्ञायत इति नो चेत्पूर्वमेव कुत्र न जातमिति तात्कालिकानुभवजन्यज्ञानवत्त्वेन तद्भावात्मकत्वादेवास्माकं कार्यसिद्धिर्भविष्यतीति निश्चित्य तादृग्गुणविशिष्टां प्रार्थयन्तीति भावः। अथवा। गुणगानादिककृतिकरणत्वेन चैतदर्थमेवाविर्भूतो भगवान्, नास्मदर्थम्, नो चेत्-गुणगानं तावदस्माभिः पूर्वमेव कृतं परन्तु नाविर्भूत एव ततोऽनुमीयते, किं चिन्न यो यस्याधीनः स तु तदनुकूलं करोत्येवेत्यर्थः। तथा सति तादृग्दर्शनाऽभिलाषयुक्तत्वेन तत्फलप्राप्त्यर्थं तावदेतस्या एवाश्रयकरणं युक्तमिति भावः। यद्वा। स्वस्य साक्षाद्भगवत्स्वरूपसन्नियोगविशिष्टत्वेन तत्कृतनिकरणत्वेनाधुना विप्रयोगरसानुभवकरणार्थं तत्तदवस्थापन्नत्वेन तादृशीभिः सह तथैव प्रार्थयन्तीति भाव। एवं गोपीमाधुर्यं निरूप्य लीलामाधुर्यं निरूपयन्ति **लीला मधुरेति।** जात्येकवचनाभिप्रायेण भगवतो लीला मधुरेत्येतावदुक्तम्। किन्तु ता असंख्याता एव। यत्र यथापेक्षितरूपाणि तथा निरूपणार्थं च दशविधलीलासु तासां प्रविष्टत्वादित्यर्थः। यतो भगवदवतारा असंख्याताः सन्तीति तथा लीलायाः साक्षात्स्वरूपात्मकत्वात्ता अप्यसंख्याता इत्यर्थः। किंच। यथाऽवतारिण्येव सर्वेऽवतारास्तिष्ठन्ति तथा दशविधलीलास्वेव सर्वा एव सन्निशन्तीत्यर्थः। तत्र

बाल्यानुकृतिकरणत्वेनैव भगवतः सर्वलीलाकरणत्वात्तत्तद्भावपूरकत्वेन भक्तानामभिलषितार्थदानकारणत्वेन च तास्तथैव प्रार्थयन्तीति भावः । अथवा । गोचारणादिलीलायामेव सर्वरसानुभवकर्तृत्वात्तादृग्भक्तमनोरथादिपूरकत्वेन कुंजान्तरीयरसदातृत्वेन च भावपूर्वकटाक्षावलोकनादिकं यथा भवति तथा रमणं करोतीत्यर्थः । तथा सति बाल्यानुकरणत्वेनैव सर्वाज्ञातलीलाया रसदातृत्वेन तादृशानुग्रहं करोतीति पूर्वानुभूतं स्मृत्वैव विप्रयोगकालक्षेपार्थं लीला मधुरेति तां प्रार्थयन्तीति भावः । यद्वा । नृत्यविशिष्टरासलीलाकरणत्वेन तासां हृदि रसाविर्भावत्वादैश्वर्यादिगुणविधायकत्वं, नो चेद्बहुनर्तकीयुक्तो नृत्यविशेषो रास इति लक्षणाऽनुपपत्तेः । तस्मादेतदनुरोधित्वेनैव रासकरणं नान्यथेत्यर्थः । तथा सति संयोगविशिष्टरसानुभवजनकत्वेन जीवनसंभावनत्वादिति भ्रमरकीटन्यायेन लीलात्मकाः सत्यस्तामेव प्रार्थयन्तीति भावः । अत एव 'रासलीलैकतात्पर्य' इति श्रीमत्प्रभुभिः सर्वोत्तम एवोक्तम् । एवं लीलामाधुर्यं निरूप्य युक्तमाधुर्यं निरूपयन्ति युक्तं मधुरमिति । युक्तं योजनं, तेन भक्तानां तत्तल्लीलारसानुभवकरणार्थं तत्तत्क्रियाव्यापारसत्त्वेन यथाऽधिकारप्राप्तानां लीलासमुद्रे योजितवानित्यर्थः । अन्यथाऽक्षरात्मकानन्दमध्यपातित्वेन भक्तानां लीलान्तराप्रवेश एव न संभवतीति कथं साक्षाद्भजनानन्दव्यतिरेकेण फलानुभव इति तत्प्रार्थयन्तीति भावः । अत एव 'भजनानन्दयोजन' इत्युक्तम् । अथवा । बाललीलायामेव भक्तानां तथा करणाय यशोदोत्संगलालितः सन् तासामन्तर्भावं ज्ञात्वा भगवान्सर्वकरणसमर्थत्वेन तादृशगोपनरीत्या तदनुकूलकृतिमत्त्वेन च सर्वाभीष्टदातृत्वात्साक्षात्स्वरूपानन्द एव तान् योजयतीत्यर्थः । तथा सति तत्स्वरूपानन्ददानकरणत्वेनैव तत्तद्भाववतीनां जीवनसम्भावना, नान्यथा । केवलशैशवानुकरणत्वेन तादृशीनां जीवनं संभवतीति भावः । अत एव 'आत्मानं भूषयांचक्रु'रित्युक्तम् । यद्वा । भगवान्वनविहारादिकमपि कुर्वन् भक्तानां तत्तत्संकेतस्थलादिसूचकत्वेन तत्तद्रसानुभवकरणार्थं क्रीडाव्याजेन गोचारणादिक्रियाज्ञसत्वादेतासां हितकरणत्वेन तांस्तथैव योजितवानित्यर्थः । तथा सति योजनक्रियानुकूलव्यापारकृतिमत्त्वेन सर्वासामभिलाषपूरकत्वात्तादृग्माधुर्यविशिष्टयोजनं ताः प्रार्थयन्तीति भावः । अथवा । स्वस्य साक्षाद्भगवत्स्वरूपात्मकत्वेन योजनक्रियाद्यनुसन्धानेन पूर्वानुभूतलीलानुस्मरणात्तापभावजननात्क्षममपि तन्निर्वाहार्थं तादृग्भावविशिष्टं योजनमेव विभावयन्तीति भावः । एवं युक्तमाधुर्यं निरूप्य मुक्तमाधुर्यं निरूपयन्ति मुक्तं मधुरमिति । मुक्तं मोचनं, तदपि भक्तानां हितकरणार्थमेव, न त्वन्यथा, चेन्नैवं विप्रयोगरसः कथं संभविष्यतीति संयोगरसपुष्टिकरणार्थमेव त्यागकरणमुचितमित्यर्थः । किंच । न हि भगवांस्तासां त्यक्त्वा गतः ? किन्तु परोक्षस्थित एव, तदनुकूलकृतिकरणत्वेन मानादिदोषनिवारकत्वेन च शुद्धभावसम्पादकत्वात्स्वरूपानन्ददानकरणत्वाच्च तथा करोतीत्यर्थः । तथा सति त्यागकरणादिकृतिमत्त्वेन तादृशरसोपलब्धित्वात्तदधिकरसाधायकत्वेन जीवनसम्भवत्वाच्चास्तथैव प्रार्थयन्तीति भावः । अत एव

भगवता गीतायामित्युक्तम् । 'यत्तदग्रे विषमिव परिणामेऽमृतोपम'मित्यत्रापि तथैवोक्तमिति निश्चयादित्यर्थः । अथवा । श्रीमन्नन्दराजस्यान्याश्रयकरणत्वेन मर्यादामार्गीयदोषातिग्रस्तत्वात्तद्धितकरणत्वेन भक्तिमार्गीयत्वसम्पादनार्थं सर्वथा निरोधकरणार्थमेव च वरुणनीतत्वे तत्रापि मोचितवान् । किंच पुनस्तद्वदेवानुग्रहकरणार्थमेव मर्यादाग्रहणस्य दोषावहत्वादिति ज्ञापनाय कश्चिन्महाहिना ग्रस्तत्वेन स्वाश्रयकरणार्थमेव स्वनामोच्चरणमात्रेणैव मोचनं यथा भवति तथैव रक्षितवानित्यर्थः । तथा सति आश्रयानुकूलकृतिकरणत्वेनैव दोषनिवृत्तिर्नान्यथेति ज्ञात्वा कृष्ण कृष्णेति पूर्वं चरितं स्मारं स्मारं तदाश्रयप्रापकत्वेन तदेव प्रार्थयन्तीति भावः । अत एव 'अन्यस्य भजन तत्र स्वतोगमनमेव च'त्युक्तमाचार्यवर्यैः । यद्वा । मुक्तमित्यत्र भावे क्तस्तेन रासादिकृतिकरणत्वेन मण्डलीकृतभक्तानां हस्तग्रन्थ्यवलम्बितत्वेन तत्तद्भावानुसारिनृत्यकरणत्वेन च कदाचित् हस्तग्रहणमपि समवतीति पुनस्तथैव जात इत्यर्थः । तथा सति त्यागकरणरसाधायकत्वेन तादृशकटाक्षावलोकनादिभिः क्रीडाकरणत्वेनाधुना तद्विना स्थातुमशक्यत्वात्कथमपि तदेव माधुर्यविशिष्ट प्रार्थयन्तीत्यर्थः । अथवा । स्वस्य भगवत्स्वरूपसन्नियोगशिष्टत्वेन तद्भावनिरीक्षणत्वात्तदनुभवेन जीवनसमावन नान्यथेति विचार्य विप्रयोगरसानुभवकरणत्वेन तादृग्भाववतीभिः सह तदेव प्रार्थयन्तीति भावः । एव मुक्तमाधुर्यं निरूप्य दृष्टमाधुर्यं निरूपयन्ति **दृष्टं मधुरमिति** । भगवतो लीलात्मकत्वात्तद्रसपूरणत्वेन भक्तानामानन्ददानार्थं सांकेतिकभावसूचनार्थं च गोचारणादिसमय एव तादृगीक्षणैः प्रणयपूर्वकावलोकन यथा भवति तथा भगवान् करोतीत्यर्थः । नोचेद्वनविहारादिक तावत्किमर्थं, गोचारणकरण तु गोपैरपि भविष्यतीति तत्रस्थानामपि स्थावरजगमानां लीलास्थानां भावपूर्वककटाक्षावलोकनार्थं गमनादिक करोतीति तद्भावापन्नत्वेन तास्तादृग्दर्शनमेव प्रार्थयन्तीति भावः । तथा सति यत्र बाल्यदशायामपि तादृग्दर्शनापेक्षत्वं तत्र साक्षाद्रसात्मकम्योगदशायां भगवतः किमु वाच्यमिति कैमुतिकन्याय उक्तो भवतीत्यर्थः । अथवा । दिवा वनगतत्वात्सायमागमनसमये तादृग्विप्रयोगासहमानतया तद्भावपूर्वकत्वेन तथार्तिंयशास्त्वप्रियाणां प्रत्यगावलोकनादिक तथैव करोतीत्यर्थः । तथा सति तादृग्भावनवतीनां साक्षात्फलानुभवकर्त्रीणां तद्दर्शनमेव जीवनसम्पादक नान्यदित्यन्यथाभावनसम्पादकं नान्यदित्यन्यथाभावमुरीकृत्य सर्वास्तथैव प्रार्थयन्तीति भावः । यद्वा । स्वस्य साक्षाद्रसात्मकस्वरूपत्वेन तत्तद्दर्शनानुकूलकृतिकरणत्वज्ञानेन तादृशसुखोपलब्धित्वाद्विप्रयोगरसाक्रान्तदेहत्वेन तादृशीभिः सह माधुर्यविशिष्ट तदेव भावयन्तीति भावः । एव दृष्टमाधुर्यं निरूप्य शिष्टमाधुर्यं निरूपयन्ति **शिष्टं मधुरमिति** । शिष्टमवशिष्ट, तत्तु सेवैव, यावद्धर्मो स्वचरणाश्रिता भक्तिर्न स्थाप्यते तावदवशिष्टपुरुषार्थत्वमेव, तस्मात् वृन्दावनप्रवेशकरणत्वेन तत्रैव भक्तिः स्थापितेति भगवदीयानां हृदि भक्तिस्थापनकरण तु युक्तमेवेत्यर्थः । अत एव 'वैष्णवा वनस्पतय'इति श्रुतेः । एव सति वृन्दाया भक्तिरूपत्वात्तदङ्गीकारेणैव तत्रस्थानां सर्वेषा-

मप्यगीकारो भावनीय इति भाव । अथवा । यदि भक्तानां हृदि चरणस्थापन न कुर्यात्तदा भक्तिराहित्यात् गुणगानादिकमपि ते कथ करिष्यन्तीति विचार्य स्वस्यावशिष्टपुरुषार्थस्थापकत्वेन तथैव कीर्तिवर्णन कारयित्वा तद्धृदि चरणस्थापनेनैव भक्ति स्थापितेत्यर्थः । अत एव अवशिष्टपुरुषार्थस्थापनार्थमेव 'प्राविशत् गीतकीर्ति'रित्युक्तमाचार्यवर्यै. । यद्वा । स्वस इतरित्वोपपादितभक्तानुग्रहकार्यकर्तृत्वेन भक्तवत्सलत्वात्तत्प्रार्थनाया पूर्वमेव तत्रापि भूयोदर्शनमात्रेणावशिष्टपुरुषार्थत्वख्यापनार्थं तद्दु ग्वहरण भक्तिस्थापन च करोतीत्यर्थ. । कर्तुमकर्तुमन्यथाकर्तुंसमर्थत्वेनैतद्भावस्य गजराजोद्धृतावेव स्पष्टीकृतत्वात्तत एव भावनीयमित्यर्थ । तथा सत्येतावन्मात्रनिश्चयकरणत्वेनैव भगवानस्माकमपि प्रार्थनाव्यतिरेकेण साहाय्य भविष्यतीति ज्ञात्वा तादृक् शिष्टमेव प्रार्थयन्तीति भाव । अथवा स्वस्य साक्षाद्भगवत्स्वरूपसन्नियोगशिष्टत्वात्तत्समानधर्मकरणत्वेन यदि स्वेनैव दैवजीवानामुद्धृतिर्न क्रियत इति तदा स्वस्याप्यवशिष्टपुरुषार्थत्वात्तत्स्थापनकरणार्थं तदेवानुकूलकृतिकरणत्वेन तदाज्ञया प्रादुर्भूतत्वेन च तदुपकरणात्तादृग्भाववतीभि. सह माधुर्यविशिष्टमेव प्रार्थयन्तीति भाव । अत एव 'दैवी सृष्टिर्यथो च मा स्या'दिति वल्लभाष्टके प्रभुभि स्तुति क्रियत इत्यर्थ । एव धर्मविशिष्टमाधुर्य निरूप्य धर्मिविशिष्टमाधुर्य निरूपयन्ति **मधुराधिपतेरखिलं मधुरमिति** । साक्षात्स्वरूपानुभवकरणत्वे प्रमाणप्रयोजनाभावात्र धर्मधर्मिणोरेकजातीयत्वादिति न्याया लीलाना भगवद्धर्मात्मकत्वादेव मधुरत्वप्रतीतिस्तत्र तदधिपतौ किं वाच्यमिति निश्चयेन भगवतो मधुराधिपतेर्यदखिलमवशिष्ट तत्सर्वं मधुरमेवेति प्रार्थनापूर्वक मधुराधिपतेरखिल मधुरमित्युक्तम् ।

एव प्रापचिक त्यक्त्वा भगवद्बोधसिद्धये । लीलात्मिकास्तास्ता सर्वा जाता एव न सशय ॥१॥
तथैव श्रीमदाचार्या स्वकीयाना हिताय च । लीलात्मक फल ज्ञात्वा निरोध साधयन्ति हि ॥२॥

**गोपा मधुरा गावो मधुरा यष्टिर्मधुरा सृष्टिर्मधुरा ।**
**दलितं मधुरं फलितं मधुरं मधुराधिपतेरखिलं मधुरम् ॥ ८ ॥**

**गोपा मधुरा** इति । गा पान्तीति गोपास्तद्रक्षाकरणत्वेन भगवतोपि वल्लभास्तै साक भगवान् क्रीडतीति, यत स्वयमपि गोपालस्तस्मात्समानशीलव्यसनवत्त्वेनैतत्सामानाधिकरण्यात्परस्परसानुभवजनकत्वेन तादृशमण्डलीमध्यस्थित एव सर्वदा वर्तत इत्यर्थ । किंच । वने भोजनादिकमपि तदैव करोति यदा ते सर्वे गोपाला स्वस्वभोजनपात्र गृहीत्वा स्वसन्मुख एव तिष्ठन्तीति तादृशप्रीतिजनकत्वेन तथा विलास करोतीत्यर्थ । तथा न्ति गीतहासकटाक्षाद्यवलोकनादिकरणत्वेन तादृशान्तरमभावसूचकत्वात् भगवत सुखाधायका इति माधुर्यविशिष्टास्तान्प्रार्थयन्तीति भाव । अथवा । स्वकीया अन्तरगा ये गोपाला कृष्णादयस्ते भगवदाज्ञया वनक्रीडाया तदनुकूलकृतिकरणत्वेन यद्यत् कुर्वन्ति तत्पुन. सायमागमनानन्तर गृहगमनव्यतिरेकेण रसवशात् स्वामिनीनामग्रे सर्वं सूचयन्ती

एव तान्
त्यर्थ । तेन विप्रयोगजनिततापनिवर्तकत्वेन तद्वचनश्रवणमात्रोपजीवकत्वात्तत्समय एव तान्
दृष्ट्वा तथैव प्रार्थयन्तीति भाव । यद्वा। भगवतो विप्रयोगदशायामपि स्वस्यान्तरगत्वाद्यल्कि-
चित्स्वास्थ्यकरणार्थमविचार्य प्रियत्वकरणेन स्वामिनीकथितवृत्तान्तप्रार्थनाकरणत्वेन प्रभावपि
प्रिया भवन्तीत्यर्थ । तथा सति प्रणयरसावबोधककार्यकर्तृत्वेन भावोद्दीपकत्वात्तादृशोप-
कृतिकरणभाववत्त्वेन ताभिस्तथैव प्रार्थितास्त इति भाव । अथवा । स्वस्य सा-
क्षाद्रसात्मकसन्नियोगशिष्टत्वेन कृपाकटाक्षादिसूचकत्वेन च स्वस्याप्यन्तरगकार्यकर्तृ-
त्वात्तत्प्रियतमकृतिमस्व ज्ञात्वा स्वसतोषाधायकत्वेन तान् प्रति तथैव प्रार्थयन्तीति
भाव । एव गोपमाधुर्यं निरूप्य गवा माधुर्य निरूपयन्ति **गावो मधुरा** इति । गावो
लीलात्मिका भगवदनुभावज्ञा वेणुगानश्रवणमात्रेण यत्र तृणादिक चरन्ति तत्र सर्वं त्यक्त्वा
भगवन्निकट एव शीघ्रमागत्य मुखावलोकनपूर्वक यथा भवति तथा कर्णपुटोत्तमितत्वेन मुहु
र्मुहुस्तदधरामृतपान सादरपूर्वक कुर्वन्तीत्यर्थ । किंच, आगमनसमये साक्षान्नादानन्द
प्रविष्टत्वात्तदनुभवेनानन्दभरात् भूमावपि पय सिञ्चनादिक कुर्वन्त्य शनै शनैरागच्छ
न्तीति वा । तथा सति भावपूर्वकागमनकरणत्वेन साक्षात्स्वरूपानुभव यथा कुर्वन्ति तथा
वयमपि करिष्याम इति ज्ञापनाय तथा प्रार्थयन्तीति भाव । अत एव 'गावश्च कृष्णमुखनिर्गत
वेणुगीते'त्यत्र तथैव निरूपितमाचार्यवर्यै । अथवा, यत्र यत्र गाव' स्वेच्छया पशुजातीयत्वाद
विचार्यत्वेन तृणलोभात्स्वत एव गच्छन्ति तत्र तत्र भगवान् गोपालै सह क्रीडा कुर्वन्
तदनुगुणत्वेन वने वने चारयन् गच्छतीत्यर्थ । नहि केवल तद्व्यतिरेकेण कदाचिद्वनगम
नमेव करोतीति भावो ज्ञाप्यते । किंच । कदाचिन्मात्राप्रेषितसख्यानीतभोजनराहित्येन
क्षुभुक्षित सन् मार्गमध्य एव गोदोहनादिक कृत्वा तदनुभवज्ञानजन्यत्वेन ता अपि तथैव
तिष्ठन्तीति गोपास्तद्वत्सान्पय पाययित्वा स्वयमपि पान करोतीत्यर्थ । तथा सति परस्पर
भावानुकूलकृतिकरणत्वेन पूर्व भगवन्मुखारविन्दोद्धताधरसीधुपानमेताभि' कृतमधुना
भगवता क्रियत इति विशेषानुभवकरणत्वेन ता एता प्रार्थयन्तीति भाव । यद्वा । स्वस्य
साक्षाद्भगवदास्यरूपत्वात्तदुभयरसोपयोगित्वेन तत्तल्लीलानुभूतत्वादधुना विप्रयोगरसाभि
निवेशेन स्वसमानशीलाभि सह तथैव विभावयन्तीति भाव । एव गवा माधुर्यं निरूप्य
यष्टिमाधुर्यं निरूपयन्ति **यष्टिर्मधुरेति** । यदा भगवान् गोचारणादिक करोति तदा
वेणुवेत्रव्यतिरेकेण कदापि न गच्छति किन्तु तत्सहित एव तत्तत्कार्यकरणार्थं तदुपयोगस्या
वश्यकत्वात्तद्वेषधारणत्वेनैव वनगमन करोतीत्यर्थ । किंच । 'यथा राजा तथा प्रजे ति
न्यायादेतदनुरोधित्वेन सर्वे गोपालास्तदनुकरणत्वेन यष्टिं गृहीत्वा स्वस्वगोधनानि पुरस्कृत्य
तथैव भगवता सह गमन कुर्वन्तीत्यर्थ । तेन करावलम्बितयष्टिकाग्रहणेन कदाचित्
स्वम्वासे तद्धारणत्वेन च कदाचिदपूर्वैव श्रीर्भवेदिति पूर्वानुभूतत्वात् माधुर्यरूपा यष्टिं प्रार्थ
यन्तीति भाव । अथवा । बालस्वभावानुकूलकृतिकरणत्वेन क्रीडार्थमेव तद्धारण तेपि

तदर्थमेव धारयन्तीति परस्परं तैः साकं प्रत्यहं क्रीडतीत्यर्थः । तथा सति आत्मरसानुभूत-लीलादर्शनोद्गमत्वाद्विशेषरसाधायकत्वेन ताः सर्वास्तामेव प्रार्थयन्तीति भावः । यद्वा । स्वस्य साक्षाद्रसात्मकस्वरूपात्मकत्वात्तत्कार्योपकरणत्वेन तदुद्दुःखानुभूतित्वात् विप्रयोगरसानु-भवकरणार्थं तादृगवस्थापन्नत्वेन कथमपि कालक्षेपार्थं पूर्वानुभूतं सर्वं स्मृत्वा तदेव प्रार्थयन्तीति भावः । एवं यष्टिमाधुर्यं निरूप्य सृष्टिमाधुर्यं निरूपयन्ति **सृष्टिर्मधुरेति** । सृष्टिः लीलास-ष्टिस्तत्करणं तु भगवतैव संभाव्यते नान्येन तस्मात् लीलार्थं व्रजस्थानां सृष्ट्वा स्वरूपानन्ददानार्थं स्वयमपि तत्रैव प्रविशतीत्यर्थः । अन्यथा लीलानां तदात्मकत्वमेव न स्यादतस्तद्व्यतिरेकेण स्वयमपि स्थातुं न शक्यत इति सर्वदा तदंतःपातित्वेन भक्तानां तद्रसानुभवं कारयित्वा स्वयमपि करोतीत्यर्थः । अत एव 'तत्सृष्ट्वा तदेवानुप्राविश'दिति श्रुतिः । अथवा साक्षात्स्वरूपानन्दानुभव-स्तत्रस्थानामेव नान्येषां, कुतो जीवानामसम्भावितत्वात्तदतिरिक्तानां साक्षात्स्पर्शाभावाच्च तथा न संभवतीत्यर्थः । अन्यथा 'जीवाः स्वभावतो दुष्टा' इति कथं वदेयुः ? तस्मात् लीलासृष्टि-स्थानामेव साक्षादंगसंगित्वात्तत्स्वरूपानन्दानुभवकरणत्वेन भजनानन्दानुभूतरसप्राप्तित्वात् तत्रैव भजनोन्मज्जनादिकरणत्वेन जलमीनवत् स्थिता भवन्तीत्यर्थः । अत एव 'अन्यैव काचित्सा सृष्टिर्विधातुर्व्यतिरेकिणी'ति तथैवोपदिष्टत्वात् । तथा सति भजनानन्दनिमग्नत्वेन भगवदधीनत्वात्पूर्वोक्तदृष्टांतत्वात्तेनैव न संभवति नान्ययेति भावः । अथवा । स्वस्य साक्षाद्रसात्मकस्वरूपसन्नियोगशिष्टत्वेन दैवोद्धारप्रयत्नीकृतत्वात्स्वद्वारैणैव तदुपयोगकर-णत्वेन यमुनासेवातः तनुनवत्वादिकरणत्वेन च स्वकीयानां तद्योग्यतानिरूपकत्वेन वा तथैव प्रार्थयन्तीति भावः । एवं सृष्टिमाधुर्यं निरूप्य दलितमाधुर्यं निरूपयन्ति **दलितं मधुरमिति** । दलितं दलनं, तत् दुष्टदैत्यानां, तदर्थमेव भगवानवतीर्णो जात इति व्रजरक्षाकरणत्वेनैव तत्र स्थितिकरणत्वाद्यदा पूतनादिदैत्यागमने जातं तदैवानन्तशक्तिमत्त्वेन तन्निराकरणीयत्वाद्बाल्यदशायामतिविस्मयकरणत्वेन भक्तानामभयदानं करोतीत्यर्थः । किंच । गोचारणादिक्रीडायामपि केश्यादिदुष्टनिवारकत्वेनैव स्वस्य गोपालत्वं नोचेद्यदि दुष्टदैत्यादिभिर्वनमाक्रमितं स्यात्तदा गावस्तत्र कथं प्राप्ता भविष्यन्तीति सा क्रीडैव न भवि-ष्यतीति, तत्करणं त्वावश्यकमिति नामार्थसार्थकत्वेन तथा करोतीत्यर्थः । किंच । कालिन्दीजलपानकरणानन्तरं गोपालास्तद्विषमूर्छिता जाताः, गावश्च तथा क्रन्दनं कुर्वन्तीति, तद्दृष्ट्वा भगवान् भक्तवत्सलतया तस्या निर्दोषकरणार्थं सद्य एव जले प्रविश्य दुष्टकालिय-दलनं करोतीत्यर्थः । तथा सति गोरक्षाकरणत्वेन योगबलान्नामसार्थकत्वं स्वस्मिन्नेव प्रति-फलितं, नान्ये गोपालास्तथा भवन्तीति तत्र रूढिरेव वक्तव्येति भावः । अथवा । गाः पान्तीति गोपास्तान् लातीति गोपालः, पुनस्तद्रक्षाकरणे तथैव नामसार्थकत्वात्तदनेकभयनिवारकत्वेन दुष्टदलनादिकं स्वयमेव करोतीत्यर्थः । तथा सति पूर्वानुभूतलीलास्मरणमात्रेण विप्रयोगर-साभिनिविष्टत्वात्तद्रक्षाभिलाषकरणत्वेन माधुर्यविशिष्टदलनं प्रार्थयन्तीति भावः । यद्वा ।

श्रीगोवर्धनयागकरणत्वेनान्यसाधनराहित्यात् भक्तानां तथा निरोधकरणत्वेन स्वशरणाय-
तानां रक्षामेव करोतीत्यर्थः । तथा सति यथेन्द्रहितकरणार्थमेव तद्दर्पदलनादिकं करोति
तथास्माकमपि हितकरणार्थं मानादिदर्पदलनं करोत्वित्याशयेन दलनमेव प्रार्थयन्तीति
भावः । अथवा । स्वस्य साक्षाद्रसात्मकस्वरूपत्वात्तत्तत्कार्यानुगुणत्वेन लीलारसजनकत्वाद-
धुना विप्रयोगरसानुकूलकव्यापारकृतिमत्त्वेन तादृग्रसानुभवकरणार्थं तादृशीभिः सह
तथैव प्रार्थयन्तीति भावः कटाक्षितः । एवं दलितमाधुर्यं निरूप्य फलितमाधुर्यं निरूप-
यन्ति **फलितं मधुरमिति** । भगवान्मधुर एव भक्तानां हृदि प्रतिफलित इति भक्तानु-
कूलकृतिकरणत्वेन सदानन्दवाचकत्वात् कृष्ण इति फलात्मकनामत्वेन तत्फलसम्पादनार्थ-
मेव श्रीमन्नन्दराजभवने प्रादुर्भूतो जात इत्यर्थः । किंच । भक्तानां लीलामध्यपातित्वेन
तत्सहितलीलासामग्रीः पूर्वं विधाय क्रीडास्थानत्वात् तत्करणार्थं श्रीमद्गोकुल एव पश्चात्स्वयं
प्रादुरासीदित्यर्थः । किंच । लीलानां स्वरूपात्मकत्वात्स्वरूपस्य तदात्मकत्वादितरेतरयोन्या-
श्रयत्वेनैव स्थितिकरणत्वाद्भक्तानां तन्मध्यपातित्वेन च तदाश्रयाधीनत्वादपि स्वस्य लीला-
करणमुचितमिति तद्रूपेण फलितमित्यर्थः । तथा सति भक्तानां फलसम्पादकत्वेन तद्रूपत्वे-
नैव प्रादुर्भूतत्वात्सर्वदा तदनुभवकरणत्वेन रसाधायकत्वात् तास्तथैव प्रार्थयन्तीति भावः ।
अथवा । प्रादुर्भावानन्तरमपि स्वामिनीनां भावपूर्वककटाक्षावलोकनादिभिः कृत्वैव स्वरूपपो-
षणं नान्यथेति तद्भावात्मकत्वेनैव स्थितिकरणत्वात्प्रतिक्षणपोषणत्वेन वृद्धौ सत्यां तत्रैव
फलितमित्यर्थः । तथा सति परस्परसमानाधिकरणत्वेन तद्भावानुरूपफलीकरणत्वेन
च तत्पूर्वानुभूतत्वात्तद्व्यतिरेकेण स्थातुमशक्यत्वाच्चाधुना तदनुभवकरणार्थं फलितमेवैताः
प्रार्थयन्तीति भावः । यद्वा, उद्बुद्धशृंगाररसात्मकदशायामपि वेणुकूजनत्वेन नादामृतस्य
स्वामिनीनां हृदये प्रविष्टत्वात्तदनुभूतत्वेन तथा स्वरूपाभिन्नत्वेन तद्रसपानकरणत्वेन च
मुखावलोकनं कुर्वन्तीत्यर्थः । किंच । अन्यासक्तिनिराकर्तृत्वेन स्वसमानशीलानां संबोध्य
यदनुभूतं स्वरूपं तदेव विज्ञापयन्तीत्यर्थः । तथा सति स्वभाग्याऽभिलापपूर्वकांकुरितत्वेन
स्वस्वभावस्निग्धनकरणत्वेनापि क्रमवशात्पुष्पानुभवकरणानन्तरं फलत्वेनेदमेव प्रतिफलितमिति
भावः । अत एव 'अक्षण्वतां फलमिदं न परं विदाम' इति स्वप्रियाभिस्तथैवोक्तमित्यभिप्राय-
ज्ञापकत्वेन पूर्वानुभूतत्वादेतास्तथैव प्रार्थयन्तीति भावः । यद्वा, स्वस्य साक्षाद्रसात्मक-
स्वरूपसन्नियोगशिष्टत्वेन तत्फलानुभूतत्वात् प्रतिक्षणं तत्तत्स्मरणकर्तृत्वेन विप्रयोगरसा-
विर्भावित्वात्स्वयमपि तादृग्भाववतीभिः सह लीलाविशिष्टं फलितमेव प्रार्थयन्तीति
भावः । अत एव 'लीलाभिः फलितं भजे व्रजवनीशृंगारकल्पद्रुम'मिति प्रभुभिस्तथैवो-
क्तम् । एवमुपक्रमोपसंहारपूर्वकं धर्मनिशिष्टमाधुर्यं निरूप्य धर्मिविशिष्टमाधुर्यं निरूपयन्ति
**मधुराधिपतेरखिलं मधुरमिति** । सर्वदा तन्मध्यपातित्वेन लीलात्मकत्वाद्यनामेदकर-
णत्वेन स्थितिस्तत्र यन्मध्ये पातितस्तद्ग्रहणेन गृह्यत इतिन्यायाद्धर्माणां माधुर्यनिरूपणत्वे

किं वाच्यमिति तदधिपतेर्भगवतो मधुराधिपतेर्यदखिलं लीलात्मकं तत्सर्वं मधुरमेवेत्यर्थः । तथा सति तद्रसास्वादपूर्वकं यथा भवति तथा विप्रयोगानुभावं तत्तन्माधुर्यं निरूपणात्मकं सर्वदा विभावयन्तीति भावः ।

इति श्रीवल्लभाचार्यकृपया प्रकटीकृतम् ।
एतन्निगूढमाधुर्यं मधुराष्टकसंज्ञकम् ॥ १ ॥
विठ्ठलाधीशचरणाश्रयणात्सर्वदा मया ।
भावात्मकं हि माधुर्यं प्रत्यहं चानुभूयते ॥ २ ॥
तदीयानां हितार्थाय निश्चित्यैवं निरूपितम् ।
पश्यन्तु सर्वथा विज्ञा न तु तद्भावविच्युताः ॥ ३ ॥
श्रीविठ्ठलाधीशपदाम्बुजातात्सञ्जातभक्त्या विशदीकृतं यत् ।
तदेव माधुर्यमिहाद्भुतं वै मधुव्रतानां मधुराकृतीनाम् ॥ ४ ॥

॥ इति श्रीवल्लभविरचिता मधुराष्टकविवृतिः सम्पूर्णा ॥

---

१. इयं टीका श्रीहरिरायाणामिति केचिद्वदन्ति, तन्नैव युक्तमिति प्रतिभाति । श्रीहरिरायकृता अन्यैव मधुराष्टकटीका मत्सन्निधौ वर्तते यतः । श्रीहरिरायकृतटीका तु श्रीमत्प्रभुचरणकृतमधुराष्टकविवृते विवृतिः', इयं तु स्वतन्त्रटीका वर्तते । अस्या भाषासाम्यं श्रीगोकुलनाथप्रकटितसर्वोत्तमस्तोत्र 'बड़ी' टीकया सह बहु वर्तते, अत एव इयं टीका श्रीवल्लभकृतेति कल्प्यते ।

श्रीकृष्णाय नमः ।

श्रीगोपीजनवल्लभाय नमः ।

श्रीमदाचार्यचरणकमलेभ्यो नमः ।

# मधुराष्टकम् ।

## श्रीरघुनाथकृतविवरणसमेतम् ।

---

यन्नामरूपमधिकं माधुर्यैकनिधीकृतम् ।
तं नत्वा तन्मधुगिरं गायामि मधुराष्टकम् ॥ १ ॥

स्वरूपमात्रैकनिष्ठात्यन्तरङ्गभक्तानां स्वानुभवैकवेद्यं सपरिकरं स्वरूपमाधुर्यमधरादिप्रत्यङ्गगतमतुल्यत्व निशिष्यावर्णनीयं पुनः पुनरनुभवार्थमनुवादपूर्वकं प्रार्थयन्त इवाहुः **अधरं मधुरमिति ।**

**अधरं मधुरं वदनं मधुरं नयनं मधुरं हसितं मधुरम् ।**
**हृदयं मधुरं गमनं मधुरं मधुराधिपतेरखिलं मधुरम् ॥ १ ॥**

अत्र मधुरपदं सर्वत्र सर्वेन्द्रियास्वाद्यं रूपं लक्षयत्यधरादीनां, तेन दर्शनस्पर्शनपानचुम्बनदंशादिषु प्रार्थनीयं ममास्तु इत्यर्थः सम्पन्नो भवति । मधुरसिमन्नस्तीति मधुरम् । 'ऊषसुषिमुष्कमधो रः' इति रः, धरणं धर इति व्युत्पत्त्या धृ धारण इति धातो रूपम् । अच्प्रत्ययान्तमप्प्रत्ययान्तं वा । तेन यस्मिन् दृष्टे न धरो धैर्यादिधारणं यस्मादिति अधरम् । लीलावसरविशेषसम्बन्धि ज्ञेयम् । यथा लोके शर्करादिमाधुर्यमास्वाद्य मधुरमित्येव ब्रूते, न त्वनुभवनमपि, अशक्यत्वादेवमत्रापीति भावः । **वदनं मधुरमिति ।** पूर्वोक्तदर्शनादिक्रियाविषयत्वप्रार्थनमिदं वचनम् । **नयनं मधुरमिति ।** जात्यभिप्रायेण रसैक्येन वोभयोरेकवचनम् । अत्र यथोचितक्रियाविषयत्वमेव, न तु यावत्पूर्वोक्तविषयत्वम् । **हसितं** भावोद्दीपनमुन्मादकं च । तत्र नयनसुखोभयसाधारणं ज्ञेयम् । **हृदयं** श्रियैकरमणं वक्षःस्थलं, तच्चालिङ्गनालङ्करणादिषु, विविधभावविशिष्टं मनो वा हृदयं ज्ञेयम् । **गमनं** गोचारणचौर्याद्यर्थं निकुञ्जगृहं गन्तुं मानापनोदनार्थं च ज्ञेयम् । 'रसो वै सः' इति श्रुतेर्मधुररसात्मकस्वरूपस्याखिलं सर्वं यद् वक्तुमशक्यम्, अवाच्यं गुह्यं वा । यद्वा, अखिलमन्यूनं पूर्णरसमिति यावत् तादृशमित्यर्थः । अन्यत्रापि 'यद्यत् विभू-

---

१ अभ्यवमिति पाठः ।

तिमत् सत्त्व'मिति वाक्यात् तत्सम्यन्धाधीनमेव सर्वेषां माधुर्यम् । अतो मधुराधिपतेरिति पाठः प्रकरणानुरोधादपि युक्ततमः । मधुराधिपतेरित्यपि क्वचित् पाठः ॥ १ ॥

**वचनं मधुरं चरितं मधुरं वसनं मधुरं वलितं मधुरम् ।**
**चलितं मधुरं भ्रमितं मधुरं मधुराधिपतेरखिलं मधुरम् ॥ २ ॥**

**वचनं मधुरमिति** । बाल्यक्रीडायामव्यक्तमधुरमस्पष्टोच्चारणात् स्खलद्गीष्ट्वाद्वा । बाल्योत्तरकालीनं सार्वदिकमपि ज्ञेयम् । **चरितं** चेष्टितं बाल्यचरित्रं सकलचरित्रं वा । चौर्येण दधिनवनीतादिभक्षणं वा । **वसनं** पीताम्बरं, कम्बुकोष्णीषाद्याच्छादनं, नीपनिकुञ्जादिस्थितिर्वा । **वलितं** वेष्टनं, भावे क्तः । क्रीडाया व्रजवधूनां दधिदुग्धनवनीताद्याहरणमार्गरोधनमित्यर्थः । रासमण्डले अन्यदा कदाचित् लीलावसरे ताभिर्वलितं रूपं वा । अस्मिन् पक्षे कर्मणि क्तः । भावेऽपि ज्ञेयम् । केषाञ्चित् भक्तानामवस्थाविशेषमाज्ञाय तदर्थमकस्मात् सखीननुक्त्वैव यद्गमनं तच्चलितमुच्यते । भावे क्तः । पूर्वोक्तगमनाद्भेदकमिदमेव । **भ्रमणं** वियोगकालीनेतस्ततोऽनवस्थया गतिः । यथा श्रीगीतगोविन्दे 'हरि हरि हतादरतया' इत्यादौ । 'तव विरहे वनमाली'त्यपि । अथवा गवादीनामन्वेषणार्थं प्रतिगोष्ठगमनम् । अथवा प्रयोजककर्तृत्वविवक्षयाणिजन्तत्वेनान्येषां लोकवेदव्यवहारे चित्तविक्षेपकरणं तदर्थमपि, अरण्यादिगमनं वा । मधुराधिपतेरिति पूर्ववत् ॥ २ ॥

**वेणुर्मधुरो रेणुर्मधुरः पाणिर्मधुरः पादौ मधुरौ ।**
**नृत्यं मधुरं सख्यं मधुरं मधुराधिपतेरखिलं मधुरम् ॥ ३ ॥**

**वेणुरिति** । अधरसुधापूरितो वाद्यमानो हस्तस्थितो वा, संकेतस्थितभक्ताह्वानकरो वा । सायं गोपुरं सरं व्रजप्रवेशसमये अलकव्याप्तगोरजांसि रेणुरित्युच्यते । तेन तल्लक्षितकुन्तलानामपि ज्ञेयम् । यद्वा 'धन्या अहो अमी आल्य' इत्याद्युक्तश्चरणकमलपराग एव रेणुः । **पाणिर्गु**त्सक्रीडायाम् । 'तासामतिविहारेण'त्याद्युक्तभक्तास्यमार्जनगोपृष्ठप्रोञ्छनगोदोहनादिषु वा । **पादौ** भक्तहृदयदेशस्थापनवन्दननर्तनादिषु । **नृत्यं** नाट्यं रासे वृन्दावने श्रीगोकुलादौ नवनीतभक्षणातुरतायां च । **सख्यं** समानशीलव्यसनत्वम् । तच्चौर्यादौ ज्ञेयम् । मधुराधिपतेरिति पूर्ववत् ॥ ३ ॥

**गीतं मधुरं पीतं मधुरं भुक्तं मधुरं सुप्तं मधुरम् ।**
**रूपं मधुरं तिलकं मधुरं मधुराधिपतेरखिलं मधुरम् ॥ ४ ॥**

**गीतं** गानं तत्कृतं भक्तविषयकं, भक्तकृतं तद्विषयकं वा । **पीतं** पानमधरादीनाम् । गोष्ठे गोपैः सह क्षीरपानं वा । वक्षगतं पिशङ्गत्वं वा । **भुक्तं** भोजनं यशोदानन्दगोपादिकारितम् । निमन्त्रितस्य गोपस्त्रीभिः तद्गृहे वा । भोजनावशिष्टं वा ।

---

१ अ-जेयमव्याजेनेतिपाठः । २ चित्तविक्षेपकरणमिति पाठः । ३ सङ्केतितप्रेष्ठेति पाठः । ४ कुन्तलानपीति पाठः । ५ भुक्तेति च पाठः । ६ रमीति वा पाठः । ७ पुच्छेति पाठः । ८ न्यासेति पाठः । ९ भोजनादिशिष्टेति भोजनाविशिष्ट च पाठः ।

श्रीगोवर्धनोद्धरणेन अनन्यगतिकभक्तरक्षणं वा । सुप्तं शयनं निकुञ्जे किसलयकुसुमादिरचितशैय्यायाम् । कण्ठाश्लेषणादिप्रकारनिशिष्टं वा । रूपमादर्शादिप्रतिबिम्बितम् । उरसि कुरङ्गमदादिलिखित चित्रितं वा । तिलकं ललाटे कस्तूरीचन्दनादिरचित मुक्तारत्नादिमयं वा । दर्शनीयं गोपिकागीतोक्त 'दर्शनीयतिलको वनमाले'त्यादिना । मधुरेति पूर्ववत् ॥ ४ ॥

**करणं मधुरं रमणं मधुरं तरणं मधुरं हरणं मधुरम् ।**
**वमितं मधुरं शमितं मधुरं मधुराधिपतेरखिलं मधुरम् ॥ ५ ॥**

**करणं** कृतिः स्वीकार इत्यर्थः । **रमणं** रतिः बालक्रीडा वा । **तरणं** प्लवनं यमुनाजले व्रजस्त्रीभिः सह, नौकया पारावारगमनक्रीडायां वा । **हरणं** व्रतचर्यायां व्रजकुमारीणां वाससाम्, रुक्मिणीपारिजातादीनां वा । **वमितं** अन्त स्थितभावोद्गिरणं चर्विततांबूलादिदानम् । **शमितं** शमनकरण भक्ततापादीनां, दावाग्नेरसुरधर्मादीनां वा । मधुरेति पूर्ववत् ॥ ५ ॥

**गुञ्जा मधुरा माला मधुरा यमुना मधुरा वीची मधुरा ।**
**सलिलं मधुरं कमलं मधुरं मधुराधिपतेरखिलं मधुरम् ॥ ६ ॥**

**गुञ्जा**फलानि भूषणादिषु । **माला** वनमाला गुञ्जाया वा । **यमुना** विहारावसरे । **वीचयो** जलोत्क्षेपणक्रीडायां कमलादिभिर्वा । **सलिलं** निदाघक्रीडाश्रमेण कालिन्दीजलपाने । **कमलं** परस्पर प्रीतिप्रहारलीलायाम्, अलङ्करणादिषु वा ॥ ६ ॥

**गोपी मधुरा लीला मधुरा युक्तं मधुरं मुक्तं मधुरम् ।**
**दृष्टं मधुरं शिष्टं मधुरं मधुराधिपतेरखिलं मधुरम् ॥ ७ ॥**

**गोपी** जात्यभिप्रायेण गोप्य इति ज्ञेयम् । सर्वेनैव तासामेवंविधत्वम् । **लीला** भावपूर्वकदधिमन्थने बाहुकटिनितम्बस्तनालङ्कारादिचाञ्चल्यकृतिः, तत्सम्बन्धिरासादयो वा । **युक्तं** योजनमङ्गप्रत्यङ्गानां रहसि । यद्वा, युक्तं समाप्यवसानां 'पूर्वं यत्र सम त्वये'-त्याद्युक्तप्रकारेण । अथवा, युक्तं गोदोहनावसरे वत्सयोजन गोपादयोः । मुक्तं मोचनम्, पूर्वोक्तवत्सादीनाम् । नीवीकञ्चुक्यादीनां वा । गाढमालिङ्ग्य सीत्कारपूर्वक सन्ततभक्तानां ताप नाशयित्वा मोचन, तत्क्रियात इति वा । **दृष्टं** साकूतेक्षणम् । भगवतो भक्तानां च परस्पर प्रत्येक च । **शिष्टं** शासन चौर्येण नवनीताद्याहरणाय यावदहं यथेष्टमेमि तावत् कोपि आयाति चेत् शीघ्रं मह्यं निवेदय यथा पलाय्य गच्छामि धर्तु न शक्नोति न वदिष्यसि चेत् प्रहरिष्यामि चौर्याहृत वस्तु न प्रयच्छामि इत्येव बिभीषिकापूर्वकं एवंविधमाज्ञापन गोपबालकेषु । यद्वा, 'गोप्यो गोरसविक्रयार्थमखिला' इत्याद्युक्तदानप्रसङ्गेन धर्षणाज्ञापनम् ॥ ७ ॥

---

१ रहमीति पाठ । २ सलोत्क्षेपणेति पाठ । ३ भमितेति पाठ ।

**गोपा मधुरा गावो मधुरा यष्टिर्मधुरा सृष्टिर्मधुरा ।**
**दलितं मधुरं फलितं मधुरं मधुराधिपेरखिलं मधुरम् ॥ ८ ॥**

**गोपा** गवाह्वानादिषु । गावो हुङ्कारपूर्वक भगवत्समीप अन्योन्योपमर्देन आगच्छन्त्य दुह्यमाना वा । वेणुनाद श्रुत्वा सर्वेर्घोनिमिषदृग्भिर्निरीक्ष्यन्त्यो वा । **सृष्टि**र्धेनुवत्सतरीप्रसवबाहुल्यम् । **यष्टि**रुत्पथगतिनिवारणे पशूनाम् । दानप्रसङ्गे तासां निवारणे दधिकलशिकाभेदने वा । कदम्बमूले चरणावष्टम्भनेन स्थितौ वा । **दलितं** विशारण विकास इति यावत् । तन्मुखनयनादीनाम् । दैत्यदलन वा, कामोपमर्दो वा । **फलितं** आविर्भाव., भक्तानामपेक्षितकान्तस्थले चित्ताभिज्ञतया प्राकट्यम् । **मधुरेति** पूर्ववत् ॥ ८ ॥

मधुराष्टकमाधुर्यमवधार्य सुधाधनम् । निर्धनो धनितां याति न याति निधन क्वचित् ॥ १ ॥

**इति श्रीमद्वल्लभनन्दनचरणैकशरणरघुनाथकृतौ मधुराष्टक-विवरणं सम्पूर्णम् ।**

१ संवेष्टपति पाठ । २ सुधाधरमिति पाठ । ३ निगमतरो प्रतिशाख मृगित परित परं ब्रह्म । मिलितमिदानीमङ्के गोकुलपङ्केरुहाक्षीणाम् ॥ १ ॥ इत्यधिकम् ।

# मधुराष्टकतात्पर्यम् ।

**श्रीकृष्णाय नमः ।**

स्वरूपगुणभेदेन द्विविध गानमुच्यते । स्वरूप तु रसानन्दस्तथा लीलासमन्वित ॥ १ ॥
गुणास्तु भगवद्धर्मा स्वरूपोत्कर्षहेतव । ते परोक्षे हि गीयन्ते स्वास्थ्यहेतुतयात्मन ॥ २ ॥
स्वरूप तु तदानन्द प्रत्येकावयवैस्तथा । तत्तल्लीलाश्रयत्वेन माधुर्येण विभाव्यते ॥ ३ ॥
निरूप्यते समानेषु यदा स्वातु न शक्यते । तदा तेनैव रूपेण विरहे तापसयुते ॥ ४ ॥
निरूपण रसस्यात्र माधुर्येणैव जायते । तस्यानुभववेद्यत्वान्न रूपेण कथञ्चन ॥ ५ ॥
अत संभूय ता सर्वा स्वानुभूतरसात्मकम् । वियोगभावे स्व भाव वर्णयन्ति हरिं तथा ॥६॥
तत्तल्लीलान्तरङ्गस्या स्मृत्वा स्मृत्वा तदङ्गकम् । अतो माधुर्यरूपेण रूपयन्ति परस्परम् ॥ ७ ॥
एकाधर तथैवान्या वदन नयन परा । एवमग्रेऽपि विज्ञेय सपूर्णे मधुराष्टके ॥ ८ ॥
एतदेवास्मदाचार्यैरतिगुप्त निरूपितम् । तद्भावभावन सिध्येदेतद्ग्रन्थार्यभावनात् ॥ ९ ॥
सद्बोधोऽपि निजाचार्यकृपया प्रभुकारित । तादृशैर्ज्ञापितो वापि भवेन्नैवान्यथा क्वचित् ॥ १० ॥

इति श्रीहरिदासविरचित मधुराष्टकतात्पर्यं समाप्तम् ।

परिशिष्टम्

श्रीमद्-वल्लभाचार्य-महाप्रभूपदिष्टा

# शिक्षासार्धत्रयश्लोकी



गोस्वामि-श्रीद्वारिकेशकृत-संस्कृतटीकोपेता



# उदाहार

श्रीमदाचार्यचरण सन्यस्त लइ काशी पधार्या, त्या श्रीगोपीनाथजी श्रीगुसाइजी सकुटुंब ससेवक दर्शनार्थ पधार्या. दण्डवत् करी विनति करी के अमारु शू कर्तव्य ?

श्रीमदाचार्यचरणे सार्धत्रयश्लोकमा ज स्वपुत्रोने शिक्षा कही, अपुर्व शिक्षारत्नो अर्प्या, स्ववशमा आ चार वहिर्मुखताना लक्षणो प्रवेश न करे अने आ उपदेश तद्द्वारा सेवकोमा प्रसरे ए हेतुथी आ सार्धत्रयश्लोकी उपदेशी अने प्रभुए तेमा प्रकट थइ साक्षी पुरी.

**(१) वहिर्मुख थवामां मुख्य चार कारणो छे, अन्याश्रय, असमर्पितवस्तुभोग, असदालाप, दु संग** आ चारथी अवश्य सावधान रहेवु, जो आ चार पैकी एक पण थइ जाय तो वहिर्मुख थइ जवाय वहिर्मुखे करेली सेवा प्रभु ना ज स्वीकारे एटलेथी पण ना अटके, वहिर्मुखने कालप्रवाह भक्षण करी जाय, माटे आ चारथी दूर रहेवु, प्रभुसन्मुखे हमेशा रहेवु आ एक शिक्षा थई. (२) प्रभुमा लौकिकभाव न करवो (३) प्रभुमा अस्मद्भावित अलौकिक भाव ज राखवो, ते ज भाव प्रभुप्रसन्न करवामा उपयुक्त छे. (४) सर्वथा सर्वभावथी सेवा करवी. आ चार शिक्षा सार्धत्रयश्लोकीथी उपदेशी. प्रभुए तेज समये प्रकट थइ दोढ श्लोक उपदेश्यो, आ दोढ श्लोकमा पुष्टिमार्गीय स्वरूप आवयु, ब्रह्मास्त्रचातकन्याये जो श्री-गोपीजनवल्लभमा **विश्वास** होय तो जरुर कृतार्थ करी दे. विश्वास ज मुख्य साधन छे. जो साधनवल त्यजी विश्वासनु ज अवलबन करे तो शरणादिथी आरभी स्वाश्रयदानपर्यंत सर्व फल प्रभुज सिद्ध करी दे.

दोलोत्सव, स. १९७८ } **शास्त्री चिमनलाल, शास्त्री हरिकृष्ण**

॥ श्रीकृष्णाय नमः ॥

# श्रीशिक्षापद्यानि

## श्रीद्वारिकेशकृतटीकया समलङ्कृतानि



श्रीमद्वल्लभपादाब्जद्वयं हृदि सुशीतलम् ।
निधाय शिक्षापद्यानि विवरिष्ये यथामति ॥१॥

अत्रैवमाख्यायिका । कदाचित् श्रीमदाचार्यचरणैरडेलग्रामे वसद्भिर्भगवदाज्ञात्रयानन्तर "*यदा कर्मविपाकेशु लोकेषु निरयात्मसु । विरागो जायते सम्यङ् न्यस्ताग्नि प्रव्रजेत्तत' इत्याद्येकादशस्कन्धोक्तप्रकारेण सकलशास्त्राविरोधित्रिदण्डसन्यास कर्तुं विचारित । तत्र च भार्याज्ञापेक्षिता । ततश्च मुहुर्याचनेपि भार्यादिभिराज्ञाया अदाने शीघ्र स्वपर्णशालाज्वालन कृतम् । तदाग्न्युपद्रव दृष्ट्वा निर्गच्छत शिघ्र निर्गच्छतेति उक्ते करककोपीनौ गृहीत्वा निर्गता सवत् १५८७ ज्येष्ठकृष्णदशम्याम् । ततोग्निरपि शान्तः । ततो यथाविधि सन्यास गृहित्वा अडेलग्रामात् काश्यामागता । पुर्वज्ञाद्वयस्य देहदेशपरित्यागो पाक्षिक दोषपरिहारेण कर्तुं मासमात्रमनशन कृतवन्त दिनाष्टक मौनव्रतञ्च । तदा श्रीगोपीनाथाः श्रीमत्प्रभुचरणाश्च ससेवकाः सकुटुम्बाः श्रीमदचार्यचरणाना दर्शनार्थमडेलग्रामात् काश्यामागत्य श्रीमदाचार्यचरणान् दृष्ट्वास्माभि. कि कर्तव्यमिति प्रार्थितवन्तः । तदा भाषणस्य त्यक्तत्वात् श्लोकत्रयं सार्धं लिखित्वा श्रीमत्प्रभुचरणेभ्यो दत्तवन्तः । तदत्र सार्धपद्यत्रयं शिक्षासार्धत्रयश्लोकीति ख्यात तद्व्याकरोमि ।

---

*११–१८–१. १ विधिना. पाठ

तथा हि । अथ श्रीमदाचार्यचरणाः श्रीमत्प्रभुचरणानुद्दिश्य स्वकीयं निगूढं सिद्धान्तं निजजनान् शिक्षयितुमुपदिशन्ति यदा बहिरिति ।

**यदा बहिर्मुखा यूयं भविष्यथ कथञ्चन ।**
**तदा कालप्रवाहस्था देहचित्तादयोप्युत ॥ १ ॥**
**सर्वथा भक्षयिष्यन्ति युष्मानिति मतिर्मम ॥**

अस्मिन्मार्गे बाहिर्मुख्यं मुख्यो दोषः । तच्चानेकधा भवति, परं तत्र कारणचतुष्टयं मुख्यम् । अन्याश्रयासमर्पितवस्तुभोगासदालापासत्सङ्गरूपम् । तदेतत्सर्वं हृदि कृत्वाहुः **कथञ्चनेति** । केनापि प्रकारेण यदा यूयं भगवतो **बहिर्मुखा भविष्यथ तदा कालप्रवाहस्था देहचित्तादयोप्युत युष्मान् सर्वथा भक्षयिष्यन्ति, मे मतिरित्येवं** त्वन्वयः । **यदा** यस्मिन्काले, तेन सदा भगवत्साम्मुख्येन स्थातव्यमिति शिक्षा कृता । अन्यथात्वे बाधकमाहुस्तदेति । तस्मिन्नेवसमये युष्माकं देहचित्तादयो *भगवच्चरणामृतचरणरेणुसंपादिता अपि कालप्रवाहस्था भविष्यन्ति । उतेति वितर्कयामहे । अतोपि विशेषबाधकमाहुः **सर्वथेति** । सर्वैः प्रकारैर्युष्मान् **भक्षयिष्यन्ति** स्वान्तः पातयिष्यन्ति, युष्मान् भगवदीयानपि जीवान् कालप्रवाहस्थान् करिष्यन्ति । इदं महद्बाधकम् । अत्र स्वमतिं प्रमाणत्वेनाहुरिति **मतिर्ममेति** । ननु सेवा तु क्रियत एव तयैव सर्वं सेत्स्यति किं बाहिर्मुख्येनेत्याशङ्क्य प्रमेयमाहुर्न **लौकिकः प्रभुरिति** ।

**न लौकिकः प्रभुः कृष्णो मनुते नैव लौकिकम् ॥ २ ॥**
**भावस्तत्राप्यस्मदीयः सर्वस्वश्चैहिकश्च सः ।**

**कृष्णः** फलात्मा **प्रभुः** सर्वकरणसमर्थो लौकिको न भवति,

---

*भगवच्चरणरेणुसंपादिता इतिपाठः

अतो लौकिक वाहिर्मुख्येन कृत सेवन न मनुते । न तस्य बहिर्मुखजन-कृतसेवापेक्षास्ति । ननु भावसहितसेवापेक्षा तु भविष्यतीत्याशङ्क्य साधनमाहुर्भावस्तत्रेति । तत्रापीति भावयुतसेवायामपि । अस्मदीयः अस्मद्भावित एव भावो भगवत्प्रसादस्य साधनमलौकिकत्वात् । स भाव कीदृशो भविष्यतीत्याशङ्क्य स्वकीय भावमाहु सर्वस्व इति । * ईश्वरस्य सर्वस्वम् । चकारेण सर्वपरमपि । ऐहिक इति इह लोके भव पदार्थ । चकारेण पारलौकिक स प्रभुरिति ।

**परलोकश्च तेनायं सर्वभावेन सर्वथा ।। ३ ।।**

**सेव्य. स एव गोपीशो विधास्यत्यखिल हि न. ।। ३३ ।।**

इति श्रीमदाचार्योक्तशिक्षापद्यानि.

**परलोक.** स्वर्गादि । चकारेणाय लोकस्तेन भगवतैव नान्येन । एतावत्युक्ते भगवानाविर्भूतस्तदा भगवन्त प्रदर्श्य सेवाफलरूपमाहु-**रयमिति,** परदृश्यमानो भगवान् **स एव गोपीश**, यो गोपीना मदमानयोर्जातयोस्तिरोभूय गोपीस्तनू कृतवान् । दैन्याविष्कारे आविर्भूय गोपीनामीश पालको जात । अत **सर्वथा** सर्वे प्रकारै 'श्रद्धऽमृतकथाया म' इति सन्दर्भोक्तेन **सर्वभावेन** पतिपुत्रादिभावेन सर्वे-षामिन्द्रियाणा भावेन क्रियया निरोधलक्षणोक्तया वा **सेव्यः,** कायवा-ङ्मनोभिर्भजनीय । एव क्रियमाणे **नो**ऽस्माक सर्वथा प्रपन्नाना **स एव गोपीश अखिल** शरणादारभ्य स्वाश्रयसम्पादनपर्यन्त **विधास्यति** करिष्यति । एवञ्चात्र वाहिर्मुख्य कदापि न कर्तव्य, सदा भगवत्सा-म्मुख्येन स्थातव्यमित्येका शिक्षा । प्रभौ लौकिकभाव न कर्तव्य इत्यपरा । भावोप्यस्मत्सवन्धी विधेय इत्यन्या । सर्वथा सर्वभावेन सेव्य इतीतरा । इति शिक्षाचतुष्टय सिद्धम् । एव श्रीमदाचार्यचरणा श्रीमत्प्रभुचरणेभ्य शिक्षापत्र दत्वा 'तृतीयोऽलोकगोचर' इति तृतीयाज्ञा

---

*सर्व स्वस्य ( आत्मन )

साधयितुमाषाढशुक्लद्वितीयाया तृतीयायुक्तायामासुराणां व्यामोहाय गङ्गाप्रवेशं कृतवन्तः। तदा सर्वैस्तत्रत्यैरप्यग्निपुञ्जो जलान्निष्क्रम्य विहायसा गच्छन् स दृष्ट इति किल श्रूयते।

सार्धश्लोकत्रयी शिक्षा श्रीमदाचार्यनिर्मिता।
द्वारिकेशेन विवृता श्रीमद्गोस्वामितुष्टये॥ १॥

इति श्रीमद्वल्लभाचार्यचरणरेणुधनिना श्रीमद्गोस्वामिद्वारिकेश्वरेण विरचिता शिक्षापद्यटीका संपूर्णाभवत्।

